TRIVANDRUM SANSKRIT SERIES.
No. XXXVI.

# कुमारसम्भवः

महाकविश्रीकालिदासप्रणीतः ।

# THE KUMÂRASAMBHAVA

## KÂLIDÂSA

WITH THE TWO COMMENTARIES

PRAKÂSIKÂ OF ARUṆAGIRINÂTHA

AND

VIVARAṆA OF NÂRÂYAṆA PAṆḌITA

EDITED BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts, Trivandrum*

**Part III.—6, 7 & 8 Sargas.**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM
PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.
1914.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३६.

---

# कुमारसम्भवः

## महाकविश्रीकालिदासप्रणीतः

श्रीमदरुणगिरिनाथविरचितया कुमारसम्भवप्रकाशिकया
नारायणपण्डितविरचितेन कुमारसम्भवविवरणेन च
समेतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

**त. गणपतिशास्त्रिणा**

संशोधितः ।

तृतीयः सम्पुटः — ६, ७, ८ सर्गाः ।

स च

अनन्तशयने

**महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन**

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

---

कोलम्बाब्दाः १०८९, क्रैस्ताब्दाः १९१४.

॥ श्रीः ॥

महाकविश्रीकालिदासप्रणीतः

# कुमारसम्भवः

श्रीमदरुणगिरिनाथविरचितया कुमारसम्भवप्रकाशिकया

श्रीनारायणविरचितेन कुमारसम्भवविवरणेन च

समेतः ।

---

## अथ षष्ठः सर्गः ।

**अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।**
**दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ १ ॥**

(प्रकाशिका)

अथ 'अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः' इत्यङ्कावतारन्यायेन सर्गान्तरमवतारयति —

**अथेति** । अथशब्दो हिमवद्विषयस्य कन्याप्रार्थनालक्षणस्य भगवद्व्यापारस्योपक्रमद्योतकः । विश्वात्मने सर्वभूतहृदयस्थं जानानायेत्यर्थः । मिथो रहसि । मे इति कर्मणि षष्ठी । भूभृतां नाथो निर्णयहेतुः क्रियतामित्यर्थः ॥ १ ॥

---

१. 'न्यकाप्रा' ङ. पाठः. २. 'न' ङ. पाठः. ३. 'याचनस्यो' क. पाठः.

## (विवरणम्)

इत्थमुपवर्णितस्य[1] नायकयोः परस्परानुरागस्य समागमलक्षणं फलयोगं दर्शयितुं तदुपोद्घातभूतः षष्ठः सर्गोऽयमङ्कावतारन्यायेनावतार्यते । पूर्वाङ्कावसानप्रकृतानां पात्राणामविभागेनैवापरस्मिन्नङ्के प्रवेशोऽङ्कावतारः । यथोक्तं दशरूपके — 'अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः' (प्र. १. श्लो. ६२) इति । अत्र तु पूर्वसर्गान्तप्रकृतयोर्नायकयोर्नायिकासखीनां चाविभागेनैवावस्थानप्रतिपादनादङ्कावतारन्यायः । तत्र देवे मनोरथानुरूपं प्रसन्ने सति देवी किमकरोदित्याकाङ्क्षायामाह —

अथेति । अथ गौरी मिथः विश्वात्मने सखीं सन्दिदेश । अथ 'अद्यप्रभृति' (स.५. श्लो.८६) इत्यादिवाक्यैर्भगवत्प्रसादनिश्चयानन्तरम् । हिमवद्विषयस्य कन्याप्रार्थनारूपस्य भगवद्व्यापारस्योपक्रमद्योतको वायमथशब्दः । गौरी पार्वती । मिथः रहसि । पूर्वावस्थितात्[2] प्रदेशाद् विजनं किञ्चन प्रदेशान्तरमाश्रित्येत्यर्थः । विश्वात्मने त्रैलोक्यात्मकाय सर्वभूतहृदयगतं सर्वमप्यर्थं यथावज्जानानायेत्यर्थः । अनेन सन्देशस्य लोकस्वभावसिद्धतत्कालौचित्यमात्रपरत्वं व्यज्यते । सखीम् आत्मनः प्रियवयस्याम् । अनेन सन्देशहरणयोग्यत्वमुक्तम् । सन्दिदेश सन्दिष्टवती । सन्देशप्रकारमाह — भूभृतां नाथः मे दाता प्रमाणीक्रियताम् इति । भूभृतां नाथो हिमवान् । मे इति कर्मणि षष्ठी । दाता दानकर्ता सन् । प्रमाणशब्देनात्र प्रत्यक्षादिप्रमाणगतमर्थनिर्णायकत्वं लक्ष्यते । मद्दानरूपस्यार्थस्य हिमवानेव निर्णयहेतुर्विधातव्य इत्यर्थः । प्रमाणीक्रियतामित्यभूततद्भावे च्विः । यद्यपि दाननिर्णय इदानीमेव संवृत्तः, तथापि हिमवत्कृत एव मत्प्रदाननिर्णय इति लोकप्रतीतिमात्रं क्रियताम् । तथैव हि कुलवधूविवाहक्रमानुसरणं भवेदिति भावः । इतिः प्रकारवाची । उक्तप्रकारेण सन्दिदेशेति पूर्वेणान्वयः ॥ १ ॥

**तया व्याहृतसन्देशा सा बभौ निभृता प्रिये ।**
**चूतयष्टिरिवाभ्याष्ये[3] मधौ परभृतोन्मुखी ॥ २ ॥**

---

१. 'स्य नायिकाना' इ. पाठः. २. 'वस्थि' इ. पाठः. ३. 'भ्याशे' मुद्रितकोशपाठः.

(प्रकाशिका)

तयेति । निभृता निर्वचना । प्रिय इति विषयसप्तमी । आभाष्ये आलपनार्हे । परभृता कोकिला । अत्रोपमानरूपोऽर्थः प्रौढोक्तिमात्रनिष्पन्नशरीरो द्रष्टव्यः ॥ २ ॥

( विवरणम् )

इत्थं देव्या सन्दिष्टा सखी तत्सन्दिष्टमर्थं भगवते व्यजिज्ञपदितीममर्थं भङ्ग्यन्तरेणाह —

तयेति । तया प्रिये व्याहृतसन्देशा सा बभौ । तया सख्या । प्रिय इति विषयसप्तमी । प्रिये विषय इत्यर्थः । व्याहृतसन्देशा व्याहृतः कथितः सन्देशो यस्याः सा तथा । अत्र व्याहरणे सखी कर्त्री । अन्तर्भूतण्यर्थो वा । व्याहारित इत्यर्थः । अत्र सख्याः करणत्वम् । 'हृक्रोरन्यतरस्याम्' (१. ४. ५३) इति कर्मसंज्ञाभावपक्षे करणसंज्ञा । सख्या व्याहारितः सन्देशो यया इति विग्रहः । सा पार्वती बभौ शुशुभे । अत्रोपमामाह — मधौ आभाष्ये परभृतोन्मुखी चूतयष्टिः इव । मधौ वसन्ते आभाष्ये आलपनार्हे सति । परभृतोन्मुखी परभृता कोकिला तां प्रत्युन्मुखी अभिमुखी । आत्मना कर्तव्यं प्रियालापं तया कारयितुमित्यर्थात् सिध्यति । चूतयष्टिः चूतलतेव । यथा चूतलता चिरप्रार्थिते वसन्ते कान्ते समागते सति तत्कालोचितं तद्विषयं प्रियालापं किञ्चिदप्यनाचरन्ती कुसुमपल्लवादिभिः प्रसादचिह्नैरात्मनः प्रसादं प्रकाशयन्ती तद्विषयं प्रियालापं कोकिलाभिमुखी भूत्वा तयैव कारयति, तथेयमपीत्यर्थः । उपमया स्वमुखतो वचनादपि सखीमुखेन वचनस्य मनोहारित्वातिशयो ध्वन्यते । उपमानोपमेययोः साधारणं धर्ममाह — निभृतेति । निर्वचना किञ्चिदप्यनालपन्तीत्यर्थः । अत्रोपमानरूपोऽर्थः प्रौढोक्तिमात्रनिष्पन्नशरीरो द्रष्टव्यः ॥ २ ॥

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम्।
ऋषीञ्ज्योतिर्मयान्[1] सप्त सस्मार स्मरशासनः ॥ ३ ॥

(प्रकाशिका)

स इति। इतिशब्दस्तथाशब्दस्य प्रतिज्ञाप्रकारत्वं द्योतयति। कथमपीति, विरहासहत्वात्[1]। ज्योतिर्मयान् ज्योतिःस्वरूपान्। स्मरणमत्रै[2]तैरयमर्थो निर्वोढव्य इत्येवंरूपम्। वरबन्धवो हि कन्यावरणेऽधिकारिणः। बन्धवश्च देवस्य सन्तः। सदाचारप्रवर्तकाश्च[3] ते लोकस्य। वक्ष्यति च देवस्तदेव—'भवत्प्रणीतमाचारमामनन्ति हि साधवः' (श्लो. ३१) इति ॥ ३ ॥

(विवरणम्)

प्रियासन्देशश्रवणानन्तरं देवस्य तदुचितां प्रवृत्तिमाह—

स इति। सः स्मरशासनः तथा इति प्रतिज्ञाय उमां कथमपि विसृज्य सप्त ऋषीन् सस्मार। सः य एवं सन्दिष्ट इत्यर्थः। स्मरं कामदेवं शास्ति अनुशास्तीति स्मरशासनः। अत्र स्मरशासन इत्युक्तं, न तु स्मरनाशन इति। अनेन देवस्य कामदहनव्यापारो न द्वेषाद्, नाप्यात्मनः कामानुभवपराङ्मुखत्वाद्, नापि देवीवैमुख्याद्, एवं महाजनविरोधस्त्वया न कर्तव्य इत्यनुशासनार्थमेवेति द्योत्यते। तथाशब्दः प्रतिज्ञाप्रकारवाची। तथाशब्दस्य प्रतिज्ञाप्रकारवाचित्वं द्योतयितुमितिशब्दः। प्रतिज्ञाय प्रतिज्ञां कृत्वा। उमां पार्वतीम्। कथमपि कथञ्चिद्, विरहासहत्वादिति भावः। विसृज्य तत्समीपं परित्यज्येत्यर्थः। सप्त सप्तसङ्ख्याभाजः ऋषीन् महर्षीन्। मरीच्यादीन् सप्तर्षीनित्यर्थः। सस्मार स्मृतवान्। अयमभिप्रायः—पू-

---

१. 'हनात्' ङ. पाठः. २. 'र्थादत्र तै' घ. पाठः. ३. 'श्च लोकस्य ते।' ग. घ. ङ. पाठः. ४. 'वः भ' घ. ङ. पाठः. ५. 'पि यथाक' ङ. पाठः.

वेश्लोकोक्तप्रकारेण देव्या सन्दिष्टो देवस्तत्सन्दिष्टमर्थं तत्प्रसादानुरूपमेव तथै-वेत्यभिधाय लोके वरबन्धूनामेव कन्यावरणेऽधिकारात् सदाचारप्रवर्तकाना-मेव सतां देवबन्धुत्वात् सप्तर्षीणां च सदाचारप्रवर्तकत्वस्य 'भवत्प्रणीत-माचारमामनन्ति हि साधवः' (श्लो. ३१) इत्यत्र देवेनैव हि वक्ष्यमाणत्वाद् अत्यन्तबन्धुभूतैः सप्तर्षिभिरेवायमर्थो मया निर्वर्तयितुं शक्य इत्यवधार्य सद्यः सम्प्राप्तये मनसा तान् सञ्चिन्तयामासेति । सप्तर्षीणां प्रभावातिशयमाह — ज्योतिर्मयानिति । तेजःस्वरूपानित्यर्थः । ग्रहस्वरूपानिति वा । अत्र पराशर-संहिता —

"कलया चरन्ति राशिषु दिवि ये सप्तर्षयो मरीच्याद्याः ।
सूर्यादयश्च ये ते खचराः सर्वे ग्रहाः प्रोक्ताः ॥"

इति ॥ ३ ॥

**ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।**
**सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः ॥ ४ ॥**

(प्रकाशिका)

स्मृतानां च तेषां देवोपस्थानं वर्णयति —

**ते** इति । प्रभामण्डलैरित्यादिविशेषणं तपःप्रकर्षद्योतकम् । तथा-विधस्य तपसो धनत्वकथनं[3] तेषां भगवत्कैङ्कर्यसमुचितत्वं द्योतयति । सा-रुन्धतीका इत्युत्तरत्र तस्या अपि कार्यान्वयस्य वक्ष्यमाणत्वादुक्तम् । अरुन्धती वसिष्ठपत्नी । तस्या एव ग्रहणेन तत्पातिव्रत्यं मुन्यन्तर-पत्नीभ्यो दूराधिकमिति द्योतयति । अत्रायमितिहासः — पुरा किल सप्तर्षिपत्नीकामुकमग्निं स्वाहा तासां रूपेण रमयितुमुपक्रान्ता नाशकद्-

१. 'न्त्येव सा' क. ख. ग. घ. पाठः. २. 'नां ते' ङ. पाठः. ३. 'नं भ' क. ख. ग. घ. पाठः. ४. 'वल्यस' घ. पाठः

रुन्धत्या रूपमनुकर्तुम् । ततश्चान्ये मुनयः स्वाः पत्नीस्तत्यजुरिति । सपदि अविलम्बितम् । प्रभोरित्यविलम्बेनौचित्यं द्योतयति ॥ ४ ॥

(विवरणम्)

देवेन स्मृतानां तेषां तदुपस्थानप्रकारमाह —

त इति । (ते) प्रभामण्डलैर्व्योम द्योतयन्त इति । मण्डलाकाराभिः प्रभाभिराकाशदेशं प्रकाशयन्तः । अनेन तेषां तपःप्रकर्षो द्योत्यते । उपरिष्टादरुन्धत्या अपि कार्यान्वयस्य वक्ष्यमाणत्वात् तस्या अपि देवोपस्थानमाह— सारुन्धतीका इति । अरुन्धत्या वसिष्ठपत्न्या सहिताः । अत्र वसिष्ठपत्नीमात्रस्यागमनवर्णनं तत्पातिव्रत्यस्यान्यपत्नीपातिव्रत्येभ्यो व्यतिरेकं द्योतयितुम् । एवं हि पुराणप्रसिद्धिः —

"सप्तर्षीणां पुरा पत्नीरकामयत पावकः ।
विज्ञातवृत्ता स्वाहाथ तासां रूपेण पावकम् ।
रमयामास रुचिरं न शशाक मनागपि ।
यत्नैररुन्धतीरूपं ग्रहीतुं मुनयस्ततः ।
अन्ये तु तत्यजुः पत्नीः"

इति ॥ ४ ॥

**आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु ।**
**आकाशगङ्गास्रोतस्सु दिङ्नागमदगन्धिषु ॥ ५ ॥**

(प्रकाशिका)

आप्लुता इति । आप्लुताः स्नाताः । उत्किरतीत्युत्किरः । परमेश्वरोपस्थाने पूतैर्भाव्यमिति स्नानमुक्तम् । स्रोतोविशेषणे तपस्वित्वेऽपि तेषां भोगयोग्यतां द्योतयतः । एवमुत्तरश्लोकेष्वप्यवसेयम् । वक्ष्यति च— 'तपसामुपभुञ्जानाः फलान्यपि तपस्विनः' (श्लो. १०) इति ॥ ५ ॥

---

१. 'म्बौचि' ङ. पाठः. २. 'न्यपा' क. ख. ग. घ. पाठः. ३. 'व्योमगङ्गाप्रवाहेषु दि' मुद्रितकोशपाठः. ४. 'गं द्यो' ङ. पाठः.

(विवरणम्)

अथ षड्भिः श्लोकैस्त एव वर्ण्यन्ते । तत्रादौ[1] तेषां परमेश्वरोपस्थानयोग्यं पूतत्वं प्रतिपादयितुं स्नानं वर्णयति —

आप्लुता इति । आकाशगङ्गास्रोतस्सु आप्लुताः । आकाशगङ्गायाः स्रोतःसु प्रवाहेषु आप्लुताः स्नाताः । आकाशगङ्गास्रोतसां विशेषतो मनोहरत्वमाह — तीरमन्दारकुसुमोत्किरवीचिषु । तीरे कूले ये मन्दाराः कल्पवृक्षाः तेषां कुसुमानि पुष्पाणि उत्किरन्ति[2] ऊर्ध्वं किरन्ति विक्षिपन्तीति तीरमन्दारकुसुमोत्किराः, तथाभूता वीचयस्तरङ्गा येषु तेषु । तीरप्रदेशरूढानां कल्पवृक्षाणां वातवशाज्जलेषु पतितानि पुष्पाणि वीचीभिरूर्ध्वं विक्षिपत्स्वित्यर्थः । पुनरपि मनोहरत्वमाह — दिङ्नागमदगन्धिष्विति । दिङ्नागानां दिग्गजानां मदस्य मदजलस्य गन्धोऽत्रास्तीति तथा । आभ्यां विशेषणाभ्यामाकाशगङ्गास्रोतसां सौरभ्योत्कर्ष उक्तः । तेन च तत्र नित्यमाप्लुतानां मुनीनां तपस्वित्वेऽपि भोगयोगः सूचितः । एवमुत्तरश्लोकेऽपि द्रष्टव्यम् । अत एव वर्णनान्ते वक्ष्यति — 'तपसामुपभुञ्जानाः फलान्यपि तपस्विनः' इति ॥ ५ ॥

**मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः[3] ।**
**रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥ ६ ॥**

(प्रकाशिका)

मुक्तेति । प्रव्रज्याशब्देनात्र वानप्रस्थाश्रम उच्यते ॥ ६ ॥

(विवरणम्)

अथ तदीयानां तपस्विजनोचितानां परिकराणामपि तपसस्तत्फलोपभोगस्य च साधारणत्वमाह —

मुक्तेति । मुक्तायज्ञोपवीतानि बिभ्रतः । मौक्तिकमयानि यज्ञोपवी-

---

१. 'दौ प' ङ. पाठः. २. 'न्ति वि' क. पाठः. ३. 'है' मुद्रितकोशपाठः.

तानि ब्रह्मसूत्राणि बिभ्रतः दधतः। तथा हेमवल्कलाः हेममयानि वल्कलानि येषां ते तथा। तथा रत्नाक्षसूत्राः रत्नमयमक्षसूत्रं रुद्राक्षमाला येषां ते तथा। तद्देशभवानां वृक्षाणां तत्फलादीनां च सुवर्णरत्नादिमयत्वादित्थमुक्तम्। अत एवोत्प्रेक्षते — कल्पवृक्षाः प्रव्रज्याम् आश्रिता इवेति। कल्पवृक्षा मन्दारादयः प्रव्रज्यां वानप्रस्थाश्रमम् आश्रिताः प्राप्ता इव। कल्पवृक्षाणां सकलरत्नफलत्वं प्रसिद्धम्। उक्तं च नैषधकाव्ये —

"एषां गिरेः सकलरत्नफलस्तरुर्यः[1][2]
प्राग्दुग्धभूमिसुरभेरिव पञ्चशाखः[3]।
मुक्ताफलं फलनसाह्वयनाम तन्व-[4]
न्नाभाति बिन्दुभिरिवच्छुरितः पयोभिः॥" (स. ११. श्लो. १०)

इति॥ ६॥

**अधःप्रस्थापिताश्वेन समावर्जितकेतुना।**
**सहस्ररश्मिना शश्वत् सप्रणाममुदीक्षिताः॥ ७॥**

(प्रकाशिका)

अध इति। अश्वानाम् अधःप्रस्थापनं केतुसमावर्जनं च सप्तर्षिपदस्य दूरोन्नतत्वेऽपि[6] हिमवत्प्रस्थावतरणवशादासत्त्या तत्कालभाविन्येत्यवसेयम्। सप्रणाममिति, तेषां लोकगुरुत्वात्॥ ७॥

(विवरणम्)

अथ सप्तर्षिमार्गस्य सूर्यमार्गाद् दूरोन्नतत्वेऽपि हिमवत्प्रस्थावतरणवशादत्यासन्नेषु सप्तर्षिषु सूर्यस्य तत्कालोचितां प्रवृत्तिमाह —

अध इति। सहस्ररश्मिना शश्वत् सप्रणामम् उदीक्षिताः। सहस्ररश्मिना सूर्येण शश्वत् पुनः। 'मुहुर्भूयः पुनः शश्वद्' इत्यमरः। सप्रणाममिति उदीक्ष-

---

१. 'लफ' ङ. पाठः. २. 'रुः स प्रा', ३. 'भेः खलु प', ४. 'न्व' मुद्रितकोशपाठः. ५. 'साक्षात्' मुद्रितकोशपाठः. ६. 'रेणोन्न' क. ख. ग. पाठः.

णक्रियाविशेषणम् । प्रणामसहितं यथा तथोदीक्षिताः ऊर्ध्वमीक्षिताः । सप्तर्षिमार्गस्य सूर्यमार्गादत्युन्नतत्वाद् अवतरणसमयादारभ्योद्वीक्षिता इत्यर्थः । अत्र रथसमीपवर्तिषु तेषु रथप्रयाणेऽपि विशेषमाह — अध इत्यादिना विशेषणद्वयेन । अधःप्रस्थापिताश्वेन पूर्वव्यवस्थितान्मार्गात् किञ्चिदधोभागे प्रस्थापिताः प्रस्थानं कारिताः अश्वा निजस्यन्दनवाजिनो येन तेन । तथा समावर्जितकेतुना सम्यगावर्जितः आनमितः केतुर्ध्वजो येन तेन । रथप्रयाणसमये तद्देहध्वजाहतिभयादानमितध्वजेनेत्यर्थः । सूर्येण केतुसमावर्जनपूर्वकं सप्तर्षिमार्गं दूरतः परिहृत्य मुहुर्मुहुः प्रणम्य सगौरवमीक्षिता इत्यर्थः । अत्र सर्वलोकपूर्वस्यापि सूर्यस्य तत्सेवाप्रतिपादनेन सप्तर्षीणां सर्वलोकगुरुत्वमुक्तम् ॥ ७ ॥

**आसक्तबाहुलतया सार्धमुद्धृतया भुवा ।**
**महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥ ८ ॥**

(प्रकाशिका)

**आसक्तेति** । सार्धं विश्रान्ता इत्यन्वयः । अनेन श्रीवराहपुराणगतमाख्यानं सूचितम् । तत्तु विस्तरभयान्नात्र लिखितम् । अनेन तेषां नित्यत्वमुक्तम् ॥ ८ ॥

(विवरणम्)

नित्यत्वमप्याह —

**आसक्तेति** । प्रलयापदि महावराहदंष्ट्रायाम् उद्धृतया आसक्तबाहुलतया भुवा सार्धं विश्रान्ताः । प्रलयः कल्पान्तः । 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्तं इत्यपि' इत्यमरः । प्रलय एवापत् । सर्वलोकक्षयकारित्वात् । महावराह आदिवराहस्तस्य दंष्ट्रायाम् उद्धृतया उत्क्षिप्तया । महावराहेणेत्यर्थात् । आसक्ते सम्यक् सक्ते बाहुलते प्रशस्तौ बाहू यस्यास्तया । महावराह-

१. 'स्थापिता' ङ. पाठः. २. 'र्वे' ग. पाठः. ३. 'माह' क. ख. ग. घ. पाठः. ४. 'न्त इत्यम' ङ. पाठः. ५. 'उत्क्षि' क. ख. ग. घ. पाठः. ६. 'स्तबा' क. ख. ग. घ. पाठः.

दंष्ट्रायामेवेत्यर्थात् । स्त्रीजनसुलभेन भयेनेति शेषः । भुवा पृथिव्या सार्धं विश्रान्ताः सुखासीनाः । सकललोकसंहारकारिणि कल्पान्ते समुपस्थिते जलमात्रावशिष्टेषु चतुर्विधेष्ववयविद्रव्येषु विपन्नया स्त्रीजनसुलभेन भयेन हस्ताभ्यां महावराहदंष्ट्राद्वयमवष्टभ्यावस्थितया स्त्रीरूपधारिण्या धरण्या सह महावराहदंष्ट्रायां सुखासीना इत्यर्थः । श्रीवराहपुराणप्रसिद्धश्चायमर्थः ॥ ८ ॥

**सर्गशेषप्रणयनाद् विश्वयोनेरनन्तरम् ।**
**पुरातनाः पुराविद्भिर्धातार इति कीर्तिताः ॥ ९ ॥**

(प्रकाशिका)

सर्गेति । तेषां मरीच्यादिप्रजापतिष्वन्तर्भावात्[1] शेषसर्गप्रणेतृत्वमुक्तम् ॥ ९ ॥

(विवरणम्)

इत्थं तेषां प्रलयकालेऽप्यवस्थानमुक्त्वा तदनन्तरभाविनो जगत्सर्गस्यापि कर्तृत्वमाह —

सर्गेति । विश्वयोनेः अनन्तरं सर्गशेषप्रणयनात् पुराविद्भिः धातारः इति कीर्तिताः । विश्वयोनेस्त्रैलोक्योद्भवस्थानस्य ब्रह्मणः । अनन्तरं पश्चात् । सर्गशेषप्रणयनात् सर्गशेषस्य सृष्टिशेषस्य प्रणयनाद् विधानात् । पुराविद्भिः पुरातनवृत्तान्तवेदिभिर्व्यासादिभिः । धातारः ब्रह्माणः । इतिशब्दः कीर्तनप्रकारवाची । कीर्तिताः कथिताः । ब्रह्मणो जगदेकदेशसर्गानन्तरमवशिष्टस्य सर्गस्य विधानाद् व्यासादिभिः पुराणादिषु ब्रह्मशब्देनैव निर्दिष्टा इत्यर्थः । अत एव पुरातनाः[2] प्राचीनाः । प्रपञ्चोत्पत्तेः प्रागपि सन्त इत्यर्थः । मरीच्यादीनां सर्गशेषविधायित्वं पुराणप्रसिद्धम् ॥ ९ ॥

---

१. 'दिष्व' घ. ङ. पाठः. २. 'षस्य' क. ख. ग. घ. पाठः.

प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥ १० ॥

(प्रकाशिका)

प्राक्तनानामिति । परिपाकमुपेयुषामित्यवर्जनीयत्वं भोगस्येत्युक्तम् । तपस्विनो नित्यं तपं[1] आर्जयन्तः । लोके हि तपं[2]आर्जन[3]फलभोगकालौ भिन्नाविति लोकतो व्यतिरेको विरोधेन ध्वन्यते । शाकुन्तलेऽप्ययमभिप्रायः प्रकाशितः कविना 'प्राणानामनिलेन वृत्तिरुचिते'त्यादिना ॥ १० ॥

(विवरणम्)

तेषां लोकतो व्यतिरेकमाह —

प्राक्तनानामिति । प्राक्तनानां तपसां फलानि उपभुञ्जानाः अपि तपस्विनः । प्राक्तनानां पूर्वकृतानामित्यर्थः । तपसां फलानि सप्तर्षिलोकप्राप्तितदुचितभोगानुभवादीनि । उपभुञ्जाना अनुभवन्तः । 'भुजोऽनवने' (१. ३. ६६) इत्यात्मनेपदित्वात् शानच् । अत्र वर्तमाननिर्देशेन निरन्तरोपभोग उक्तः । अपिशब्दो विरोधवाची । नहि लोके तपःसमार्जनसमये फलोपभोगः, नापि फलोपभोगसमये तपःसमार्जनमिति लोकव्यतिरिक्तमेषां चरितमिति भावः । तपस्विन इति नित्ययोगे मतुप् । निरन्तरेण तपः समार्जयन्त इत्यर्थः । एते हि निरन्तरमेव तपः समार्जयन्ति, निरन्तरमेव तत्फलं चोपभुञ्जते । अहो विचित्रमेषां चरितमिति भावः । शाकुन्तलेऽप्ययमेवार्थो महाकविना प्रदर्शितः —

"प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।

---

१. 'पोऽर्ज' क. पाठः. २. 'पोर्ज' क. पाठः. ३. 'नभो' ङ. पाठः.

ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो
यत् काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥"
(अङ्क. ७. श्लो. १२)

इति। फलोपभोगतपःसमार्जनयोर्यौगपद्ये हेतुमाह — विशुद्धानामिति। अशुभकर्मसंसर्गलेशेनापि रहितानामित्यर्थः। नहि दुराचारसंपृक्ततपःफलोपभोगे मनः शाम्यतीति भावः। फलोपभोगस्यावर्जनीयत्वमाह—परिपाकमुपेयुषामिति। परिपाकं पक्वताम् उपेयुषां प्राप्तवताम्। प्राचीनानां तपःफलानां पक्वतया स्वयमेव प्राप्तत्वादेव तेषां तदुपभोगः, न तु शक्तिवशादिति भावः। अत्र तपःफलानुभवतपश्चरणलक्षणयोः क्रिययोर्युगपद् विरोधाद् विरोधालङ्कारः। 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद् वचः' इति। तेषां महाप्रभावत्वेन विरोधपरिहारः ॥ १० ॥

**तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा।**
**साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥ ११ ॥**

(प्रकाशिका)

विशेषत आह—

**तेषामिति**। तपस्सिद्धिरर्थात् पत्युरेव। बहु भूयिष्ठम्। अत्र साक्षात्त्वाक्षिप्तमूर्तत्वविशिष्टायास्तपस्सिद्धेरुत्प्रेक्षया किमप्यरुन्धत्या लोकोत्तरत्वं द्योत्यते ॥ ११ ॥

(विवरणम्)

इत्थं सामान्यतः सर्वानपि वर्णयित्वा पुनररुन्धतीं विशेषतो वर्णयति—

तेषामिति। तेषां मध्यगता अरुन्धती बहु बभासे। तेषां सप्तर्षीणां

---

१. 'रकालत्वं' घ. पाठः.

मध्यप्रदेशं गता। अयं शोभाधिक्यप्रतीतौ हेतुः। अरुन्धती वसिष्ठपत्नी। (बहु) सप्तर्षिभ्योऽप्यधिकतरं[1] बभासे शोभते स्म । अत एवोत्प्रेक्षते — तपःसिद्धिः साक्षाद् इवेति । चिरकालार्जितस्य तपसः सिद्धिः फलं साक्षात् प्रत्यक्षेव । पत्युरित्यर्थात् सिध्यति । पत्युश्चिरकालार्जितस्य तपसः परिपाकावस्थैव प्रत्यक्षतयालक्ष्यतेवेत्यर्थः । अनयोत्प्रेक्षया लोकोत्तरत्वमरुन्धत्याः प्रतिपाद्यते । तथाविधायामुत्प्रेक्षायां हेतुमाह — साध्वीति । 'सती साध्वी पतिव्रता' इत्यमरः । पातिव्रत्यनिष्ठामाह — पत्युः पादार्पितेक्षणेति । पत्युः वसिष्ठस्य[2] । पादार्पिते पादयोरर्पिते न्यस्ते ईक्षणे नेत्रे यया सा[3] तथा। भर्तृपदारविन्दादन्यत् किमप्य(न)वलोकयन्तीत्यर्थः ॥ ११ ॥

**तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।**
**स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ १२ ॥**

(प्रकाशिका)

**तामिति** । अगौरवभेदेन गौरवभेदमकृत्वा । अर्थान्तरं[4] स्त्री पुमानिति । इतिर्हेतौ । स्त्रीत्वं पुंस्त्वं वा सतां न प्रतिपत्तिविशेषहेतुरित्यर्थः । कस्तर्हि तद्धेतुरित्याह — वृत्तं हीति । महितं पूजितम् । गौरवविषय इत्यर्थः ॥ १२ ॥

(विवरणम्)

इत्थं सारुन्धतीकानां देवर्षीणामागमनं वर्णयित्वा देवस्य तद्विषयां प्रवृत्तिं वर्णयति—

तामिति । ईश्वरः तां मुनीन् च अगौरवभेदेन अपश्यत् । ईश्वर इत्यनेन तत्कटाक्षस्य दुर्लभत्वं द्योत्यते । ताम् अरुन्धतीम् । मुनीन् सप्तर्षीन् । चशब्द उभयसमुच्चयार्थः । अनेन गौरवभेदाभावो ध्वन्यते । अगौरवभेदेन गौरवभेदमकृत्वा । गौरवे विषये स्त्रीत्वपुरुषत्वनिमित्तो यः परस्परभेदः, तेन विनैवापश्यत् । अत्रार्थान्तरन्यासमाह — सतां स्त्री पुमान् इति एषा अनास्था

१. 'व । चि' क. ख. ग. घ. पाठः. २. 'स्य पादार्पितेक्षणा पा' ङ. पाठः. ३. 'सा । भ' क. ख. ग. घ. पाठः. ४. 'पा' ङ. पाठः. ५. 'अत्रार्था' ङ. पाठः. ६. 'रम् । इ' ङ. पाठः

इति । सतां सज्जनानाम् । प्रतिपत्तिविशेष इत्यर्थात् सिध्यति । इतिशब्दो हेतौ । एषा लोकप्रसिद्धा । एतच्छब्दोऽयमास्थाविशेषणतया योजनीयः । अनास्था आस्था न भवति । स्त्रीत्वहेतोः पुंस्त्वहेतोश्च यः प्रतिपत्तिविशेषः सर्व[1]लोकप्रसिद्धः, तस्मिन् महतामनादर एव भवतीति भावः । कस्तर्हि महतां प्रतिपत्तिविशेषहेतुरित्यत्राह—वृत्तं हि महितम् इति । वृत्तं चरित्रं महितं पूजितम् । गौरवे विषय इति शेषः । गौरवे विषये वृत्तस्यैव पूजितत्वात् तन्निमित्त एव महतां प्रतिपत्तिविशेषः । वृत्तं चात्र सप्तर्षीणामरुन्धत्याश्च समानमेवेति युक्तमगौरवभेदेनावलोकनमिति भावः ॥ १२ ॥

**तद्दर्शनादभूच्छंभोर्भूयान् दारा[2]क्रियादरः ।**
**क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलसा[3]धनम् ॥ १३ ॥**

(प्रकाशिका)

**तद्दर्शनादिति** । भूयान् बहुतरः । कथमरुन्धतीदर्शनाद् दारचिकीर्षातिशय इत्याह—क्रियाणामिति । मूलसाधनं प्रथमसाधनम् । अनेन देवप्रवृत्तेर्धर्म[4]प्रधानत्वमुक्तम् ॥ १३ ॥

( विवरणम् )

अरुन्धतीदर्शने भगवतो मनोवृत्तिमाह—

तद्दर्शनादिति । शम्भोः तद्दर्शनाद् दारक्रियादरः भूयान् अभूत् । तस्या अरुन्धत्या दर्शनात् । दारक्रियादरः दारक्रिया विवाहः तस्यामादरो बहुमानः । भूयान् पूर्वस्मादधिकतरोऽभूत् । तत्र हेतुमाह—धर्म्याणां क्रियाणां सत्पत्न्यः खलु मूलसाधनम् इति । धर्मादनपेतानाम् । 'धर्मपथ्यर्थन्यायादनपेते' (४.४.९२) इति यत् । क्रियाणां कर्मणाम् । सत्पत्न्यः पतिव्रताः । 'सती साध्वी पतिव्रता ' इति सिंहः । पत्न्यः भार्याः । खलुशब्दः प्रसिद्धौ ।

---

१. 'र्वप्र' क. पाठः. २. 'रार्थमा' क., ३. 'कारणम्' मुद्रितकोशपाठः. ४. 'मं' क. पाठः. ५. 'प्रसाधन' ख. ग. पाठः.

मूलसाधनं प्रथमं साधनम् । अग्निहोत्रादिकर्मणामेव धर्मत्वात् तेषु च सपत्नीकानामेवाधिकाराद् भगवतो दारपरिग्रहाभिलाषः सत्पत्नीदर्शनानन्तरं पूर्वस्मादधिकोऽभूदिति युक्तमेवेत्यर्थः । अनेन भगवत्प्रवृत्तीनां धर्मप्रधानत्व-मुक्तम् ॥ १३ ॥

**धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।**
**पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥ १४ ॥**

(प्रकाशिका)

अत एवाह—

**धर्मेणेति** । गृहस्थधर्मेण हेतुनेत्यर्थः । पदं व्यवसायः । अपिरत्र स्वोपपदविपरीतं सम्भावयति । कामेन हेतुना दारक्रियायां पदकारणं हि स्वतः कामस्योच्छ्वासहेतुः संभाव्यः। इह तु धर्मेणापि तत्कारणमपराधप्रमोषहेतुत्वात् तदुच्छ्वासहेतुरासीदित्यर्थः ॥ १४ ॥

(विवरणम्)

तस्मिन्नवसरे भगवता दग्धशरीरस्ये कामस्य मनोवृत्तिमाह—

**धर्मेणेति** । शर्वे धर्मेण अपि पार्वतीं प्रति पदं कारिते पूर्वापराधभीतस्य कामस्य मनः उच्छ्वसितम् । शर्वे परमेश्वरे धर्मेण गृहस्थधर्मेण । पदकरणे हेतुभूतत्वात् प्रयोजककर्ता । अपिशब्दो मुख्याभावे प्रतिनिधेरपि कार्यकरत्वं द्योतयति । पार्वतीं प्रति पार्वतीमुद्दिश्य पदं व्यवसायं कारिते प्रयोजिते सति । पूर्वापराधभीतस्य पूर्वमात्मना कृतात् तपोविघातरूपादपराधाद्धेतोर्भीतस्य । कामस्य कामदेवस्य मनः चित्तम् उच्छ्वसितम् आश्वस्तम् अभूदित्यर्थः । अयमभिप्रायः—कामदेवो हि पूर्वं शूलिनस्तपोविघातानन्तरं तेन देहे दग्धेऽपि किमतः परमसौ करिष्यतीति चिन्तया व्याकुलोऽभूत् । तदानीं तु भगवति पार्वतीवरणायोद्यते सति

---

१. 'याप' क. ख. ग. घ. पाठः. २. 'स्य त्व' क. पाठः. ३. 'मग्नसौ' क. पाठः.

मास्तु देवस्य भोगेच्छया पार्वतीं प्रति मनोवृत्तिः, धर्मेच्छयैवास्तु। तथा(पि? हि) नायमितः परं मां प्रति कोपं करिष्यति। किञ्च गृहस्थधर्मो भोगेनापि सनाथ एव। ततश्च कदाचिन्मदनुग्रहमप्यसौ करिष्यत्येवेति सञ्चिन्त्य किञ्चिदाश्वस्तोऽभूदिति॥ १४॥

**अथ ते मुनयः सर्वे पूजयित्वा जगद्गुरुम्।**
**इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः॥ १५॥**

(प्रकाशिका)

प्रसङ्गादिदमुक्त्वा प्रकृतमाह—

अथेति। सर्वे, न त्वेक इतरैस्तत्र नियुक्तः, यथोत्तरत्र हिमवत्संवाद इत्यर्थः। तत्र हि कार्यनिवेदनमात्रपरत्वाद् गाम्भीर्याच्च एकस्यैव वक्तृत्वमुपपन्नम्। इह तु सकलसत्त्वोत्पत्तिप्रविलयहेतौ षट्त्रिंशत्तत्त्वातीते वाङ्मनसागोचरे परमस्वादौ तपःप्रभृतिसकलस्वानुष्ठानफलभूते परमेश्वरे साक्षाद्भावमुपेयुषि प्रहर्षविस्मृतान्तःकरणानामहमहमिकया भक्त्यनुभावरूपा वाचः परस्परानपेक्षाणामपि सर्वेषामेकरूपाः प्रासरन्निति युक्तम्। जगद्गुरुमित्यनेन पूजायास्तदुचितो विशेषो ध्वनितः। 'अनूचानः प्रवचने साङ्गेऽधीती'ति सिंहः। अनेन विशेषणेन परमेश्वरयाथार्थ्यविदां तेषां तद्दर्शने प्रीतिरुपपन्नेति दर्शयता वक्ष्यमाणायाः स्तुतेर्वेदार्थत्वं द्योत्यते। कण्टको रोमाञ्चः॥ १५॥

(विवरणम्)

इत्थं प्रसङ्गगतमर्थमुक्त्वा प्रकृतमेवाह—

अथेति। अथ ते मुनयः सर्वे जगद्गुरुं (प्रणिपत्य? पूजयित्वा) इदम् ऊचुः। अथ दर्शनानन्तरम्। ते मुनयः ससर्षयः सर्वे। न पुनरितरेषामनुमत्या तेष्वेक एव। हिमवत्संवादे वक्ष्यति—

१. 'मानयि' मुद्रितकोशपाठः. २. 'रैः प्रयु' ङ. पाठः. ३. 'स्मि' ङ. पाठः. ४. 'न्नुरू' ङ. पाठः.

"अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु।
ऋषयश्चोदयामासुः प्रत्युवाच स भूधरम्॥" (श्लो. ६५)

इति। तत्र हि कार्यनिवेदनमात्र एव तात्पर्यम्। इह तु श्रुत्यन्तमात्रगम्ये परमानन्दमये परमेश्वरे साक्षाद्भावमुपगते युक्तमेव भक्तिपरवशान्तःकरणानां मुनीनां सम्भूय वचनमिति भावः। अत एवाह — जगद्गुरुमिति। जगतां गुरुं नियन्तारम्। अत एवोक्तं — पूजयित्वेति। नमस्कारादि(दर्श?)ना (का)लोचितां पूजां कृत्वेत्यर्थः। इदं वक्ष्यमाणम्। अनेन भिन्नवक्तृत्वेऽपि वचसामेकरूपत्वमुक्तम्। अत्र च तेषां तपःप्रभावः परमेश्वरप्रभावश्च हेतुरिति च ध्वन्यते। ऊचुः उक्तवन्तः। तेषां परमेश्वरयाथाथ्यर्यावगमे हेतुमुक्त्वा स्तुतिवचनानामुपपत्तिमाह — अनूचाना इति। (अनूचानाः) साङ्गवेदाध्येतारः। 'अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः' इति सिंहः। अनूचानो य आचार्यः (?)। परमेश्वरदर्शनस्यानुभावमाह — प्रीतिकण्टकितत्वच इति। प्रीत्या परमेश्वरस्वरूपदर्शनोद्भूतया मुदा सञ्जातकण्टका त्वग् येषां तथा। अत्र त्वक्पदप्रयोगेण कण्टकस्य सर्वाङ्गीणत्वमुक्तम्। तारकादित्वादितच्। कण्टको रोमाञ्चः। 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इति सिंहः॥ १५॥

**यद् ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम्।**
**यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः॥ १६॥**

(प्रकाशिका)

तत्प्रकारमाह —

**यदिति। ब्रह्म वेदः। सम्यग् आचार्यशुश्रूषादिपुरस्सरम्। आम्नातमधीतम्। हुतं हवनम्। तप्तमार्जितम्। तपःकर्मकस्तपतिरार्जने वर्तते। यच्छब्दवाक्यैः क्रमाद् ब्रह्मचर्याद्याश्रमत्रयधर्मानुष्ठानमुक्तम्। तस्य फलं**

१. 'तु' मुद्रितकोशपाठः. २. 'षापु' घ. पाठः. ३. 'म' ङ. पाठः. ४. 'र' ङ. पाठः.

**विपक्वमिति पूर्ववाक्यैः प्रत्येकं संबन्धः । विपक्वं भोगयोग्यं जातम् । अद्येति बहोः कालादिति शेषः ॥ १६ ॥**

(विवरणम्)

इदंशब्दोक्तान् प्रकारानेवाह नवभिः श्लोकैः । तत्रादावात्मानुष्ठितानामाश्रमत्रयधर्माणामिदानीं सफलत्वं जातमित्याहुर्मुनयः —

यदिति । ब्रह्म सम्यगाम्नातं यद् अग्नौ विधिना हुतं यत् तपः तप्तं च यद् नः अद्य तस्य फलं विपक्वम् । ब्रह्म वेदः । 'बृहत्त्वाद् बृंहणत्वाद् वा ब्रह्म वेदोऽभिधीयत' इति स्मृतेः । सम्यग् गुरुशुश्रूषादिपूर्वकम् । आम्नातम् अधीतमिति यत् । अनेन ब्रह्मचर्याश्रमधर्मानुष्ठानमुक्तम् । अग्नौ पावके विधिना मन्त्रार्थस्मरणादिपूर्वकम् । हुतं होमः । भावे निष्ठा । विधिना हवनं च यदित्यर्थः । हविरिति कर्माध्याहृत्य योजनीयमिति माधवः । तत्र कर्मणि निष्ठा । अनेन गृहस्थधर्मानुष्ठानमुक्तम् । तपः तप्तम् आर्जितम् । तपः-कर्मकस्तपतिरार्जने वर्तते । चशब्द आश्रमत्रयधर्मसमुच्चयार्थः । स च सर्वत्र योजनीयः । अनेन वानप्रस्थधर्मानुष्ठानमुक्तम् । नः अस्माकम् । अद्य बहोः कालादिति शेषः । तस्येति तच्छब्दः पूर्वोक्तयच्छब्दत्रयप्रतियोगित्वेनोपात्तः । फलं विपक्वम् । विशेषेण पक्वं पचेर्निष्ठा । 'पचो वः'(८.२.५२) इति वत्वम् । उपभोगयोग्यं जातमित्यर्थः । सर्वेषामपि कर्मणां परब्रह्मसाक्षात्कार एव हि फलं, स्वर्गाद्यवान्तरफलश्रवणं तु प्ररोचनार्थमित्यर्थः ॥ १६ ॥

**यदध्यक्षेण जगतां वयमारोपितास्त्वया ।**
**मनोरथस्याप्यपथं[1] मनोविषयमात्मनः ॥ १७ ॥**

(प्रकाशिका)

कथं विपक्वमित्याह —

**यदिति । अध्यक्षेण प्रवृत्तिनिवृत्तिनियमहेतुना । मनोविषयं मनः-**

१. 'विषयं म' मुद्रितकोशपाठः.

प्रदेशम् । आरोपणापेक्षया विषयशब्दः । आरोपणेन मनसो दूरोन्नतत्वं द्योत्यते । मनोरथस्याप्यपथमिति पाठः ॥ १७ ॥

( विवरणम् )

कथं विपक्षत्वमित्यत्राहुः —

यदिति । जगताम् अध्यक्षेण त्वया वयम् आत्मनः मनोविषयम् आरोपिताः यत् । जगतां स्थावरजङ्गमात्मकस्य प्रपञ्चस्य । अध्यक्षेण प्रवृत्तिनिवृत्तिहेतुभूतेन । त्वया जगन्नियामकत्वात् प्रपञ्चोत्तीर्णेन । वयं प्रपञ्चान्तर्गतत्वान्नियम्याः । आत्मनो मनोविषयं तव मनःप्रदेशम् । आरोपणापेक्षया विषयशब्दप्रयोगः । आरोपिताः मनसो दूरोन्नतत्वाद् दुरारोहत्वं द्योतयितुमारोपिता इत्युक्तम् ! यद् यस्मात् कारणात् । यस्माद् भगवता वयं स्मृताः, तस्मादस्माकमाश्रमत्रयानुष्ठितानां धर्माणां फलमद्योपभोगक्षमं जातमित्यर्थः । भगवन्मनःप्रदेशस्य दुरारोहत्वमेवाह — मनोरथस्य अपि अपथम् इति । मनोरथस्य मनोराज्यस्य । अत्र मनसो रथत्वरूपणेन तद्गतेरनिवारितप्रसरत्वं ध्वन्यते । उक्तं च — 'मनोरथानामगतिर्न विद्यते' (स. ५. श्लो. ६४) इति । अत एवापिशब्दप्रयोगः । अपथं, पन्था न भवतीति अपथम् 'ऋक्पूर्' — (५. ३. ७४) इत्यादिना समासान्तः । सर्वत्राप्यनिवारितगतेर्मनोरथस्याप्यगोचरमित्यर्थः ॥ १७ ॥

**यस्य चेतसि वर्तेथाः स तावत् कृतिनां वरः ।**
**किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्तते ॥ १८ ॥**

(प्रकाशिका)

किमियता कृतार्थतेत्याह[3] —

**यस्येति** । वर्तेथाः संभावनायां लिङ् । तावत् प्रागेव । यस्य चेतसि वर्तनं संभाव्येत[4], स वर्तनात् प्रागेव धन्याग्रेसर इत्यर्थः । किं पुनः सुतराम् । ब्रह्मयोनेः प्रजापतिजनकस्य । तव चेतसि वर्तते त्वयाङ्गीकृत इत्यर्थः ॥१८॥

---

१. 'क्षो वि' क. ख. पाठः. २. 'र जातमि' ङ. पाठः. ३. 'त्वमित्या' ङ. पाठः. ४. 'व्यते, स' ग. घ. ङ. पाठः.

(विवरणम्)

ननु कथमेतावता भवतां कृतार्थत्वमित्यत्राहुः—

यस्येति। त्वं यस्य चेतसि वर्तेथाः सः तावत् कृतिनां वरः। त्वं यस्य जन्तोः चेतसि हृदये वर्तेथाः। तावत् प्रथमम्। त्वद्वर्तनात् प्रागेवेत्यर्थः। यस्य जन्तोश्चेतसि त्रैलोक्यनाथस्य भगवतो वर्तनं कारणपौष्कल्यसंभवात् सम्भाव्यते, स जन्तुः त्वद्वर्तनात् पूर्वमेव कृतिनां वर इत्यर्थः। त्वद्वर्तनयोग्यत्वसम्भवादिति भावः। अस्माकं धन्यत्वं तु वचसामप्यगोचरं(मि? इ)त्याहुः— यः ब्रह्मयोनेः तव चेतसि वर्तते, सः किं पुनः। ब्रह्मयोनेः प्रजापतेरपि जनकस्येत्यर्थः। अथवा ब्रह्म वेदः। शास्त्रयोनेरित्यर्थः। तव चेतसि वर्तते, सः किं पुनः। तस्मान्ममैते नियोगकारिण इति भवता स्मृतानामस्माकं धन्यत्वं कीदृशीं काष्ठामधिष्ठितमिति वेधसोऽपि जिह्वा न वक्तुं पारयतीत्यर्थः॥ १८॥

**नित्यमर्काच्च[२] सोमाच्च परमध्यास्महे पदम्।**
**अद्य तूच्चैस्तरां ताभ्यां स्मरणानुग्रहात् तव॥ १९॥**

(प्रकाशिका)

ननु यूयं प्रागेव धन्या इत्याशङ्क्य विशेषमाह—

**नित्यमिति। परमुपरितनम्। उच्चैस्तरामित्यनुषज्यमानपदविशेषणम्। स्मरणं च तदनुग्रहश्चेति समासः॥ १९॥**

(विवरणम्)

ननु यूयं पूर्वमपि धन्या एवेत्याशङ्क्येदानीं विशेषतो धन्यत्वमाहुः—

नित्यमिति। वयम् अर्काच्च सोमाच्च परं पदं नित्यम् अध्यास्महे। अर्कादादित्यात् सोमाच्चन्द्राच्च (परम्) उपरि पदं स्थानम्। 'अधिशीङ्स्थासां कर्म'(१.४.४६) इति कर्मसंज्ञा। नित्यं नियमेन अध्यास्महे अधिरुह्यास्महे। 'आस उपवेशने' इति धातुः। इत्थं पूर्वावस्थामनूद्य विशेषमेवाहुः—

---

१. 'रं जातमि' ङ. पाठः. २. 'स' मुद्रितकोशपाठः.

अद्य तु तव स्मरणानुग्रहात् ताभ्याम् उच्चैस्तराम् । पदमध्यास्महे इति अत्राप्यनुषज्यते । तुशब्दोऽद्यतनं विशेषमाह । तव त्रैलोक्याधिपतेः । स्मरणं च तदनुग्रहश्चेति विग्रहः । तस्माद्धेतोः ताभ्याम् अर्कसोमाभ्याम् उच्चैस्तराम् अत्युन्नतम् । तरबन्तादुच्चैस्तरशब्दात् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' (५. ४. ११) इत्यामुप्रत्ययः । आमः स्वरादिषु पाठात् तदन्तस्याव्ययत्वादुच्चैस्तरा-मित्यव्ययम् । अत एव पदविशेषणत्वम् । यद्यपि वयं चन्द्रार्कमार्गोत्तीर्णे मार्गे पूर्वमेव वर्तामहे, तथापीदानीं तव स्मरणरूपादनुग्रहात् ततोऽप्यधिकोन्नते पदे वर्तामह इत्यर्थः ॥ १९ ॥

**त्वत्संभावितमात्मानं बहु मन्यामहे वयम् ।**
**प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥**

(प्रकाशिका)

किञ्चेत्याह —

**त्वदिति । आत्मानमिति प्रत्येकप्रतीत्यपेक्षयैकवचनम् । बहु गुण-भूयिष्ठमित्यर्थः । मननविशेषणं चैतत् । प्रत्ययं विश्वासम् । प्राय इति तद्विशेषणम् । भूयांसं प्रत्ययमित्यर्थः ॥ २० ॥**

(विवरणम्)

विशेषान्तरमाहुः —

त्वादिति । वयं त्वत्सम्भावितम् आत्मानं बहु मन्यामहे । त्वया सम्भा-वितं कृतसम्मानम् । आत्मानमिति प्रत्येकप्रतीत्यपेक्षयैकवचनम् । बह्विति मनुक्रियाविशेषणम् । गुणभूयिष्ठमित्यर्थः । त्वया कृतसम्मानानस्मान् वयं बहुम-न्यामह इत्यर्थः । अत्रार्थान्तरन्यासमाहुः — उत्तमादरः स्वगुणेषु प्रायः प्रत्य-यम् आधत्ते । उत्तमादरः उत्तमानामुत्कृष्टानां जनानामादरः बहुमानः । स्वगु-णेषु स्वस्य गुणेषु । प्राय इति प्रत्ययविशेषणम् । भूयांसमित्यर्थः । 'प्रायो वयसि

बाहुल्ये तुल्यानकनमृत्युषु' इति यादवः । प्रत्ययं विश्वासम् आधत्ते विदधा-ति । महाजनानां बहुमानः स्वगुणेषु महान्तं विश्वासमादधातीत्यर्थः ।

"आ परितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥"

इति न्यायोऽनेन दर्शितः ॥ २० ॥

**या नः प्रीतिर्विरूपाक्ष! तव निध्यानसंभवा ।**
**सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् ॥ २१ ॥**

(प्रकाशिका)

येति । तव निध्यानसंभवेति पाठः । त्वदनुध्यानेति पाठे 'स्मरणानुग्रहात् तव' (श्लो. १९) इति पुनरुक्तं स्यात् । अन्तरात्मा साक्षिमात्रं कोऽप्यात्मा । अत्र मनुः —

"योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥
जीवसंज्ञोऽन्तरात्मा च सहजः सर्वदेहिनाम् ।
*यत्र वेदयते सर्वं सुखं दुःखं च जन्मसु ॥"
(अ. १२. श्लो. १२, १३)

इति ॥ २१ ॥

(विवरणम्)

अथ भगवत्स्वरूपसाक्षात्कारसम्भवां प्रीतिं निवेदयन्ति —

येति । विरूपाक्ष! नः तव निध्यानसम्भवा प्रीतिः या सा तुभ्यं किम् आवेद्यते । विरूपाक्ष! हे त्रिलोचन! नः अस्माकम् । तव निध्यानसम्भवा प्रीतिः । तवेति कर्मणि षष्ठी । निध्यानं दर्शनम् 'निर्वर्णनं तु निध्यानं

---

१. 'त्रः' क. ग. पाठः. २. 'वेद्मः स' क. ख. पाठः.

---

* 'येन' इति मनुस्मृतौ पाठः.

दर्शनालोकनेक्षणानी'ति सिंहः । तव निध्यानात् स्वरूपसाक्षात्कारात् सम्भवः उद्भवो यस्याः तादृशी या प्रीतिः, सा तुभ्यं किमावेद्यते । किंशब्दो हेतु-प्रश्ने । कस्माद्धेतोः, न कस्मादपीत्यर्थः । ननु परगतायाः प्रीतेः परेणाव-गन्तुमशक्यत्वात् कथमनिवेदनीयत्वमित्यत्राहुः — त्वं देहिनाम् अन्तरात्मा असि इति । देहिनां शरीरिणाम् अन्तरात्मा परमात्मा । असि कर्मसाक्षी भवसीत्यर्थः । अत्र मनुः —

"योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥
जीवसंज्ञोऽन्तरात्मा च सहजः सर्वदेहिनाम् ।
यन्न वेदयते सर्वं सुखं दुःखं च जन्मसु ॥"

इति । नहि सकलशरीरिणामखिलकर्मसाक्षिभूतेन भवता अस्माकं हृदयगतं न विज्ञातमिति सम्भवति । विज्ञातस्यार्थस्य तु पुनर्वचनमनर्थकमेवेति भावः ॥ २१ ॥

**साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।**
**प्रसीद कथयात्मानं न धियां पथि वर्तसे ॥ २२ ॥**

(प्रकाशिका)

**साक्षादिति** । पुनश्शब्देन विशेषवाचिना तथापिशब्दस्य विष-योऽपहृतः । तदभावे हि स प्रयोक्तव्यः स्यात् । अञ्जसा तत्त्वतः । प्रसीद, प्रसादायत्तमेव ह्यात्मनः कथनमिति भावः । साक्षाद् दृष्टस्यापि तत्त्वतोऽपरिज्ञाने हेतुमाह — न धियामिति ॥ २२ ॥

(विवरणम्)

इत्थं भगवद्दर्शने जातेऽपि स्वरूपपरिज्ञानाभावाद् भगवत्स्वरूपमेव सम्यगवगन्तुं प्रार्थयन्ते —

साक्षादिति । साक्षाद् दृष्टः असि । साक्षात् प्रत्यक्षेणैव दृष्टोऽसि । अस्मा-

भिरिति शेषः । सर्वेषामागमगम्यो भवानिदानीमस्माभिः प्रत्यक्षप्रमाणेनैवा-
वगतोऽसीत्यर्थः । तथापि साक्षात्कारस्य फलं तत्त्वतः परिज्ञानं नाभूदि-
त्याहुः— वयं पुनः त्वाम् अञ्जसा न विद्मः । पुनश्शब्दो विशेषवाची । वय-
न्त्वित्यर्थः । अयमेव तथापीतिशब्दस्यार्थमपि द्योतयतीति तत्प्रयोगाभावः ।
अञ्जसा तत्त्वतः न विद्मः न जानीमः । यद्यपि भवान् अद्य कृपया नः
साक्षात्कारपदवीमुपगतः, वयं तु तथापि त्वां परमार्थतो नावगच्छाम
इत्यर्थः । अत एव प्रार्थयन्ते — त्वं प्रसीद इति । त्वम् अस्मद्विषयं प्रसादं
विधेहीत्यर्थः । ननु किमतः परं भवतां प्रसन्नेन मया कर्तव्यमित्यत्राहुः — त्वम्
आत्मानं कथय इति । आत्मानं परमार्थरूपं भवत्स्वरूपम् । कथय निवेदय ।
ननु साक्षात्कारे जाते किमतः परं कथनीयमवशिष्यत इत्यत्राहुः — त्वं धियां
पथि न वर्तसे इति । धियां बुद्धीनाम् । 'बुद्धिर्मनीषा धिषणा धीः' इत्यमरः ।
पथि मार्गे । न वर्तसे न विषयो भवसीत्यर्थः । ज्ञानविषयत्वे ज्ञेयत्वप्रसङ्गाद्
दृश्यमानमिदं न भवतः परमार्थभूतं स्वरूपं, किन्तु मायाशबलमेवेति
भावः ॥ २२ ॥

**किं येन सृजसि व्यक्तमुत येन बिभर्षि यत् ।**
**अथो[1] यस्तस्य संहर्ता भागः कतम एष ते ॥ २३ ॥**

(प्रकाशिका)

ननु साक्षाद् दृष्टोऽस्मि, ईश्वरश्चास्मि विदितः, तत् किमत्रापरिज्ञातं तत्त्व-
मित्याह—

**किमिति** । किंशब्दो विकल्पे । 'विकल्पे किं किमूत चे[2]'ति
सिंहः। येन वा सृजसीत्यर्थः । प्रथमविकल्पकरणं स्थाणुर्वा पुरुषो वेतिवद्
बोद्धव्यम्। तथा मेघसन्देशेऽपि—'सा बलिव्याकुला वा '(उ. श्लो. २२)

१. 'थ विश्वस्य' मुद्रितकोशपाठः. २. 'वे' घ. पाठः.

इति ।व्यक्तं प्रपञ्चम्। अथो विकल्पे। भागोंऽशः। अनेनांशिरूपमन्यदेव सकलतत्त्वातीतमगोचरं सर्वकरणानामस्तीति ध्वन्यते। तेष्वेष कतम इत्यर्थः॥ २३॥

(विवरणम्)

अत एव पुनरपि तत्त्वजिज्ञासया पृच्छन्ति—

किमिति। ते एषः भागः कतमः। एषः अस्माभिः प्रत्यक्षीक्रियमाणः भागः अंशः कतमः। 'वा बहूनां जातिपरिप्रश्ने डतमच्' (५. ३. ९३)। अस्माभिस्तव बहवो भागाः श्रूयन्ते, तेषु कतमोऽयं भागः। तानेव भागानाहुः—त्वं येन व्यक्तं सृजसि सः किम्। येन भागेन व्यक्तं प्रपञ्चं सृजसि। किंशब्दो विकल्पे। 'विकल्पे किं किमूत च' इति सिंहः। आद्येऽपि विकल्पशिरसि विकल्पवाचकपदप्रयोगः स्थाणुर्वा पुरुषो वेत्यादिवद् द्रष्टव्यः। येन तद् बिभर्षि सः उत। तद् व्यक्तं बिभर्षि रक्षसि। उतशब्दो विकल्पे। येन प्रपञ्चं रक्षसि, स वायं भागः। यः तस्य संहर्ता सः अथो। अथो विकल्पे। अस्माभिर्दृश्यमानस्तवायं भागः प्रपञ्चस्य स्रष्टा वा तस्य रक्षिता वा संहर्ता वेत्यर्थः। अत्र सर्वत्र भागपदप्रयोगाद् भागी परमार्थभूतः सत्त्वरजस्तमोभिरस्पृष्टः कश्चिदस्त्येवेति व्यज्यते। तादृशस्य परमार्थभूतस्यावगमविषयोऽयमस्माकं प्रश्न इति च ध्वन्यते॥ २३॥

**अथवा सुमहत्येषा प्रार्थना देव! तिष्ठतु।**
**चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम्॥ २४॥**

(प्रकाशिका)

[1]अथाप्रासङ्गिकदुरवापार्थप्रार्थनानिषेधपुरस्सरं प्रकृतं बुभुत्समाना निदेशं प्रार्थयन्ते—

---

१. 'अप्रा' घ. पाठः.

अथवेति । सुमहती दुरवापेत्यर्थः । अत एव तिष्ठतु, नायमवसरस्तस्या इत्यर्थः । किं करवाम किमस्माभिः कर्तव्यं, तच्छाधि तदाज्ञापयेत्यर्थः । चिन्तितेत्यनेन कर्तव्यस्य सत्ता द्योत्यते । उपस्थितानिति निदेशयोग्यत्वम् । अत्र मुनीनां देवविषया प्रीतिर्भावध्वनिरिति व्यपदिश्यते । सा च देवस्य सप्रसादावलोकनादिभिरुद्दीपनैरुद्दीप्यमाना हर्षधृति[1]मति[2]गर्वचपलतौत्सुक्यसंभ्रमै[3]र्व्यभिचारिभिरुपचीयमाना वागारम्भानुभावेनाभिव्यज्यते ॥ २४ ॥

(विवरणम्)

अथ भगवद्दर्शनकौतुकोन्मादप्रवृत्तालपनप्रसङ्गागतां दुरवगमार्थप्रार्थनां प्रतिषेधन्तो निदेशानुग्रहमेव प्रार्थयन्ते —

अथवेति । देव! अथवा सुमहती एषा प्रार्थना तिष्ठतु । हे देव! । अथवेति पक्षान्तरे । सुमहती अतिमहती । दुरवापेत्यर्थः । एषा अस्माभिरिदानीं कृता । प्रार्थना प्रकृष्टा याचना तिष्ठतु । नायमस्या अवसरः[4] । अस्मत्सेवया भगवदुपागमनसमय एवेयं प्रार्थना युक्तेत्यर्थः । तर्हि कस्यायमवसर इत्यत्राहुः — त्वं तावत् चिन्तितोपस्थितान् नः शाधि । तावत् प्रथमम्[5] । चिन्तितान् अत एवोपस्थितान् प्राप्तान् । अत्र चिन्तितानित्यनेन कर्तव्यांशस्य अस्तित्वमुक्तम्, उपस्थितानित्यनेन निदेशयोग्यत्वम् । नः अस्मान् शाधि । 'शासु अनुशिष्टावि'ति धातुः । नियुङ्क्ष्वेत्यर्थः । इत्थं सामान्यतः प्रार्थितं नियोगमेव विशेषतोऽवधारयितुमर्थयन्ते — वयं किं करवाम इति । कीदृशोऽर्थविशेषोऽस्माभिः कर्तव्य इत्यर्थः । तच्छाधीति पूर्वेण योजनम् । अत्र प्रकरणे मुनीनां देवविषया प्रीतिर्दर्शिता । सैव भाव इति व्यपदिश्यते । 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तः' (काव्यप्र. उल्ला. ४. श्लो. ३५) इति । तस्य च देवस्य कटाक्षमन्दस्मितादिभिः प्रसादावधारण-

---

१. 'तिच' क. पाठः. २. 'तिच' ख. ग. घ. पाठः. ३. 'गी' ङ. पाठः. ४. 'र इति भावः । अ' क. ख. ग. घ. पाठः. ५. 'मं भवता चि' ङ. पाठः.

मुद्दीपनम् । हर्षधृतिमतिगर्वचपलतौत्सुक्यसंभ्रमास्तु व्यभिचारिणः । वागार-म्भादिरूपाश्चानुभावाः । एतैर्देवविषयो रत्याख्यो भावः सुतरामभिव्य-ज्यते । तत्रास्माकमेवंभूतं भगवद्दर्शनं जातमिति हर्षः । भगवत्प्रसादावगमेन पूर्णार्थता धृतिः । भगवत्स्वरूपयाथार्थ्यावगमाद् बुद्धेः कृतार्थता मतिः । इदानीमस्मत्सदृशः को वास्तीति गर्वः । भक्तिपरवशत्वाच्चपलता । निदेशानु-ग्रहे कालाक्षमत्वमौत्सुक्यम् । किमिदानीं तिरोधानात् पूर्वमेव सम्यगवलो-कनीयं भगवत्स्वरूपम्, उत भगवानेव स्तोतव्यः, उत नमस्कार्य इत्यादे-रहमहमिकया प्रतीतेः सम्भ्रमः ॥ २४ ॥

**अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।**
**उपचिन्वन् प्रभां तन्वीं प्रत्याह परमेश्वरः ॥ २५ ॥**

(प्रकाशिका)

अथ देवस्योपसन्नमुनिमण्डलविषयं प्रस्तुतार्थं निदेशमवतारयति —

अथेति । मौलिगतस्येति संश्रितपोषणपरत्वं सर्वत्रास्यास्तीति द्योतयति । उपचिन्वन्निति 'वृद्धिः समानैः सर्वेषामि'ति न्यायात् । तन्वी-मिति दशनांश्वपेक्षयोक्तम् ॥ २५ ॥

(विवरणम्)

इत्थमुपरते मुनिवचसि भगवतो मुनिविषयं प्रकृतोपयोगसुभगं नियोगमवतार-यितुमुपक्रमते —

अथेति । अथ परमेश्वरः प्रत्याह । अथ शाधीति मुनिवचनानन्तरम् । प्रत्याहेति अथशब्दयोगात् पूर्ववद् भूते लट्[३] । तेभ्यः प्रतिवचनं दत्तवान् । देवस्य स्मितपूर्वाभिभाषित्वं भङ्ग्यन्तरेण दर्शयति — विशदैर्दशनांशुभिः

---

१. 'म्भरू' ङ. पाठः.   २. 'न्वीति' घ. पाठः.   ३. 'ते ।[?]व' ङ. पाठः.

मौलिगतस्य इन्दोः तन्वीं प्रभाम् उपचिन्वन् इति । विशदैः निर्मलैः । अनेन इन्दुप्रभोपचये दशनांशूनां सामर्थ्यं दर्शितम् । 'वृद्धिः समानैः सर्वेषामि'ति न्यायात् । दशनानां दन्तानाम् अंशुभिः प्रभाभिः । मन्दस्मितोद्भूतैरिति शेषः । मौलिं जटासंयतं केशं गतस्य प्राप्तस्य । 'चूडा किरीटं केशाश्च संयता मौलयश्चय' इत्यमरः । इन्दोर्जटागतत्वोक्त्या परमेश्वराश्रितत्वमुक्तम् । तेन च प्रसादातिशयान्मन्दहासाधिक्यं ध्वन्यते । इन्दुप्रभायास्तन्वीत्वप्रतिपादनेन पोषणयोग्यत्वं सूचितम् । प्रभां रश्मिम् उपचिन्वन् वर्धयन् । मन्दस्मितोद्गतैर्दन्तप्रभासन्तानैः कोटीरभारघटितस्य बालचन्द्रस्य प्रभां वर्धयन् प्रत्युवाचेत्यर्थः ॥ २५ ॥

**विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः ।**
**ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥ २६ ॥**

(प्रकाशिका)

निदेशक्रममाह —

**विदितमिति**। वो विदितमिति तत्त्वदृष्ट्या। यूयमेवावधृतपरमार्था[1] इति[2] भावः । किं विदितमित्यत्राह[3] — यथेति । काश्चिदपि मे प्रवृत्तयो यथा न स्वार्थास्तथा वो विदितमित्यर्थः । अत्र स्वार्थत्वनिषेधात् प्रवृत्तीनां परार्थत्वमर्थप्राप्तं, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् । ननुरवधारणे । अष्टाभिः खात्मेन्दुवह्निमरुदर्कमहीपयोरूपाभिः[4] इत्थंभूतः अस्वार्थप्रवृत्तिः सूचितः प्रकाशितः । लोकेऽपीति शेषः । प्रत्यक्षैः पृथिव्यादिरूपैः प्रसिद्धास्वार्थधारणादिव्यापारैरप्रत्यक्षमपि मे रूपं परार्थस्वव्यापारं[5] स्थूलदृष्टिभिरप्यनुमातुं शक्यमित्यर्थः । एतच्च वाक्यं

१. 'मव' ग. घ. ङ. पाठः. २. 'त्यर्थः । किं' ङ. पाठः. ३. 'त्याह' घ. ङ. पाठः. ४. 'योभिः' घ. ङ. पाठः. ५. 'सर्वव्या' घ. ङ. पाठः.

वक्ष्यमाणस्य कन्यावरणनिदेशहेतोस्त्रिदशप्रार्थनाहेतुकस्य दाराहरणाभिलाषस्य स्वार्थत्वाभावेऽपि परार्थत्वेनोपपद्यमानतां दर्शयितुम् ॥ २६ ॥

(विवरणम्)

अथ क्रमेण निदेशप्रकारमेव दर्शयति विदितमित्यादिभिरष्टभिः श्लोकैः । तत्रादावात्मनो भार्यापरिग्रहस्य परोपकारार्थतां[1] प्रतिपादयिष्यन् सर्वासामपि निजप्रवृत्तीनां परोपकारार्थतां दर्शयति —

विदितमिति । मे काश्चित् प्रवृत्तयः यथा न स्वार्थाः, तथा वः विदितम् । मे काश्चिदपि प्रवृत्तयः व्यापाराः यथा येन प्रकारेण न स्वार्थाः न आत्मार्थाः, तथा तेन प्रकारेण वः । 'क्तस्य च वर्तमाने'(२. ३. ६७) इति कर्तरि षष्ठी । युष्माभिरित्यर्थः । विदितं वर्तमाने क्तः । सर्वेषामपि मे व्यापाराणां यथा न स्वार्थत्वं, तथा तपःप्रभावादवगतपरमार्थैर्युष्माभिरवगम्यत एवेत्यर्थः । अत्र प्रवृत्तीनां स्वार्थत्वनिषेधस्य परार्थत्वविधिरेव फलं, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् । अस्मत्प्रवृत्तीनां परार्थमात्रपरायणत्वं स्थूलदृष्टिभिरन्यैरवगन्तुं शक्यमेवेत्याह[3] — अष्टाभिर्मूर्तिभिः इत्थंभूतः ननु सूचितः अस्मि इति । (अष्टाभिः)

"भूमिरापोऽनलो वायुरात्मा व्योम रविः शशी ।
इतीमाः सर्वलोकानां प्रत्यक्षाः शिवमूर्तयः ॥"

इति शैवागमप्रसिद्धाभिः मूर्तिभिः शरीरैः सूचने कर्तृभूतैः । इत्थम्भूतः इमं प्रकारं प्राप्तः । 'भू प्राप्तावि'ति धातुः । परार्थव्यापारतां प्राप्त इत्यर्थः । ननुरवधारणे । इत्थंभूत एवेत्यर्थः । सूचितः प्रकाशितः । लोकेऽपीति शेषः । प्रत्यक्षाणां पृथिव्यादीनां मम रूपाणां परार्थत्वदर्शनादप्रत्यक्षमागमैकगम्यं रूपमपि परार्थमात्रपरमिति सर्वैरप्यनुमातुं[4] शक्यमेवेति भावः । पृथिव्यादीनां धारणादिव्यापारस्य परार्थमात्रपरत्वं प्रसिद्धमेव । अत्रागमगम्यं प्रत्यक्षगम्यं चेति द्विविधं मे स्वरूपमिति निजस्वरूपकथनात् 'प्रसीद कथयात्मानम्'

१. 'णक' ङ. पाठः. २. 'रतां' ङ. पाठः. ३. 'ह—अहम् अ' ङ. पाठः. ४. 'रनु' ङ. पाठः

(श्लो. २२) इति मुनिभिः प्रार्थितं निजस्वरूपकथनमप्यर्थाद् भगवता कृतमित्यवसेयम् ॥ २६ ॥

**सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।**
**अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥ २७ ॥**

(प्रकाशिका)

अथ ततः किमित्याह—

**स इति ।** सः, य एवं परार्थैकप्रवृत्तिः । विद्युत्वान् । 'झयः' (८. २. १०) इति मतुपो वत्वम् । चातकैरित्यनेन तेषामनन्यशरणत्वं द्योत्यते । याचित इत्यनेन कामदाहानन्तरमिन्द्रादिभिर्याचित इत्यवसेयम् ॥ २७ ॥

(विवरणम्)

नन्वस्तु भवत्प्रवृत्तीनां परार्थैकपरत्वम् । प्रकृते किमायातमित्यत्राह—

**स इति ।** सः अहम् अरिविप्रकृतैः देवैः प्रसूतिं प्रति याचितः । य एवं परार्थमात्रनिरतः (सोऽहम्) । अरिणा शत्रुभूतेन तारकेण विप्रकृतैः पीडितैः देवैरिन्द्राद्यैः प्रसूतिं प्रति पुत्रोत्पादनमुद्दिश्य याचितः अपेक्षितः । अनेन कामदहनानन्तरं भग्नमनोरथैरवगतपरमार्थैर्देवैर्भगवानभ्यर्थितोऽभूदित्येषा कथा द्योत्यते । अत्रोपमामाह—तृष्णातुरैः चातकैः विद्युत्वान् वृष्टिम् इव इति । तृष्णया दाहेन आतुरैः परवशैः चातकैः [1]चकोरैः । विद्युदस्यास्तीति विद्युत्वान् मेघः । 'झयः' इति मतुपो मकारस्य वत्वम् । वृष्टिं वर्षमिव । यथा तृष्णातुराश्चातकाः मेघं वृष्टिं याचन्ते, तथा शत्रुपीडितास्त्रिदशाः मां प्रति पुत्रोत्पत्तिमभ्यर्थितवन्त इत्यर्थः । अत्र अरिविप्रकृतत्वस्य तृष्णातुरत्वस्य च बिम्बप्रतिबिम्बत्वेनो[2]पादानम् । चातकदृष्टान्तेन देवानामनन्यशरणत्वं द्योत्यते, तेन च तत्प्रार्थनस्यालङ्घनीयत्वम् ॥ २७ ॥

---

१. 'चकोरैः । वि' क. ख. ग. घ. पाठः. २. 'पपादनम्' ङ. पाठः.

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पादाय हविर्भोक्तुर्यजमान इवारणिम् ॥ २८ ॥

(प्रकाशिका)

अत इति । आहर्तुं परिणेतुम् । आत्मजन्मने पुत्राय । क्वचित्तु षष्ठ्यन्तः पाठः । अरण्युपमानेन 'उभे एव क्षमे वोढुम्' (स. २. श्लो. ६०) इत्यादिनोक्तं तस्या एव तद्योग्यत्वं दर्शयति । अत्रेन्द्रादियाचनमेव परिणयेनेच्छायाः कारणत्वेनोपन्यस्तं, न तु देव्यास्तपः, यतस्ते मुनयस्तत्त्वतः शिवयोः शैलीं जानन्ति । तौ हि न कदाचिदपि परस्परविरहितौ । ततश्च न वस्तुतः समागमार्थं तपो देव्याः, किन्तु लोके स्त्रीधर्मसंशिक्षणार्थं कुले प्रसूतया स्त्रिया सर्वात्मना स्वानुरूपः पतिर्लब्धव्य इति । यथा परार्थैकव्यापारः शिवः, तथा तच्छक्तिरपीति ॥ २८ ॥

(विवरणम्)

अस्त्वेवं, ततः किमित्यत्राह —

अत इति । अतः अहम् आत्मजन्मने पार्वतीम् आहर्तुम् इच्छामि । अतः अलङ्घनीयत्रिदशप्रार्थनाद्धेतोः । नन्वत्र महता प्रबन्धेन प्रतिपादितं देव्यास्तपश्चरणमुपेक्ष्य त्रिदशप्रार्थनमेव किमर्थं देवेन परिणयेच्छाकारणत्वेनोपन्यस्तम् । सप्तर्षीणां च तद्दर्शित्वादिति ब्रूमः । ते हि शिवयोः स्वरूपं परमार्थतो जानन्ति । नहि तौ कदाचिदपि परस्परवियुक्तौ । ततो न देव्याः समागमप्रार्थनया तपश्चरणम् । किन्तु महाकुलप्रसूताभिः कन्यकाभिरेवमात्मानुरूपो वरः प्राप्तव्य इति स्त्रीधर्मसंशिक्षणार्थमेवेति युक्तं परमेश्वरस्य मुनीन् प्रति देवीतपश्चरणानुपन्यास इत्यलमनेन । आत्मजन्मा पुत्रः । आत्मजन्मानमुत्पादयितुमित्यर्थः । षष्ठ्यन्तपाठे उत्पादायेति योज्यम् । पार्वतीमित्यनेन संबन्धयोग्यत्वमुक्तम् । आहर्तुं परिणेतुम् इच्छामि । अत्रोपमामाह — यज-

---

१. 'त्पत्तये ह' मुद्रितकोशपाठः. २. 'येच्छा' ङ. पाठः ३. 'र्थे', स्त्रिया कु' ङ. पाठः ४. 'या स' ङ. पाठः. ५. 'णां त्वदर्शि' ङ. पाठः.

मानः हविर्भोक्तुः उत्पादाय अरणिमिवेति। यजमानो यागकर्ता हविषो भोक्तुरग्नेः उत्पादाय उत्पादनाय। अरणिर्नाम अग्निहोत्रादिष्वग्निनिर्मन्थनार्थं निर्मितं दारु। अग्न्युत्पादनार्थं यथा यजमानोऽरणिमिच्छति, तथा अहं पुत्रोत्पादनार्थं पार्वतीं परिणेतुमिच्छामीत्यर्थः। अत्र आत्मनो यजमानोपमानेन धर्मप्रवणत्वं सूचितम्। आत्मजन्मनो वह्न्युपमानेन तस्य लोकोत्तरप्रतापत्वं सूचितम्। पार्वत्या अरण्युपमानेन 'उभे एव क्षमे वोढुमुभयोर्वीर्यमाहितम्' इत्यादिनोक्तं पार्वत्या एवात्मवीर्यधारणयोग्यत्वं व्यज्यते ॥ २८ ॥

**तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः।**
**विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ॥ २९ ॥**

(प्रकाशिका)

तत्र किमस्माभिः कर्तव्यमित्यत्राह —

तामिति। अस्मदर्थे 'निमित्तात् कर्मसंयोगे' (वा. २. ३. ३६) इति सप्तमी। विक्रियायै विकारं कर्तुम्। विकारो दोषः। सदनुष्ठिताः सद्भिरनुष्ठापिताः। ण्यर्थोऽत्रान्तर्भूतः। अत्र प्रैषार्थस्तव्यप्रत्ययः। एवं परार्थवृत्तिरहं त्रिदशाभ्यर्थनया परिणिनीषुः कन्यावरणे युष्मान् नियुञ्ज्यामित्यर्थः ॥ २९ ॥

(विवरणम्)

आहरणे किमस्माभिः कर्तव्यमित्यत्राह —

तामिति। युष्माभिः अस्मदर्थे हिमालयः तां याचितव्यः। युष्माभिः तत्तादृशतपःप्रभावयुक्तैः। तत एव हि सम्बन्धस्य सज्जनकारितत्वं सम्भव-

---

१. 'त्याह' क. पाठः. २. 'कार्ययो' क. पाठः. ३. 'व्यप्रत्य' क. ग. पाठः.

तीति भावः । अस्मदर्थे इति 'निमित्तात् कर्मसंयोग' इति सप्तमी । अस्मत्प्रयोजननिमित्तमित्यर्थः । हिमालयः हिमवान् अनभिहितकर्म तां पार्वतीम् । याचितव्यः अर्थनीयः । प्रैषार्थोऽत्र तव्यप्रत्ययः । इत्थं परार्थप्रवृत्तिरहं सुजनप्रार्थनया विवाहं कर्तुकामः कन्यावरणे युष्मान् नियुञ्ज्यामित्यर्थः । ननु अस्माभिरेवेदं कर्तव्यमिति को नियम इत्यत्राह — सदनुष्ठिताः सम्बन्धाः विक्रियायै न कल्पन्ते । (सद्भिः) सज्जनैरनुष्ठिता अनुष्ठापिताः । अन्तर्भूतण्यर्थोऽयं प्रयोगः । सम्बन्धाः विवाहादयः विक्रियायै विकारं दोषं कर्तुं न कल्पन्ते न समर्था भवन्ति । 'कृपू सामर्थ्ये' इति धातुः । सज्जनैः कारिता विवाहादयो न कदाचिदपि दोषमुत्पादयन्तीत्यर्थः । अर्थान्तरन्यासश्चायम् ॥ २९ ॥

**उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।**
**तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥ ३० ॥**

(प्रकाशिका)

ननु याचितव्य इति किं देवेनोच्यते, स एव हि कृतार्थः स्याद्, यदि कन्यां देवः स्वीकुर्यात् । देवस्य तु कियदेतादित्याह —

**उन्नतेनेति** । उन्नतिः कुलादिना । स्थितिः स्थैर्यम् । योजितसम्बन्धम् । युष्माभिरिति शेषः । वित्त जानीध्वम् । मामपि, न केवलं हिमवन्तं मया योजितसंबन्धम् ॥ ३० ॥

(विवरणम्)

ननु यदि भगवता हिमवतः सुतां[2] परिगृह्यते, तर्हि स एव कृतार्थः स्यात्, किमर्थं याचितव्य इत्युक्तम् अत आह —

**उन्नतेनेति** । तेन योजितसम्बन्धं माम् अपि अवञ्चितं वित्त । तेन हिमवता योजितो विहितः सम्बन्धो यस्य तम् । युष्माभिरिति शेषः । मामपि, न

१. 'ति निमित्तस' ङ. पाठः. २. 'तापगृह्येत, त' क. ख. ग. घ. पाठः

केवलं मया योजितसम्बन्धं हिमवन्तमेव। अत एव तेन योजितसम्बन्धं मामपि इत्यपिशब्दार्थः। वञ्चितो न भवतीत्यवञ्चितः तं, कृतार्थमित्यर्थः। वित्त जानीध्वम्। ननु कथं तेन योजितसम्बन्धस्य भगवतः कृतार्थत्वम् इत्यत्र तद्गुणानाह त्रिभिर्विशेषणैः। तत्र हिमवतो देवतात्मकं स्थावरात्मकं च रूपद्वयमस्ति। तत्रोभयत्रापि श्लिष्टं विशेषणत्रयम्। तत्र विवाहेषु उभयकुलशुद्धेरेव प्राधान्यादादौ कुलशुद्धिमाह — उन्नतेनेति। जात्याचारादिभिरुत्कृष्टेनेत्यर्थः, प्रांशुना च। स्थिरव्यवसायत्वमाह — स्थितिमतेति। स्थितिः स्थैर्यं तद्वता स्थिरबुद्धिनेत्यर्थः, अनेन कार्याकार्यविवेककुशलत्वमुक्तम्, अचञ्चलस्वरूपेण च। महाराजत्वमाह — भुवः धुरं उद्वहता इति। अत्र विशेषानुपादानाद् भूमण्डलस्य न तदेकदेशस्येत्यर्थः। धुरं रक्षाव्यापारम्। उद्वहता दधानेन, सार्वभौमेनेत्यर्थः, भूमेरुद्धरणव्यापारमुद्वहता च। कुलपर्वतैरेव हि पृथिवी ध्रियते ॥ ३० ॥

**एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते।**
**भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥ ३१ ॥**

(प्रकाशिका)

स कथं याचितव्य इत्याह —

**एवमिति। वो युष्मभ्यम्। भवत्प्रणीतं युष्मत्कृतबन्धनम्। आचारं लौकिकवैदिकम्। स्मृत्यात्मना निबद्धमाचारं लोके साधवोऽधीयत इत्यर्थः[2] ॥ ३१ ॥**

( विवरणम् )

नन्वस्माभिः कथं हिमवान् कन्यां याचितव्यः इत्यत्राह —

---

1. 'न नु त' क. ख. ग. घ. पाठः. 2. 'र्थः ॥ आ' क. पाठः

एवमिति । सः कन्यार्थम् एवं वाच्यः इति वः न उपदिश्यते । सः हिमवान् । कन्यार्थं कन्याप्रयोजनम् । वचनक्रियाविशेषणं चैतत् । एवमिति वचनस्वरूपनिर्देशः । वाच्यः वक्तुं योग्यः । इतिशब्दः उपदेशप्रकारवाची । वः युष्मभ्यम् । नोपदिश्यते । मयेति शेषः । उपदेशस्य निष्प्रयोजनत्वमेवोपपादयति — साधवः भवत्प्रणीतम् आचारं हि आमनन्ति इति । साधवः सज्जनाः । भवत्प्रणीतं भवद्भिः प्रणीतं स्मृत्यात्मना निबद्धम् । आचारं लौकिकवैदिकात्मकम् । हिशब्दः प्रसिद्धौ । आमनन्ति अभ्यस्यन्ति । भवद्भिः स्मृत्यात्मना निबद्ध आचार एव हि सद्भिः अभ्यस्यते । अथवा आचारं भवत्प्रणीतम् (इति ?) वदन्तीत्यर्थः । तस्मादाचारप्रवर्तकान् प्रत्याचारोपदेशो हासकारणमेवेति भावः ॥ ३१ ॥

**आर्याप्यरुन्धती तत्र साहाय्यं कर्तुमर्हति ।**
**प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता ॥ ३२ ॥**

(प्रकाशिका)

किञ्चेत्याह —

आर्येति । आर्येति निर्देशेन स्वधर्मनिष्ठः सर्वः परमेश्वरस्यापि गौरवविषय इति द्योतयति । किं वयमेव नालमत्रेत्याह — प्रायेणेति । पुरन्ध्रीणां कुटुम्बिनीनाम् ॥ ३२ ॥

(विवरणम्)

गौरवविशेषाभावादरुन्धतीं प्रत्यप्याह —

आर्येति । आर्या अरुन्धती अपि तत्र साहाय्यं कर्तुम् अर्हति । अत्रार्यशब्दप्रयोगात् स्वधर्ममात्रनिरता जनाः सर्वेऽपि परमेश्वरस्यापि गौरवविषया इति द्योत्यते । अरुन्धती वसिष्ठपत्नी । अपिशब्दः पूर्वोक्तमुनिजनसाहाय्यसमुच्चयार्थः । तत्र कन्याप्रार्थनायां साहाय्यं सहायत्वं कर्तुम् अर्हति योग्या भवति । ननु वयमेव तत्रालं किमनयेत्यत्राह — एवंविधे कार्ये

१. 'नक्रियानि' ङ. पाठः. २. 'व्यापारं' मुद्रितकोशपाठः.

प्रायेण पुरन्ध्रीणां प्रगल्भता इति। एवंविधे स्त्रीपुरुषसङ्घटनादिरूपे कार्ये कर्तव्ये। प्रायेण, अनेन पुरुषाणां तत्र न्यूनप्रागल्भ्यत्वमुक्तम्। पुरन्ध्रीणां कुटुम्बिनीनां 'पुरन्ध्री स्यात्कुटुम्बिनी'ति भोजः। प्रगल्भता प्रागल्भ्यम्। स्त्रीजना एव तत्र प्रधानाधिकारिण इति भावः॥ ३२॥

**तत् प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम्।**
**महाकौशीप्रपातेऽस्मिन् सङ्गमः पुनरस्तु नः ॥ ३३ ॥**

(प्रकाशिका)

उपसंहरति —

तदिति। ओषधिप्रस्थमिति नाम। सिद्धये प्रस्तुतलाभाय। देवप्रसादायत्तं देवस्य दर्शनं क्व पुनर्भावीत्यत्राह — महाकौशीति। महाकौशीति हिमवत्प्रभवा कापि नदी। प्रपतत्यस्मिन्निति प्रपातः॥ ३३॥

(विवरणम्)

वचनमुपसंहरति —

तदिति। तद् यूयं सिद्धये ओषधिप्रस्थं हिमवत्पुरं प्रयात। तद् यस्मादवश्यं लोकहितार्थं कन्या प्रार्थनीया, तस्मादित्यर्थः। सिद्धये प्रस्तुतविवाहकार्यलाभाय। ओषधिप्रस्थमिति हिमवत्पुरस्य नाम। हिमवतः पुरं हिमवत्पुरम्। प्रयात प्रतिष्ठध्वं, प्रस्तुतविवाहकार्यसिद्ध्यर्थं भवद्भिरोषधिप्रस्थाभिधानां हिमवतो राजधानीं प्रति प्रयातव्यमित्यर्थः। 'चिन्तितोपस्थितांस्तावच्छाधि नः' (श्लो. २४) इति मुनिभिः प्रार्थितो निदेशानुग्रहोऽनेन कृतः। नन्वस्मत्प्रत्यागमसमये देवप्रसादमात्रायत्तं देवस्य दर्शनं कस्मिन् प्रदेशे पुनरस्माकं भविष्यतीत्यत्राह — पुनः नः सङ्गमः अस्मिन् महाकौशीप्रपाते अस्तु।

१. 'को'. २. 'रेव नः' मुद्रितकोशपाठः. ३. 'नराविर्भा' क. पाठः. ४. 'त्याह' घ. पाठः. ५. 'ति या' ङ. पाठः.

पुनर्भवतां प्रत्यागमनानन्तरम् । नः भवतामस्माकं च । सङ्गमः संयोगः । अस्मिन्निति सहस्तनिर्देशं वचनं सन्निधानं द्योतयति। हिमवच्छिखर एवेत्यर्थः। महाकौशीति हिमवत्प्रभवा काचन महानदी, तस्याः प्रपाते प्रपतत्यस्मिन्निति प्रपातः पतनस्थानं महाकौशीप्रपतनस्थाने इत्यर्थः । यस्मिन् देशे महाकौशी हिमवच्छिखरादागत्य पतति तस्मिन् प्रदेशे इत्यर्थः । कन्याप्रार्थनानन्तरमत्र दृश्यमाने महाकौशीप्रपतनस्थान एव भवद्भिरागन्तव्यं, वयं तु तत्रैव निवसाम इति भावः ॥ ३३ ॥

**तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे ।**
**जहुः परिग्रहव्रीलां प्राजापत्यास्तपस्विनः ॥ ३४॥**

(प्रकाशिका)

अथ प्रतिपन्नमहेश्वरनिदेशानां मुनीनां वृत्तमाह—

**तस्मिन्निति । संयमिनामाद्ये शास्त्रप्रणयनेन स्वयमनुष्ठानेन च निवृत्तिलक्षणस्य धर्मस्य संप्रदायप्रवर्तक इत्यर्थः । परिग्रहैः पत्नीभिः । व्रीलाम्, अद्याप्यमृदितकषाया वयमिति । प्राजापत्या ब्रह्मपुत्राः ॥३४॥**

(विवरणम्)

इत्थं भगवता नियुक्तानां सप्तर्षीणां मानर्म्यां प्रवृत्तिमाह—

तस्मिन्निति । संयमिनाम् आद्ये तस्मिन् परिणयोन्मुखे जाते प्राजापत्याः तपस्विनः परिग्रहव्रीलां जहुः । संयमिनां जितेन्द्रियाणाम् आद्ये श्रेष्ठे । अनेन भगवतः शास्त्रप्रणयनेन स्वयमेव तदुक्तार्थानुष्ठानेन च निवृत्तिलक्षणस्य धर्मस्य परम्पराप्रवर्तकत्वमुक्तम् । तस्मिन् परमेश्वरे । परिणयोन्मुखे परिणयो विवाहः तदर्थम् उन्मुखे उद्युक्ते जाते सति । प्रजापतेः ब्रह्मणः पुत्राः । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (४. १. ८५) । अनेन परिग्रहव्रीलाया उपपत्तिरुक्ता । तपस्विनः महर्षयः । नित्ययोगे मतुप् । परिग्रहैः पत्नीभिः व्रीलां

१. 'णध' क. पाठः.

लज्जां जहुः परित्यक्तवन्तः । निवृत्तिमार्गप्रवर्तके परमेश्वरे स्वयमेव प्रवृत्तिमार्गप्रधाने विवाहे प्रवृत्ते सति ब्रह्मपुत्रत्वात् सन्तततपश्चरणोद्युक्तत्वाच्च मृदितकषायत्वप्राप्त्युपपत्तौ सत्यामपि तदभावजनितां लज्जां सप्तर्षयः परितत्यजुरित्यर्थः ॥ ३४ ॥

**ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।**
**भगवानपि संक्रान्तः प्रथमोद्दिष्टमास्पदम् ॥ ३५ ॥**

(प्रकाशिका)

**तत इति । परमं बाढम् । 'ओमेवं परमं मते' इति सिंहः । प्रथमोद्दिष्टं महाकौशिकीप्रपातम् । अत्र सर्वेषां कार्यत्वरा गम्यते ॥ ३५ ॥**

(विवरणम्)

अथ तेषां गमनोद्योगमाह —

तत इति । ततः मुनिमण्डलं परमम् इति उक्त्वा प्रतस्थे । ततः भगवन्नियोगानन्तरम् । मुनीनां मण्डलं समूहः । परममित्यनुवादवाचकमव्ययम् । 'ओमेवं परमं मत' इति सिंहः । इतिशब्दः प्रकारवाची । उक्त्वा अभिधाय । प्रतस्थे गन्तुमारेभे । सप्तर्षयः परमेश्वरोदीरितमर्थं तथैवेति प्रतिज्ञाय गमनोद्योगं चक्रुरित्यर्थः । भगवतः प्रवृत्तिमाह — भगवानपि प्रथमोद्दिष्टम् आस्पदं सङ्क्रान्त इति । भगवान् परमेश्वरः । अपिशब्दः पूर्वोक्तमुनिमण्डलसमुच्चयार्थः । प्रथमं भगवतोद्दिष्टं निर्दिष्टम् । आस्पदं स्थानं सङ्क्रान्तः प्राप्तः । भगवानपि महाकौशीप्रपातं जगामेत्यर्थः । अनेन सर्वेषां कार्यत्वरा गम्यते ॥ ३५ ॥

**तं[2] आकाशमसिश्यामम् उत्पत्य परमर्षयः ।**
**आसेदुरोषधिप्रस्थं मनसा समरंहसः ॥ ३६ ॥**

(प्रकाशिका)

**त इति । असिश्याममित्यनेन तेषां गमनत्वरयाकाशे दूरोत्पतनं ध्वनितम् । मनसा समरंहस इति त्वरा ॥ ३६ ॥**

१. 'संप्राप्त', २. 'ते चाका' मुद्रितकोशपाठः.

* 'महाकौशी' (३३) श्लोके पाठः.

(विवरणम्)

तेषां गमनप्रकारमाह—

त इति। ते परमर्षयः आकाशम् उत्पत्य ओषधिप्रस्थम् आसेदुः। परमाः उत्कृष्टाः ऋषयः। अनेनाकाशगमनसामर्थ्यं द्योत्यते। आकाशमुत्पत्य आकाशाभिमुखमुत्पतनं कृत्वेत्यर्थः। ओषधिप्रस्थम् आसेदुः प्रापुः। चातुर्यविशेषादुत्पतनसमनन्तरमेवाकाशे दूरोत्पतनं द्योतयन्नाकाशं विशिनष्टि—असिश्याममिति। असिः खड्गः तद्वत् श्यामः यः तम्। आकाशस्य कृष्णवर्णत्वं प्रतीतिसिद्धम्। उक्तं च भट्टविष्णुना—

"अरूपमपि यद्रूपं नीलोत्पलदलच्छवि।
विभाति व्योमवत् तस्मै परस्मै विष्णवे नमः॥"

इति। दूरोपलक्ष्यमाणस्यैव आकाशस्य असिश्यामत्वादुत्पतनसमय एव तादृशदेशप्राप्तिरनेनोक्ता। तेन च कार्यत्वरा तेषां तपःप्रभावश्च ध्वन्यते। उत्पतनानन्तरमेव हिमवत्पुरप्राप्तौ हेतुमाह—मनसा समरंहस इति। मनसा समं तुल्यं रंहो येषां ते तथा। तादृशतपःप्रभावयुक्तानां किं किं न साध्यमित्यर्थः॥ ३६॥

**अलकामतिवाह्येव[1] वसतिं वसुसम्पदाम्।**
**स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम्॥ ३७॥**

(प्रकाशिका)

**अलकामिति। अतिवाह्य अतिक्रम्य। स्वर्गाभिष्यन्दवमनं स्वर्गे अमान्त्याः संपदः समानयनम्। अत्र कौटल्यः 'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' (कौटि. अर्थ. २. १. १९) इति। ग्रामादिनिवेशने यावत्संख्याको जनो व्यवस्थापितः, तावत्संख्याकाज्जनादाधिक्येन यो जनः समुत्पद्यते, सोऽभि-**

१. 'ह्यै' मुद्रितकोशपाठः.

ष्यन्दशब्देनोच्यते । तस्य वमनमन्यत्रानयनम् । अत्र त्वभिष्यन्दवमनं स्वर्गाधिकसमृद्ध्यानयनम् । वसुसंपदां वसतिमलकामतिवाह्येव स्वर्गाभिष्यन्दवमनं कृत्वेव चोपनिवेशितमोषधिप्रस्थमित्यन्वयः ॥ ३७ ॥

(विवरणम्)

अथ ओषधिप्रस्थस्य रमणीयत्वमाह दशभिः श्लोकैः । तत्रादौ सर्वसुखानां धनमूलत्वाद्धनबाहुल्यमाह —

अलकामिति । वसुसम्पदां वसतिम् अलकाम् अतिवाह्य इव स्वर्गाभिष्यन्दवमनं कृत्वा इव उपनिवेशितम् । वसूनां धनानां संपदां समृद्धीनां वसतिं निवासस्थानभूताम् अलकां वैश्रवणालयम् अतिवाह्य पराक्रमैरतिक्रम्येव च स्वर्गाभिष्यन्दवमनं स्वर्गे अभिष्यन्दवमनम् अतिरिक्तसंपदानयनं, स्वर्गे यावती संपद् माति ततोऽधिका संपदत्राभिष्यन्दशब्देनोच्यते, तस्या वमनमन्यत्रानयनं, स्वर्गे अमान्त्याः संपदः समानयनमित्यर्थः । कृत्वा विधायेव च उपनिवेशितं स्थापितम् । हिमवतेति शेषः । तादृशमोषधिप्रस्थं आसेदुरिति पूर्वेणान्वयः । अत्र हिमवत्पुरस्य धनपरिपूर्णत्वदर्शनादुत्प्रेक्षाद्वयम् । वैश्रवणालयमभिभूय तत्रस्थाः संपदः समानीय विरचितमिवेत्येका । स्वर्गादतिरिक्ताः संपदः समानीय विरचितमिवेत्यन्या । द्विविधा हि नयविदां प्रवृत्तिः । यदाह कौटिल्यः — भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेद्' इति । अत्राभिष्यन्दशब्दो भोजराजेन व्याख्यातः —

"द्वावभिष्यन्दनिष्यन्दौ सारे निष्पीडनोद्भवे ।
व्यवस्थितादभ्यधिकोऽप्यभिष्यन्दो जनादिकः ॥"

इति । अत्र तु धनं विवक्षितम् । अत एवादिशब्दप्रयोगः । अत्र वैश्रवणालयस्य परदेशत्वं स्वर्गस्य स्वदेशत्वं च गम्यते, तेन च वैश्रवणोऽपि हिमवदपेक्षया न्यूनः, स्वर्गसंपदपि तदायत्तेति च ध्वन्यते ॥ ३७ ॥

गङ्गास्रोतःपरिक्षिप्तं वप्रान्तज्वलितौषधि ।
ज्वलन्मणिशिलासालं गुप्तावपि मनोहरम् ॥ ३८ ॥

(प्रकाशिका)

गङ्गेति । परिक्षिप्तं कृतपरिखाकृत्यम् । वप्रः प्राकाराधिष्ठानम् । सालः प्राकारः । गुप्तौ रक्षायाम् । अन्यानि दुर्गाणि कर्दमोत्तराभिः परिखाभिः कण्टकशाखाधिष्ठितैर्वप्रैश्च शिलामात्रघटितैः सालैश्च दृष्टिपरुषाणि भवन्ति । इदं तु न तथेति व्यतिरेकध्वनिः ॥ ३८ ॥

(विवरणम्)

अथ रक्षाभावे धनस्याप्यस्थिरत्वप्रसङ्गाद् राजधान्या रक्षाप्राधान्याच्च हिमवत्पुरस्य रक्षाविशेषमाह —

गङ्गेति । गङ्गास्रोतःपरिक्षिप्तं गङ्गायाः स्रोतसा प्रवाहेण परिक्षिप्तं परिवेष्टितम् । कृतपरिखाकृत्यमित्यर्थः । अनेन परिखाया रमणीयत्वमुक्तम् । वप्रस्यापि रमणीयत्वमाह — वप्रान्तज्वलितौषधि । वप्रस्य प्राकाराधिष्ठानस्य । 'स्याच्चयो वप्रमस्त्रियामि'त्यमरः । प्राकारस्थैर्यार्थं तस्य परितः कल्पितस्याधिष्ठानस्येत्यर्थः । अन्ते पर्यन्ते ज्वलिताः दीप्ताः ओषधयः वृक्षविशेषा यस्मिंस्तत् । सालस्यापि मनोहरत्वमाह — ज्वलन्मणिशिलासालमिति । ज्वलन्तो मणयः रत्नान्येव शिलाः पाषाणाः तैः कल्पितः सालः प्राकारो यस्मिंस्तत् । 'प्राकारो वरणः साल' इति सिंहः । एवम्भूतत्वादेवाह — गुप्तावपि मनोहरम् इति । गुप्तौ रक्षायामपि मनोहरं रमणीयम् । अन्यानि पुराणि कर्दमप्रायैः कलुषैरशुचिभिश्च जलैः परिपूरिताभिः परिखाभिः परिवेष्टितानि, कण्टकिद्रुमावृतैर्वप्रैश्च दृष्टिपरुषाणि, शिलामात्रघटितैः सालैश्च दिदृक्षूणां चक्षूंषि न रञ्जयन्तीति गुप्तौ (न) रमणीयानि । इदं तु गुप्तावपि मनोहरमेवेति व्यतिरेकध्वनिश्चायम् ॥ ३८ ॥

---

१. 'ज्वे', २. 'बृहन्म' मुद्रितकोशपाठः. ३. 'भोगमा' इ. पाठः.

**वीतसिंहभया नागा यत्राश्वा बिलयोनयः ।**
**यक्षकिंपुरुषाः पौरा योषितो वनदेवताः ॥ ३९ ॥**

(प्रकाशिका)

वीतेति । वीतसिंहभयत्वं दिव्यत्वात् । हिमवति क्वचिद् बिले अश्वानामुत्पत्तिरैतिह्यसिद्धा सिंहलद्वीप इव महिषाणाम् । ननु—

"अमृताद् बाष्पतो वह्नेर्देवेभ्योऽण्डाच्च गर्भतः ।
साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्तिता ॥"

इत्यश्वशास्त्रेषु परिगणनात् कथं बिलादुत्पत्तिः । अत्र दिव्यत्वात् परिहारः । वनदेवता इति हिमवतः स्थावरराजत्वात् ॥ ३९ ॥

(विवरणम्)

दिव्यत्वमाह—

वीतेति । यत्र नागाः वीतसिंहभयाः । नागाः गजाः । वीतं विरहितं सिंहाद् भयं येषां ते तथा । यत्र गजाः सिंहेषु सत्स्वप्योषधिप्रस्थस्य दिव्यत्वात् तद्भयविरहिता इत्यर्थः । ननु 'पदं तुषारस्रुतिधौतरक्तम्' (स. १. श्लो. ६) इत्यत्र सिंहानां हतद्विपत्वमुक्तम् । इदानीं कथं गजानां वीतसिंहभयत्वम् । मैवम् । हिमवतः शृङ्गान्तरापेक्षया पूर्वमुक्तम् । इदानीं पुनरोषधिप्रस्थनगरमात्रापेक्षयेत्यविरोधात् । तत्रत्यानामश्वानामपि व्यतिरेकं सुलभत्वं चाह—यत्र अश्वाः बिलयोनयः इति । बिलमेव योनिरुद्भवस्थानं येषां ते तथा । अश्वशास्त्रे ह्यश्वानां सप्तधा जन्म प्रतिपादितम्—

"अमृताद् बाष्पतो वह्नेर्देवेभ्योऽण्डाच्च गर्भतः ।
साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्तिता ॥"

इति । अत्र तु दिव्यत्वाद् बिलादुत्पत्तिः । पुराणप्रसिद्धा च हिमवति बिलादश्वोत्पत्तिः । यथा सिंहलद्वीपे महिषोत्पत्तिः । पौराणामपि विशेषमाह—यत्र

---

१. 'जि', २. 'क्षाः किं' मुद्रितकोशपाठः ३. 'षणमा' ङ. पाठः.

यक्षकिंपुरुषाः पौरा इति । यत्र ओषधिप्रस्थे यक्षाः किंपुरुषाश्च पौराः पुरवासिनो भवन्ति । अनेन पौराणामपि दिव्यत्वमुक्तम् । योषितामपि दिव्यत्वमाह — यत्र वनदेवताः योषितः इति । वनाधिष्ठात्र्यो देवताः । हिमवतः स्थावरराजत्वात् स्थावरदेवताजनोपस्थानम् । योषितः स्त्रियः ॥ ३९ ॥

**शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मसु ।**
**अनुगर्जितसन्दिग्धाः करणैर्मुरवस्वनाः ॥ ४० ॥**

(प्रकाशिका)

**शिखरेति । करणैः** पटहाद्यवस्थापितैर्वाद्यताडनविच्छेदैः । तथा राजकन्दर्पे —

"नृत्तवादित्रगीतानां प्रयोगवशभेदिनाम् ।
संस्थानं ताडनं रोधः करणानि प्रचक्षते ॥"

इति । गृहशिखरासक्तत्वान्मेघानामनुस्यूतैर्गर्जितैः संशयिता मुरवध्वनयो यत्र करणैः पृथक्त्वेन ज्ञायन्त इत्यर्थः ॥ ४० ॥

(विवरणम्)

औन्नत्यं नित्यप्रवृत्तोत्सवत्वं चाह—

शिखरेति । यत्र वेश्मसु शिखरासक्तमेघानाम् अनुगर्जितसन्दिग्धाः मुरवस्वनाः करणैर्व्यज्यन्ते । वेश्मसु गृहेषु । शिखरेषु शिरोगृहेषु आसक्तानामवस्थितानां मेघानाम् (अनुगर्जितैः) अनुस्यूतैः गर्जितैः शब्दैः । 'स्तनितं गर्जितं मेघनिर्घोष' इत्यमरः । सन्दिग्धाः संशयिताः मुरवानां मुरजानां स्वनाः शब्दाः । 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । करणैः वाद्यताडनविच्छेदविशेषैः । तालैरित्यर्थः । यथोक्तं सङ्गीतशास्त्रे —

---

१. 'नाम् । ', २. 'ज' मुद्रितकोशपाठः. ३. 'तालं क' ग.घ.ङ. पाठः. ४. 'मू' क. पाठः. ५. 'वं चा' क. ख. ग.घ. पाठः.

"नृत्तवादित्रगीतानां प्रयोगवशभेदिनाम् ।
संस्थानं ताडनं तालं करणानि प्रचक्षते ॥"

इति । व्यज्यन्ते विविच्य ज्ञायन्ते । गृहाणां मेघमार्गावगाहित्वान्नित्यप्रवृत्तोत्सवेषु तेषु घनगर्जितानां मुरवस्वनानां च नित्यमनुस्यूतत्वादुभयोः सान्द्रगभीरत्वाच्च किमेतानि मेघगर्जितानि उत मुरवस्वना इति जनानां संशये सति परस्परभेदावगमस्य स्वतो दुष्करत्वेऽपि यत्र जनास्तालविशेषैरेव मुरवस्वनान् विविच्यावगच्छन्तीत्यर्थः । घनगर्जितानां तालविशेषाभावादिति भावः ॥ ४० ॥

**यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।**
**गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥ ४१ ॥**

(प्रकाशिका)

**यत्रेति । यन्त्रशब्देन परस्पराधारदारुको नीप्रप्रान्तो विवक्षितः । अपौरादरनिर्मिता पौरप्रयत्नं विनैव सम्पादिता ॥ ४१ ॥**

(विवरणम्)

कल्पद्रुमाणामपि सद्भावमाह —

यत्रेति । यत्र कल्पद्रुमैः एव गृहयन्त्रपताकाश्रीः । कल्पद्रुमैः कल्पवृक्षैः करणभूतैः । एवशब्दः पताकान्तरव्यावृत्त्यर्थः । गृहे यानि यन्त्राणि पताकाबन्धनार्थं परस्परसङ्घटिताः दारुविशेषाः तेषु वर्तमानानां पताकानां ध्वजपटानां श्रीः शोभा । भवतीति शेषः । यत्र कल्पवृक्षैरेव ध्वजपटशोभा जायत इत्यर्थः । कल्पद्रुमेषु ध्वजपटशोभायाः सम्भावनां दर्शयति — विलोलविटपांशुकैरिति । विलोलानि चञ्चलानि विटपेषु शाखासु वर्तमानान्यंशुकानि वसनानि येषु ते तथा । अत्र यन्त्रप्रतिवस्तुतया विटपानामुपादानं, पताकाप्रतिवस्तुत्वेनांशुकानामिति विवेकः । निर्माणप्रयासाभावेनापि व्यति-

१. 'ना स' छ. पाठः.

रेकं दर्शयति—अपौरादरनिर्मितेति । आदरशब्देनात्रादरस्य कार्यभूतः प्रयत्नः कार्यकारणसम्बन्धाल्लक्ष्यते । निर्मातव्यस्य शोभाधिक्यप्रतीतिश्च फलम् । पौरैः प्रयासेन निर्मिता न भवतीत्यपौरादरनिर्मितेति । अथवा सर्वत्र हि पुरवासिभिरादरातिशयात् पताकाः क्रियन्ते । इह तु स्वयमेवोत्पन्नत्वान्न तथेत्यर्थः । यत्र ध्वजपटानां कार्यं कल्पवृक्षांशुकैरेव भवतीति भावः ॥ ४१ ॥

**यत्र स्फटिकहर्म्येषु नक्तं सोपानपङ्क्तिषु ।**
**ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२ ॥**

(प्रकाशिका)

**यत्रेति । उपहारः कुसुमोपहारः ॥ ४२ ॥**

(विवरणम्)

एवं पुष्पोपहारोत्पादनप्रयासस्याप्यभावमाह—

यत्रेति । यत्र स्फटिकहर्म्येषु सोपानपङ्क्तिषु नक्तं ज्योतिषां प्रतिबिम्बानि उपहारतां प्राप्नुवन्ति । स्फटिकमयेषु हर्म्येषु सौधेषु । सोपानं हर्म्याद्यारोहणभूमिः । 'आरोहणं स्यात् सोपानमि'ति सिंहः । सोपानानां पङ्क्तिषु परम्परासु । नक्तमिति रात्रिवाचकमव्ययम् । रात्रावित्यर्थः । ज्योतिषां नक्षत्राणां प्रतिबिम्बानि प्रतिच्छायाः उपहारतां पुष्पोपहारत्वं प्राप्नुवन्ति गच्छन्ति । सर्वत्र हि जनाः प्रयत्नेन कुसुमान्यानीय क्रीडागृहसोपानपरम्परासु सन्ध्यायां पुष्पोपहारान् कुर्वन्ति, ओषधिप्रस्थे तु नक्षत्रप्रतिबिम्बैरेव पुष्पोपहारः, सोपानपङ्क्तीनां स्फटिकमयत्वादिति भावः ॥ ४२ ॥

**यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।**
**अनभिज्ञास्तमिस्राणां दुर्दिनेऽप्यभिसारिकाः ॥ ४३ ॥**

---

१. 'त्र पु' ङ. पाठः. २. 'अ' ङ. पाठः. ३. 'क्तमापानभूमिषु', ४. 'प्व' मुद्रितकोशपाठः.

(प्रकाशिका)

यत्रेति । सञ्चरः सञ्चारविषयः । तमिस्रं तमः । दुर्दिने मेघतिमिरे ॥ ४३ ॥

( विवरणम् )

अभिसारितवृत्तस्यापि तत्रैव सौकर्यमित्याह—

यत्रेति । यत्र अभिसारिकाः दुर्दिनेऽपि तमिस्राणामनभिज्ञाः । या मदनातुरा कान्तमभिसरति, साभिसारिकेत्युच्यते । 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिके'त्यमरः । दुर्दिने मेघावृते दिवसेऽपि । 'मेघच्छन्नेऽह्नि दुर्दिनमि'ति सिंहः । तमिस्राणां तमसाम् । 'तमिस्रं तिमिरं तम' इत्यमरः । कर्मणियं षष्ठी । अभिज्ञा न भवन्तीत्यनभिज्ञाः, अज्ञा इत्यर्थः । भवन्तीति शेषः । अभिसारिका हि सर्वत्र नक्षत्रशशिप्रभारहितासु मेघसंवृतासु निशासु तमसा पीड्यन्ते, ओषधिप्रस्थे तु (न) तथेत्यर्थः । नक्तम् ओषधिप्रकाशेन दर्शितसञ्चरा इति । नक्तं रात्रौ ओषधीनां निशासु ज्वलतां वृक्षविशेषाणां प्रकाशेन भासा दर्शितः प्रकाशितः सञ्चरः सञ्चारविषयभूतो याभ्यस्तास्तथा । सञ्चरशब्दो 'गोचरसञ्चर—'(३.३.११९) इत्यादिना निपातितः । 'मार्गोऽध्वा सञ्चरः पन्था' इति भोजः । ओषधिप्रभया प्रकाशितमार्गा इत्यर्थः । अत एव तमसामनभिज्ञा इत्युक्तम् । यत्राभिसारिकाः सुखेनैव रमणवसतिं प्रयान्तीति भावः ॥४३॥

**यौवनान्तं वयो यस्मिन्नातङ्कः कुसुमायुधः ।**
**रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्ययः ॥ ४४ ॥**

(प्रकाशिका)

यौवनेति । अन्तशब्दः स्वरूपवचनः । 'अन्तोऽस्त्र्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति यादवप्रकाशः । आतङ्को भयहेतुरित्यर्थः । अत्र यौवनेतरवयःप्रभृतिनिषेधपरत्वाद् वाक्यस्य परिसङ्ख्यालङ्कारः ॥ ४४ ॥

---

१. 'न् नान्तकः कुसुमायुधात्' मुद्रितकोशपाठः. २. 'वः ।' ङ. पाठः.

(विवरणम्)

किञ्च तत्रत्यानां[1] दुःखलेशोऽपि नास्तीत्याह —

यौवनेति । यस्मिन् वयः यौवनान्तं यौवनस्वरूपम् । 'अन्तोऽस्त्र्य-वसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति यादवः । ओषधिप्रस्थवास्तव्यानां जनानां सदा यौवनस्वरूपमेव वयः, न कदाचिदपि बाल्यस्वरूपं नापि वार्धक्यादिस्वरूपमिति भावः । जननसमयादारभ्य सर्वदा यौवनस्था एव योषितः पुरुषाश्चेति भावः । दिव्यत्वमत्र हेतुः । राजादिदोषजनितानां भयहेतूनामप्यभावमाह — कुसुमायुधः आतङ्कः । कुसुमायुधः कामदेवः[2] । स एव आतङ्कः भयहेतुरित्यर्थः । यस्मिन् कुसुमायुधादेव भयं, न शात्रवादिभ्य इत्यर्थः । अत्र हिमवतः प्रतापातिशयो हेतुः । रोगादिपीडापि नास्तीत्याह — रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्ययः इति । रतेर्हेतोः खेदो देहसादः तस्मात् समुत्पन्ना सञ्जाता निद्रैव संज्ञाविपर्ययः मोह इति यावत् । अतिविततरतिश्रमानन्तरभाविनी निद्रैव मोहः, न रोगादिसमुद्भवा नष्टचेष्टतेति भावः । अत्रापि दिव्यत्वं हेतुः । अनेन वाक्येन यौवनेतराणि वयांसि, कुसुमायुधव्यतिरिक्ता भयहेतवः, रतिश्रमसञ्जातमहानिद्राव्यतिरिक्तो मोहश्च तदितरविधिमुखेन निषिध्यन्त इति परिसङ्ख्यालङ्कारः ॥ ४४ ॥

**भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।**
**यत्र कोपैः कृताः स्त्रीणाम[3]प्रसादार्थिनः प्रियाः ॥ ४५ ॥**

(प्रकाशिका)

**भ्रूभेदिभिरिति । ललितेत्यादि बहुव्रीहिः । यत्र स्त्रीणां कोपैः प्रिया अप्रसादार्थिनः कृताः । तथा यत्र स्त्रीणां कोपो रमणीयः, यथा प्रेयांसः प्रसादनार्थं[4] नार्थयन्त इति लोकतो व्यतिरेकः । विशेषणानि च**

१. 'नां जनानां दुः' ङ. पाठः. २. 'वः आ' ङ. पाठः. ३. 'मा' मुद्रितकोशपाठः. ४. 'दं नार्थं' घ. ङ. पाठः.

तदभिप्रायेणोपात्तानि । दक्षिणावर्तस्तु— आप्रसादार्थिनः यावत्प्रसादम-र्थिनः । यत्र स्त्रीणामेवंविधैः कोपैरेव प्रिया आप्रसादार्थिनः कृताः, नान्येषां शत्रूणां कोपैरिति भाव इति व्याचष्ट । न त्वेतदौपयिकमिति प्रतिभाति, यतो न तावत् परिसङ्ख्यात्र स्वारसिकी । परिसङ्ख्यापक्षे विशे-षणानां च निरुपयोगता । अर्थनीयं च किञ्चिदन्यदन्वेष्टव्यम् । प्रसाद-स्यावधित्वेन निर्देशात् । प्रसादस्यैवार्थनीयत्वे प्रसादार्थिन इत्येवं वक्तुं युक्तम् । तदा च वीररसस्य प्रकृतत्वाद् भटा इत्यादि युक्तम्, न तु प्रिया इति ॥ ४५ ॥

(विवरणम)

किञ्च तत्राप्यद्भुतं किञ्चिदस्तीत्याह —

भ्रूभेदिभिरिति । यत्र स्त्रीणां कोपैः प्रियाः अप्रसादार्थिनः कृताः । स्त्रीणां कोपैः सपत्नीनामग्रहणादिजनितैः । प्रियाः कान्ताः । प्रसादमर्थयितुं शीलमेषामिति प्रसादार्थिनः, तथाविधा न भवन्त्यप्रसादार्थिनः कृताः विहि-ताः । सर्वत्र हि कुपितासु वल्लभासु तदैव पादप्रणामादिभिः तासां प्रसाद-मर्थयन्ते । ओषधिप्रस्थे तु न तथा । तासां कोपकालमात्रसुलभानतिमनोहरान् भावविशेषानेव सानन्दमवलोकयन्तो रमन्त इति भावः । अत एव कोपस्य रमणीयत्वप्रतिपादकानि विशेषणान्याह — भ्रूभेदिभिरित्यादिना । भ्रूभेदवद्भिः, सभ्रूकुटिकैरित्यर्थः । तथा सकम्पोष्ठैः सकम्पाः कम्पसहिताः ओष्ठाः दन्तच्छदा येषु तैः । तथैव ललिताङ्गुलितर्जनैः ललितानि मनोहराणि अङ्गुलिभिः तर्ज-नानि भर्त्सनानि येषु तैः । नह्येतादृशा रमणीया भावाः कोपेन विना लभ्यन्त इति युक्तमप्रसादार्थित्वं प्रियाणामिति भावः ॥ ४५ ॥

**सन्तानकतरुच्छायासुप्तविद्याधराध्वगम् ।**
**यस्य चोपवनं बाह्यं सुगन्धिर्गन्धमादनः ॥ ४६ ॥**

---

१. 'दविषयः ।' ख. ङ. पाठः. २. 'वं' ग. घ. पाठः. ३. 'दा वी' घ. पाठः.

(प्रकाशिका)

**सन्तानकेति । यस्य बाह्यमुपवनं गन्धमादन इति । तत्रत्यानामासन्नत्वेनोपभोग्यत्वादियमुक्तिः । गन्धमादनशब्दस्य नपुंसकतां मत्वा गन्धवदिति केचित् पठन्ति । अन्ये तु पुस्त्वं मत्वा सुगन्धिरिति । केशवस्त्वाह 'गन्धमादनशब्दस्तु नृनपोः पर्वतान्तर' इति । अत्र प्रकरणे 'अलकाम्'(श्लो. ३७)इति 'गङ्गास्रोतः'(श्लो. ३८) इति च पद्ययोरोषधिप्रस्थेन वैभक्तोऽन्वयः, तदनन्तरेषु यच्छब्दशक्तिकृतः । न च यच्छब्दानामुत्तरत्र तच्छब्देन सम्बन्धः । प्रागेवाध्याहृततच्छब्देन 'आसेदुरोषधिप्रस्थम्' (श्लो. ३६) इत्यनेनापेक्षाशमनात् ॥ ४६ ॥**

(विवरणम्)

उपवनस्यापि तत्राप्रयासलभ्यत्वमाह --

सन्तानकेति । यस्य बाह्यम् उपवनं गन्धमादनः च । यस्य ओषधिप्रस्थस्य बाह्यं बहिर्भागभवम् उपवनम् उद्यानं गन्धमादनः गन्धमादनाख्यः पर्वतः । चशब्दोऽवधारणे । तत्रत्यानामासन्नत्वादुपभोग्यत्वेन यस्य बाह्योद्यानं गन्धमादनपर्वत एव भवतीत्यर्थः ।

"हिमवान् निषधो विन्ध्यो माल्यवान् पारियात्रकः ।
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥"

इत्यमरसिंहवचनाद् यद्यपि गन्धमादनशब्दस्य नपुंसकत्वं, तथापि 'गन्धमादनशब्दस्तु नृनपोः पर्वतान्तरे' इति केशवस्वामिवचनानुसारेणात्र पुँल्लिङ्गतानिर्देशः । तत्रत्यानामुपभोगप्रकारानेव संक्षिप्य दर्शयति — सन्तानकतरुच्छायासुप्तविद्याधराध्वगम् इति । उपवनविशेषणं चेदम् । सन्तानकतरूणां कल्पवृक्षाणां छायासु सुप्ताः विद्याधरा एव अध्वगाः पथिका यस्मिंस्तत् तथा । अनेन हिमवतो रक्षाचातुर्यात् तेषां वीतभयत्वं द्योत्यते । गन्धमादनस्योपवनध-

मेवत्त्वमाह — सुगन्धिरिति । शोभनो गन्धो यस्य स सुगन्धिः । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' (५. ४. १३५) इति (इकारः समासान्तः) ॥ ४६ ॥

**तत् कान्तं मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।**
**स्वर्गाभिसन्धिं सुकृतां वञ्चनामिव मेनिरे ॥ ४७ ॥**

(प्रकाशिका)

तदिति । कान्तं तथा कान्तमित्यर्थः । दिव्या इति तेषां स्वर्गादन्यत्र बहुमानस्याद्भुतत्वं द्योतयति । स्वर्गेऽभिसन्धिं पुण्यफलेभ्यो विशिष्टबुद्धिम् । वञ्चनां मेनिर इवेत्यतथाभावे तथाभाव उत्प्रेक्ष्यते बहुमानातिशयद्योतनाय ॥ ४७ ॥

(विवरणम्)

तादृशहिमवत्पुरदर्शने मुनीनां मनोवृत्तिविशेषमाह —

तदिति । दिव्याः मुनयः हैमवतं तत् पुरं प्रेक्ष्य सुकृतां स्वर्गाभिसन्धिं वञ्चनां मेनिर इव । दिवि भवा दिव्याः । 'द्युप्रागपागुदक्प्रतीचो यत्' (४.२.१०१)। अनेन तेषां स्वर्गादन्यत्र बहुमानो दुर्लभ इति द्योत्यते । स्वर्गिणामप्येतद्दर्शने विस्मयो जातः, किं पुनरितरेषामिति भावः । (हैमवतं) हिमवत्स्वामिकं तत् पूर्वोक्तं पुरं राजधानीं प्रेक्ष्य दृष्ट्वा । शोभनं कर्म कुर्वन्तीति सुकृतः तेषाम् । यागादिकर्मकृतामित्यर्थः । स्वर्गे अभिसन्धिं पुण्यफलेभ्यो विशिष्टबुद्धिम् । स्वर्गफलस्यैव प्राधान्यमिति बुद्धिमित्यर्थः । वञ्चनां वञ्चनया जनितां मेनिरे कल्पितवन्त इव । पुण्यफलेभ्यः सर्वेभ्यः स्वर्गप्राप्तेरेव वैशिष्ट्यमिति या सुकृतिनां बुद्धिः, तां प्राक्तनैः कैश्चिदापादितया वञ्चनया जनितां मेनिर इवेत्यर्थः । वञ्चनाशब्देनात्र वञ्चनायाः कार्यं लक्ष्यते । अत्र वञ्चनामननाभावेऽपि तथात्वमुत्प्रेक्ष्यते । तेन च तेषामोषधिप्रस्थविषयो

---

१. 'मत्वमा' ङ. पाठः. २. 'अथ ते मु', ३. 'न्धिसुकृतं व' मुद्रितकोशपाठः.

बहुमानातिशयो द्योत्यते। तथात्वोत्प्रेक्षायां हेतुमाह— कान्तमिति। पूर्वोक्तप्रकारेण रमणीयमित्यर्थः॥ ४७॥

**ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः।**
**अवपेतुर्जटाभारैर्लिखितानलनिश्चलैः॥ ४८॥**

(प्रकाशिका)

त इति। अवपेतुरिति प्रथमं दूरोत्पतनात्। अत एव उन्मुखद्वाःस्थवीक्षिताः। वेगातिशयाच्च जटाभाराणां चित्रगतानलप्रख्यत्वम्॥ ४८॥

(विवरणम्)

अथ तेषां गिरीन्द्रभवनप्राप्तिप्रकारमाह—

त इति। ते गिरेः सद्मनि वेगादवपेतुः। सद्मनि गृहे वेगाद् वेगमवलम्ब्येत्यर्थः। अनेन भगवन्नियोगानुष्ठानत्वरा गम्यते। अवपेतुः अवतीर्णवन्तः। 'त आकाशमसिश्यामम्मुत्पत्य परमर्षयः' (श्लो. ३६) इत्यत्र पूर्वमुत्पतनस्योक्तत्वादिदानीमवपतनमुक्तम्। अत एव उन्मुखद्वाःस्थवीक्षिताः। उन्मुखैः ऊर्ध्वीकृतमुखैः द्वाःस्थैः द्वारपालैः अवलोकिताः। एते के दूरादवतरन्तीति द्वारपालैः क्षणमात्रं दृष्टाः, न तु पृष्टाश्चेत्यर्थः। वेगातिशयादिति भावः। अत एव लिखितानलनिश्चलैः जटाभारैः उपलक्षिताः। चित्रेषु लिखिता अनला लिखितानलाः, तद्वन्निश्चलैः अचञ्चलैः। जटाभारैः। इत्थंभूतलक्षणे तृतीया। जटैव भारः जटाभारः। भारशब्दो बहुत्वं द्योतयति। अतिदूराद् गगनप्रदेशादतिवेगेनावतरणसमये हि जटाभाराणामूर्ध्वाग्रत्वम् अचञ्चलत्वं च भवति। अत एव लिखितानलोपमा। नहि लिखितोऽनलः समीपवर्तिनो

---

१. 'तेरुर्ज' मुद्रितकोशपाठः २. 'मिप्र' ङ. पाठः. ३. 'भव्य।' ङ. पाठः.

जनानौष्ण्येन बाधते, ताम्रवर्णत्वं च नोपजहाति। जटानां ताम्रवर्णत्वं च प्रसिद्धम् ॥ ४८ ॥

**गगनादवतीर्णा सा यथावृद्धपुरस्सरा।**
**तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥ ४९ ॥**

(प्रकाशिका)

**गगनादिति।** यथावृद्धेति। अत्र वराहमिहिरः—

"पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात्।
तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च ॥
पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः।
तत्र वसिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी ॥"

इति ॥ ४९ ॥

(विवरणम्)

गिरिराजदर्शने तेषां क्रमप्राप्तिं वर्णयति—

**गगनादिति।** गगनादवतीर्णा यथावृद्धपुरःसरा सा मुनिपरम्परा तोयान्तर्भास्करालीव रेजे। गगनाद् आकाशाद् अवतीर्णा कृतावतारा। यथावृद्धं वृद्धजनानतिक्रमेण पुरस्सरा अग्रगामिनो यस्यां सा तथा।

"मरीचिः पूर्वभागस्थो वसिष्ठः (पु?प)रतस्ततः।
ततोऽङ्गिरास्ततश्चात्रिः पुलस्त्यः पुलहः क्रतुः ॥"

इति पराशरसंहितायां प्रसिद्धस्तेषामवस्थानक्रमोऽत्र दर्शितः। मुनीनां सप्तर्षीणां परम्परा पङ्क्तिः। तोयस्य जलस्य (अन्तः) अन्तर्भागे (भास्कराणां) सूर्यप्रतिबिम्बानाम् आलिः पङ्क्तिरिव रेजे शोभते(स्म)। यथा चञ्चलस्य जलस्यान्तर्भागे सूर्यप्रतिबिम्बपरम्परा शोभते, तथा सप्तर्षिपरम्परापि गिरिराजभवने शु-

शुभ इत्यर्थः । भास्करशब्देनात्र तत्प्रतिबिम्बो लक्ष्यते । भास्करस्य जलप्रवेश-बहुत्वयोरनुपपत्तेः । बिम्बप्रतिबिम्बभावः सम्बन्धः । मुनिपरम्परायास्तेजःप्र-कर्षप्रतीतिः फलम् । प्रतिबिम्बं हि बिम्बापेक्षया न्यूनप्रभं भवति । अत एव रघुवंशे तेजःप्रकर्षस्याप्रतिपाद्यत्वाद् —

"बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा ॥" (स. १२. श्लो. १००)

इत्यत्र प्रतिमाशब्दमेव प्रयुक्तवान् । तत्र हि रक्तासिक्तत्वं प्रतिपाद्यम् । अत एव बालशब्दोपादानम् ॥ ४९ ॥

**तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः ।**
**नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥ ५० ॥**

(प्रकाशिका)

**तानिति** । अर्घ्यान् पूज्यान् ॥ ५० ॥

(विवरणम्)

अथ गिरीन्द्रस्य प्रत्युत्थानप्रकारमाह —

तानिति । गिरिः अर्घ्यम् आदाय तान् दूरात् प्रत्युद्ययौ[1] । अर्घः पूजा तदर्थं जलमर्घ्यम् आदाय गृहीत्वा तान् दूरात् । यदा तेषा-मीषद्दर्शनं जातं, तदैवोत्थायेत्यर्थः । अनेनादरातिशय उक्तः । अर्घ्यानिति पूज्यानित्यर्थः । गिरेर्गौरवातिशयमाह — सारगुरुभिः पादन्यासैः वसुन्धरां नमयन् इति । सारो बलं तेन गुरुत्वयुक्तैः । द्विविधं हि शरीराद्यवयवि-द्रव्यम् । तत्र श्लथावयवानां कार्पासभाण्डादिवन्न गुरुत्वं, नापि शक्तिः । निबिडावयवानां पुनरायसपिण्डादिवद् गुरुत्वं बलवत्त्वं चास्तीति युक्तं सार-

1. 'यौ इत्यन्वयः ।' क. ख. ग. घ. पाठः.

वतो गुरुत्वम् । पादयोर्न्यासैः अवस्थापनैः वसुन्धरां भूमिं नमयन् नतां कुर्वन् । निजशरीरगौरवेण वसुन्धरां प्रतिपदन्यासनतां विदधान इत्यर्थः ॥

**धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।**
**प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥ ५१ ॥**

(प्रकाशिका)

**धात्विति । स्थावराकारैर्दृष्टैर्धातुदेवदारुशिलापट्टैरधरभुजवक्षसां(?) साम्यदर्शनात् प्रांशुत्वाच्च हिमवानिति सुव्यक्त इत्यभिप्रायः ॥ ५१ ॥**

(विवरणम्)

मुनीनां तद्दर्शनानन्तरं कोऽयमागच्छतीति सन्देहो न जात इत्याह —

धात्विति । हिमवान् इति सुव्यक्तः । अभूदिति शेषः । पर्वताकारं शरीरं परित्यज्य देवतात्मकं शरीरमादायागच्छन्नपि हिमवानेवायमिति सम्यग् व्यक्तोऽभूदित्यर्थः । नन्वसाधारणधर्मदर्शनाभावे कथं सुव्यक्तत्वमितीमामाशङ्कामसाधारणधर्मप्रतिपादनमुखेन परिहरति चतुर्भिर्विशेषणैः । तत्रादौ मुखदर्शन एव जायमानं विशेषमाह — धातुताम्राधर इति । धातुवद् गैरिकवत् ताम्रः रक्तवर्णः अधरः ओष्ठो यस्य स तथा । अनेनास्याधरस्य स्थावरात्मके शरीरे दृश्यमानेन धातुना साम्यमुक्तम् । शरीराकारस्यापि विशेषमाह— प्रांशुरिति । उन्नतकाय इत्यर्थः । अनेन स्थावरशरीरे दृश्यमानं प्रांशुत्वमस्याप्यस्तीति प्रतिपाद्यते । अस्य भुजानामपि विशेषमाह — देवदारुबृहद्भुज इति । देवदारुर्वृक्षविशेषः, तद्वद् बृहन्तौ[1] महान्तौ भुजौ यस्य स तथा । अनेन भुजस्य स्थावरशरीरे दृश्यमानैर्देवदारुभिः सादृश्यमुक्तम् । अस्य वक्षःप्रदेशस्यापि विशेषमाह — प्रकृत्या एव शिलोरस्क इति । प्रकृत्या स्वभावत एव शिलेव कठिनं विस्तीर्णं च उरः वक्षःप्रदेशो यस्य स तथा । अनेन स्थावरा-

---

१. 'न्तौ भु' क. ख. ग. घ. पाठः.

कारे दृष्टचरैः शिलापट्टैरस्य वक्षसः साम्यमुक्तम् । स्थावराकारावयवभूतैर्धातु-
देवदारुशिलापट्टैरस्याप्यधरभुजवक्षसां सादृश्योपलम्भात् प्रांशुत्वाच्च देवशरी-
रावलम्बनेऽपि हिमवानेवायमिति सुव्यक्तोऽभूदित्यर्थः । अनेनास्य शरीरस्य
महापुरुषलक्षणत्वं प्रतिपादितम् । तेन च परमेश्वरसम्बन्धयोग्यत्वं द्योत्यते ॥

**विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः ।**
**स तैराक्रामयामास शुद्धान्तं शुद्धकर्मभिः ॥ ५२ ॥**

(प्रकाशिका)

विधीति । स्वयमिति प्रेष्यवृत्तिरुक्ता । शुद्धान्तं राजगृहम् । शुद्धकर्मभिराक्रामयामासेति शुद्धान्तपावनाभिप्रायो द्योत्यते ॥ ५२ ॥

(विवरणम्)

तेषां राजभवनप्रापणमाह[3]

विधीति । सः तैः शुद्धान्तम आक्रमयामास । तैः सप्तर्षिभिः शु-
द्धान्तं राजगृहम् । 'भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्चे'त्य-
मरः । आक्रमयामास पादन्यासपूतं कारयामासेत्यर्थः । 'क्रमु पादविक्षेप'
इत्यस्माद्धातोर्णिजन्तोऽयं शब्दः । अर्घ्यपाद्यादिभिः पूजा तु दर्शनानन्त-
रमेव कृतेत्याह — विधिप्रयुक्तसत्कारैरिति । विधितः शास्त्रतः प्रयुक्तः स-
त्कारः पूजा येभ्यस्तैः । राजगृहप्रापणप्रकारमाह — स्वयं मार्गस्य दर्शक
इति । स्वयं स्वयमेव, न तु परिजनैः । अनेनात्मनस्तेषां प्रेष्यवृत्ति-
रुक्ता । मार्गस्य दर्शकः उपदेष्टा । स्वयमेवाग्रतो गच्छन्नित इतो भवन्त इति
सविनयमवददित्यर्थः । तेषां शुद्धान्तप्रवेशे शुद्धान्तस्यापि शुद्धत्वाधिक्यं
जातमित्याह — शुद्धकर्मभिरिति । शुद्धानि अशुभसम्पर्करहितानि कर्माणि

---

१. 'स्य म' ङ. पाठः. २. 'क्र' मुद्रितकोशपाठः. ३ 'प्रवेशमा' ङ. पाठः.
४. 'द्धयाधि' ङ. पाठः. ५. 'भकर्मस' क. ख. ग. घ. पाठः.

येषां तैः । मम गृहानेतेषां पादपांसुभिः पावयिष्यामीति गिरेरभिसन्धिरनेन श्लोकेन द्योत्यते ॥ ५२ ॥

**तत्र वेत्रासनासीनान्[1]नासनपरिग्रहः ।**
**इत्युवाचेश्वरान् वाचं प्राञ्जलिः[2] पृथिवीधरः ॥ ५३ ॥**

(प्रकाशिका)

तत्रेति । वेत्रासनस्य तद्योग्यत्वात् तदुक्तिः । ईश्वरान् लोकस्य स्वामिनः ॥ ५३ ॥

(विवरणम्)

अथ गिरेर्वचनावसरं प्रस्तौति —

तत्रेति । पृथिवीधरः तत्र वेत्रासनासीनान् ईश्वरान् प्राञ्जलिः इति उवाच । तत्र शुद्धान्ते वेत्रलतानिर्मितेष्वासनेष्वासीनान् । मुनीनां वेत्रासनस्यैवोचितत्वादेवमुक्तिः । ईश्वरान् चरात्मकस्य प्रपञ्चस्य स्वामिनः । प्रकृष्टोऽञ्जलिर्यस्य स तथा । कृताञ्जलिर्भूत्वेत्यर्थः । इति वक्ष्यमाणप्रकारेण वाचं वाणीम् उवाच । हिमवतो विनयातिशयं दर्शयति — अनासनपरिग्रह इति । आसनस्वीकारो यस्य नास्ति स तथा । भूमावेवासीन इति यावत् । भूमावेवावस्थाय[3] प्राञ्जलिर्भूत्वा हिमवान् मुनीनेवमुवाचेत्यर्थः ॥ ५३ ॥

**अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।**
**अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ ५४ ॥**

(प्रकाशिका)

अपेति । अतर्कितोपपन्नम् अचिन्तितोपनतम् । अत्र हर्षाद्भुतयोरभिव्यक्तिः । तौ च प्रीतेर्व्यभिचारिणौ ॥ ५४ ॥

---

१. 'नू कृतास', २. 'लिर्भूधरेश्वरः' मुद्रितकोशपाठः. ३. 'वास्था' ख. पाठः.

(विवरणम्)

इतिशब्दोक्तान् वचनप्रकारानेवाह दशभिः श्लोकैः । तत्रादौ मुनीनामचिन्तितोपनतत्वात् सहर्षाद्भुतमाह —

अपेति । अतर्कितोपपन्नं वः दर्शनं मे अपमेघोदयं वर्षम् अदृष्टकुसुमं फलं प्रतिभाति । अतर्कितमनिरूपितम् । उपपन्नं प्राप्तम् । अचिन्तितोपनतमित्यर्थः । वः युष्माकं दर्शनम् अवलोकनं मे मम । अपगतो मेघानाम् उदय आविर्भावो यस्मिंस्तादृशं वर्षमिति च अदृष्टानि अनुपलब्धानि कुसुमानि पुष्पाणि यस्य तादृशं फलमिति च मे प्रतिभाति । मेघोदयपुष्पोद्गमयोरनन्तरमेव हि सर्वत्र वर्षोद्भवफलप्रादुर्भावावुपलभ्येते इति तौ चिन्तितोपनतौ । भवदागमनं त्वचिन्तितोपनतम् । तस्मादिदमपमेघोदयं वर्षम् अदृष्टकुसुमं फलमिति चाहं सम्भावयामीत्यर्थः । उक्तश्चायमेवार्थः शाकुन्तले —

"उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमो भवत्प्रसादस्य पुरस्तु सम्पदः ॥"

इति । अत्र प्रीतेर्व्यभिचारिणौ हर्षाद्भुतावभिव्यज्येते ॥ ५४ ॥

**मूढं बुद्धमिवात्मानं हैमीकृतमिवायसम् ।**
**भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥ ५५ ॥**

(प्रकाशिका)

**मूढमिति** । पूर्वस्मिन् क्षणे मूढमात्मानम् अस्मिन् क्षणे भवदनुग्रहाद् बुद्धमिव मन्य इत्यर्थः । एवमन्यत्राप्यात्मानमिति च पठन्ति । अनेनोत्प्रेक्षात्रयेण क्रमाद् ज्ञानतः स्वरूपतोऽधिकारतश्च वैशिष्ट्याभिमान उक्तः ॥ ५५ ॥

---

१. 'भू' मुद्रितकोशपाठः. 'त् प्रबु' घ. ङ. पाठः.

(विवरणम्)

मुनिदर्शनानन्तरमात्मनः पूर्वस्मात् कालादुत्कर्षातिशयप्राप्त्यभिमानमाह —

मूढमिति। अहं भवदनुग्रहाद् मूढमात्मानं बुद्धमिव आयसं हैमीकृतम् इव भूमेः दिवम् आरूढमिव मन्ये। भवतामनुग्रहाद्धेतोः मूढं ज्ञानलवेनापि रहितं बुद्धं प्रबुद्धम्। सर्वज्ञत्वं प्राप्तमित्यर्थः। इतः पूर्वं मूढमात्मानमस्मिन् क्षणे भवतामागमनानुग्रहेणैव हेतुना सर्वज्ञत्वं प्राप्तमिवाहं कलयामीति भावः। अनयोत्प्रेक्षया ज्ञानतो वैशिष्ट्याभिमानो दर्शितः। स्वरूपतोऽपि वैशिष्ट्याभिमानमाह — आयसं हैमीकृतमिव च मन्ये इति। अयसो विकारः। 'तस्य विकारः' (४. ३. १३४) इत्यण्। हैमीकृतं हेममयतां नीतम्। आयसमात्मानं भवदनुग्रहात् सुवर्णमयतां प्राप्तमिव च कल्पयामीत्यर्थः। अधिकारतोऽपि वैशिष्ट्याभिमानमाह — आत्मानं भूमेर्दिवम् आरूढमिव च मन्ये इति। एतावन्तं कालं भूमावेवावस्थितमात्मानमिदानीं स्वर्गाधिरूढमिव च पश्यामीत्यर्थः॥ ५५॥

**अद्यप्रभृति मर्त्यानामभिगम्योऽस्मि[1] शुद्धये।**
**यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते॥ ५६॥**

(प्रकाशिका)

अद्येति। शुद्धये दुष्कर्मशोधनाय। अर्हद्भिः पूज्यैः। चराचरभूतद्वयाभेदात्[2] विवक्षयेयमुक्तिः॥ ५६॥

(विवरणम्)

स्थावराकारस्यात्मनो भवदनुग्रहादद्य पावनत्वं जातमित्याह —

अद्येति। अहम् अद्यप्रभृति शुद्धये मर्त्यानामभिगम्योऽस्मि। अद्यप्रभृति एतस्माद् दिवसादारभ्य। शुद्धये स्वकृतमहापातकादिदुष्कर्मशोधनाय। मर्त्यानां मनुष्यैः। 'कृत्यानां कर्तरि वा' (२. ३. ७१) इति षष्ठी। अभिगम्यः प्रा-



१. 'भूतानामधिग' मुद्रितकोशपाठः. २. 'रूपद्वयाद् भे' ङ. पाठः.

प्योऽस्मि । अहमेतस्माद् दिवसादारभ्य काशीदेशादिवत् पातकादिपरिजिही-र्षुभिर्मनुष्यैराश्रयणीयो जात इत्यर्थः । तत्रोपपत्तिमाह—अर्हद्भिः यदध्या-सितं तद् हि तीर्थं प्रचक्षते इति । अर्हद्भिः पूज्यैः । 'अर्हः प्रशंसायाम्' (३. २. १३३) इति शतृ । यत् स्थानम् अध्यासितम् अधिष्ठितं, तदेव हि स्थानं तीर्थमित्युच्यते, नान्यत् । हिशब्दः प्रसिद्धौ । प्रसिद्धिश्चान्यस्य कस्य-चित् तीर्थपदवाच्यत्वाभावमपि द्योतयति । काशीदेशस्यापि विश्वनाथाधिष्ठि-तत्वादेव तीर्थत्वमिति भावः । तस्मात् सज्जनाधिष्ठितस्यैव प्रदेशस्य तीर्थ-त्वादद्य भवदधिष्ठितः स्थावररूपोऽहमपि शुद्धये मर्त्यैरभिगम्य एवेति भावः ॥ ५६ ॥

**अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः! ।**
**मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥ ५७ ॥**

(प्रकाशिका)

अवैमीति । धौतपादाम्भसेति बहुव्रीहिगर्भः कर्मधारयः । युष्म-च्छब्दसापेक्षस्यापि पादशब्दस्य समासो गमकत्वात् ॥ ५७ ॥

(विवरणम्)

मुनिजनपादक्षालनजलस्य गङ्गाजलसाम्यमाह—

अवैमीति । द्विजोत्तमाः! अहं द्वयेनैव आत्मानं पूतम् अवैमि । हे ब्राह्मणश्रेष्ठाः! । अनेन पूतत्वसम्भावनायां हेतुरुक्तः । द्वयेन वक्ष्यमाणाभ्यां[1] द्वाभ्याम् । एवशब्दस्तृतीयस्य कस्यचिदप्यभावमाह, उभयोः साम्यं च द्योत-यति । आत्मानं स्थावरजङ्गमात्मकं मां पूतं शुद्धम् अवैमि । 'इण् गता-वि'ति धातुः । गत्यर्थानां ज्ञानार्थत्वाज्जानामीत्यर्थः । केन द्वयेनेत्याकाङ्क्षाया-माह—मूर्ध्नि गङ्गाप्रपातेन वः धौतपादाम्भसा चेति । मूर्ध्नि ममाधित्यका-यां गङ्गायाः प्रकृष्टेन पातेन पतनेन । प्रकृष्टत्वं च सन्ततपतनात् । वः युष्माकम् । धौतपादाम्भसा धौतः प्रक्षालितः पादो येन तादृशेनाम्भसा

१. 'भ्याम् ।' ङ. पाठः.

जलेन। अत्र यद्यपि धौतयुष्मत्पादाम्भसेत्येव समासो युक्तः, तथापि युष्मच्छब्दस्य समासात् पृथग्भावो गमकत्वादुपपन्नः। अर्थप्रतीतिरेव हि शब्देन साध्या। युष्मत्पादक्षालनपूतेन जलेनेत्यर्थः। चकार उभयसमुच्चयार्थः। सोऽपि द्वयोरपि साम्यं द्योतयति॥ ५७॥

**जङ्गमं प्रैष्यपक्षे[1] वः स्थावरं चरणाङ्कितम्।**
**विभक्तानुग्रहं मन्ये द्वैरूप्यं[2] तेन मे कृतम्॥ ५८॥**

(प्रकाशिका)

**जङ्गममिति। द्विरूपमेव द्वैरूप्यम्। चातुर्वर्ण्यादिवत् ष्यञ्। तेनेति प्रेषण[3]चरणन्यासाभ्यामित्यर्थः। तेन मे द्वैरूप्यं विभक्तानुग्रहं कृतमिति[4] मन्य इत्यन्वयः॥ ५८॥**

( विवरणम् )

स्थावरजङ्गमात्मकं मम शरीरद्वयमपि भवद्भिरनुगृहीतमित्याह —

जङ्गममिति। मे जङ्गमं प्रेष्यपक्षे। जङ्गमं जङ्गमशरीरम्। प्रेष्यपक्षे प्रेष्यः किङ्करः। 'नियोगकृत् कर्मकारः प्रेष्य[5]भृत्यौ च किङ्करः' इति भोजः। भृत्यकोट्यामित्यर्थः। अभूदिति शेषः। मम जङ्गमशरीरं भवतां भृत्यकोट्यामभूदित्यर्थः। स्थावरशरीरस्य त्वनुग्रहान्तरं जातमित्याह — स्थावरं चरणाङ्कितं च इति। स्थावरं स्थावरशरीरं चरणैः पादन्यासैः अङ्कितं लाञ्छितं च। अभूदिति शेषः। मम स्थावरशरीरं भवत्पाद[6]न्यासपवित्रितं चाभूदित्यर्थः। सिद्धमर्थमाह — तेन मे द्वैरूप्यं विभक्तानुग्रहं कृतं मन्ये इति। तेन प्रेषणचरणन्यासाभ्यामित्यर्थः। अत्र तच्छब्देन प्रेषणचरणन्यासरूपमनुग्रहसामान्यं परामृश्यत इत्येकवचनप्रयोगोपपत्तिः। द्वैरूप्यं द्विरूपम्। 'चतुर्वर्णादीनां स्वार्थे

१. 'प्रैष्यपक्षे वः', २. 'द्विरूपमपि मे वपुः॥' मुद्रितकोशपाठः. ३. 'णन्या' क. ग. पाठः. ४. 'त्यर्थः॥' क. ग. पाठः. ५. 'प्रेष्यो भृत्यश्च कि' ङ. पाठः. ६. 'दप' ङ. पाठः.

उपसङ्ख्यानम्' (वा० ५. १. १२४) इति स्वार्थे ष्यञ् । रूपद्वयमित्यर्थः । विभक्तः कृतविभागः अनुग्रहो यस्य तत्तथा। कृतं विहितम् । भवद्भिरिति शेषः । मन्ये कल्पयामि। प्रेषणचरणन्यासाभ्यां भवद्भिर्मे रूपद्वयस्यापि महानुग्रहो विभज्य कल्पित इति कल्पयामीत्यर्थः ॥ ५८ ॥

**भवत्सम्भावनोत्थाय परितोषाय मूर्छते ।**
**अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥ ५९ ॥**

(प्रकाशिका)

भवदिति । मूर्छते वर्धमानाय । प्रभवन्ति पर्याप्तानि भवन्ति । 'नमःस्वस्ति—' (२. ३. १६) इत्यादिसूत्रे अलंशब्दस्यार्थग्रहणात् प्रभवतिना योगे परितोषायेति चतुर्थी ॥ ५९ ॥

(विवरणम्)

मुनिजनागमनजनितं सन्तोषातिशयमेवाह —

भवदिति। मे अङ्गानि भवत्संभावनोत्थाय परितोषाय न प्रभवन्ति। मे अङ्गानि ममावयवाः। भवतां सम्भावना भवत्सम्भावना। सम्भावना अनुग्रहः। भवत्सम्भावनाया उत्तिष्ठति उद्भवतीति भवत्सम्भावनोत्थः, 'सुपि स्थः' (३.२. ४) इति कः, तस्मै। भवत्कृतात् स्थावरजङ्गमात्मकशरीरद्वयानुग्रहादुद्भूतायेत्यर्थः । 'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' इति सूत्रेणालंशब्दस्यार्थग्रहणात् प्रभवतिना योगे परितोषायेति चतुर्थी । न प्रभवन्ति न पर्याप्तानि भवन्ति। अतर्कितभवदनुग्रहजन्मा ममायं परितोषो न मे शरीरावयवेषु माति, किन्तु हर्षाश्रुपुलकादिरूपेण बहिरुद्गच्छत्येवेत्यर्थः । अयमेवार्थो माघेनोक्तः—

"युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥"
(स. १. श्लो. २३)

---

१. 'मश' ङ. पाठः.

इति । ननु किमङ्गानामतिकृशत्वादमानं, नेत्याह — व्याप्तदिगन्तान्यपीति । व्याप्तो दिगन्तो दिशामन्तो यैस्तथाभूतान्यपि । पर्वतरूपस्य शरीरस्य आच्छादितायतदिगम्बरत्वादित्थमुक्तम् । अपिशब्दो विरोधमाह । अमाने हेतुमाह— मूर्छत इति । वर्धमानायेत्यर्थः । 'मुर्छा मोहसमुच्छ्राययोरि'ति धातोः शतृप्रत्ययान्तोऽयं शब्दः ॥ ५९ ॥

**न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।**
**अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥ ६० ॥**

(प्रकाशिका)

**न केवलमिति । रजसः परं तमोऽपीति 'तमसः सत्त्वमुद्भवि'ति तमसो मूलकारणत्ववचनात् । दरीसंस्थतमःपक्षे दर्शनमुपचरितमासत्तौ ॥ ६० ॥**

(विवरणम्)

अन्तःकरणशुद्धिरपि मे भवद्दर्शनेन जातेत्याह —

न केवलमिति । भास्वतां वः दर्शनेन केवलं मे दरीसंस्थं तमः न अन्तर्गतं रजसः परमपि अपास्तम् । भास्वतां तेजस्विनां, सूर्याणामिति च स्फुरति । अनेन तमोनिरसनसामर्थ्यमुक्तम् । वः युष्माकम् । दर्शनेन अवलोकनेन । दरीसंस्थतमःपक्षे दर्शनमासत्तावुपचरितं, हिमवतः सप्तर्षिदर्शनमात्रेण गुहासंस्थतमोनिरासासम्भवात् । दरीषु गुहास्ववस्थितम् अन्तर्गतम् अन्तर्भागं गतम् । हृदयकुहरगतमित्यर्थः । रजसः परं रजोगुणात् परम् उपरितनम् । 'तमसः सत्त्वमुद्भवौ' इति वचनेन तमसो मूलकारणत्वप्रतिपादनादुपरितनत्वं, लोकसिद्धक्रमापेक्षया वा । अपास्तं निरस्तम् । भवतामागमनेन मम स्थावरशरीरान्तर्गतं तिमिरमात्रं न केवलमपास्तम्, अपि तु जङ्गमशरीरहृदयकुहरगतस्तमोगुणोऽप्यपास्त इत्यर्थः । अत्र दर्शनस्यैव

---

१. 'रोधास' ङ. पाठः.

कर्तृत्वम् । दर्शनस्य हेतुत्वविवक्षायाम् अपास्तमित्यस्य गतमित्यर्थः ।

"नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥"

इति हि भागवतवचनम् ॥ ६० ॥

**कर्तव्यं वो न पश्यामि स्याच्चेत् किं नोपपद्यते ।**
**शङ्के मत्पावनायैव प्रस्थानं भवतामिदम् ॥ ६१ ॥**

(प्रकाशिका)

**कर्तव्यमिति** । क्रियामात्रसाध्यमेव वो न संभावयामीत्यर्थः । ईश्वरवत् परिपूर्णत्वादियमुक्तिः । स्याच्चेद् यदि संभवति, किं नोपपद्यते किं न प्राप्यते । किं दुष्प्रापमित्यर्थः । शङ्के संभावयामि । प्रस्थानं समागमनम् । 'प्रशब्दस्तु प्रकर्षं च द्योतयेच्च समागमम्'इत्युपसर्गवृत्तौ ॥ ६१ ॥

(विवरणम्)

अथ मुनीनामागमनकार्यं स्वयमेव विचारयन्नाह —

**कर्तव्यमिति** । अहं वः कर्तव्यं न पश्यामि । कर्तव्यं साध्यमित्यर्थः । न पश्यामि नोपलभे । निपुणं विचारयन्नप्यहं भवतां साध्यभूतं वस्तु लोकत्रये किमपि न पश्यामीत्यर्थः । ईश्वरवत् परिपूर्णत्वादिति भावः । अत एवाह — स्याच्चेत् किं नोपपद्यते इति । स्याच्चेद् भवतां साध्यभूतं यत्किञ्चिदपि भवितुं संभावितं चेदित्यर्थः । किं नोपपद्यते, किं न प्राप्यते। सर्वमपि प्राप्यत इत्यर्थः । भवतां तपश्शक्त्या किं दुष्प्रापमिति भावः । किमर्थं तर्हीदमागमनमित्यत्राह — भवतामिदं प्रस्थानं मत्पावनायैव शङ्के इति । भवतां पूर्वोक्तन्यायेन निराकाङ्क्षाणाम् । इदं दृश्यमानं प्रस्थानं समागमः । 'प्रशब्दस्तु प्रकर्षं च द्योतयेच्च समागमम्'

१. 'मन्ये म', २. 'ह।' मुद्रितकोशपाठः.

इत्युपसर्गवृत्तिः । मत्पावनाय मम पावनाय शुद्धिविधानाय । तादर्थ्ये चतुर्थी । एवशब्दो हेत्वन्तराभावं द्योतयति । शङ्के सम्भावयामि । ममान्तःकरणशुद्धि-विधानार्थमेव भवतामिदमागमनमित्यहं कल्पयामीत्यर्थः ॥ ६१ ॥

**तथापि तावत् कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।**
**विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ॥ ६२ ॥**

(प्रकाशिका)

**तथापीति** । यद्यपि स्वार्थशून्यं समागमनं, तथापीत्यर्थः । ताव-च्छब्दः क्रमद्योतकः । कस्मिंश्चित् कार्ये मां प्रथममाज्ञापयतेत्यर्थः । कस्मिं-श्चिदित्यस्य विशेष्यमनुपाददता* किङ्करत्वमात्मनो द्योत्यते । विनियोगः कार्ये उपयोजनम् । स एव प्रसादो येषाम् । प्रभविष्णुषु प्रभुविषये ॥६२॥

(विवरणम्)

अथात्मनः कैङ्कर्यमेव प्रकटयन्नाज्ञां प्रार्थयते —

**तथापीति** । तथापि तावद् मे कस्मिंश्चिद् आज्ञां दातुम् अर्हथ । तथापि यद्यपीदं भवदागमनं स्वार्थशून्यं, तथापीत्यर्थः । तावच्छब्दः क्रमार्थः । मे भृत्याय मह्यम् । कस्मिंश्चित्, कार्ये इति शेषः । यत् कार्यं भवतां मनसि स्फुरति, तस्मिन्नित्यर्थः । अत्र कस्मिंश्चिदित्यनेन कार्यविशेषानुपादानादा-त्मनः किङ्करत्वं द्योत्यते । आज्ञां नियोगं दातुम् अर्हथ । आदौ कस्मिंश्चित् कार्ये मा(मा)ज्ञापयतेत्यर्थः । दर्शनानन्तरमेवाज्ञापनेन हि भृत्यानां प्रसादः । अत एवाह — किङ्कराः प्रभविष्णुषु विनियोगप्रसादाः हि इति । किङ्कराः भृत्याः प्रभविष्णुषु प्रभुषु विषये । विनियोगप्रसादाः विनियोगः कार्ये उप-योजनमेव प्रसादो येषां ते तथा । हिशब्दः प्रसिद्धौ । यदि प्रभुणा भृत्यः क-स्मिंश्चित् कार्ये विनियुक्तो भवेत्, तर्हि स एव तस्य प्रसाद इत्यर्थः । यद्यपि भवन्तो निराकाङ्क्षाः, तथापि मत्प्रसादार्थमाज्ञा दातव्यैवेति भावः ॥६२॥

---

१. 'र्थे प्र' क. ख. ग. घ. पाठः. २. 'पा' ङ. पाठः. ३. 'य। क' ङ. पाठः.

* 'अनुपाददानेन' इति स्यात् ।

**एते वयममी दाराः कन्येयं कुलजीवितम् ।**
**ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥ ६३ ॥**

(प्रकाशिका)

आज्ञाया अपि विषयं सङ्कोचयति—

**एत** इति । अत्र अस्मासु । बाह्यवस्तुषु अस्मद्व्यतिरिक्तपदार्थेषु । अनास्था युष्मभ्यमन्यद् वस्तु दातुमस्माकमनादर एवेत्यर्थः ॥[1] [2]

(विवरणम्)

आज्ञाया अपि विषयसङ्कोचं कुर्वन्नाह—

**एत** इति । वयम् एते । वयमित्यात्मनि बहुवचनम् । एते, भवतामग्रे वर्तामह इति शेषः । दारान् दर्शयति—दारा अमी इति । दाराः भार्या । 'भार्या पत्नी प्रिया जाया दाराः पुंस्येव भूम्नि चे'ति भोजः । अमी इति सहस्तनिर्देशं वचनम् । मम भार्याप्येषा भवदनुग्रहकाङ्क्षिणी भवतामग्रे तिष्ठतीत्यर्थः । आत्मनः पुत्रीमपि दर्शयति—कन्येयम् । कन्याप्येषा तिष्ठतीत्यर्थः । कन्याया विशेषमाह—कुलजीवितमिति । कुलस्य जीवितं जीवनभूता । अनया विनास्मत्कुलं मृतप्रायमेवेति भावः । नन्वेते सर्वे तिष्ठन्तु नाम । प्रकृते तु किमायातमित्यत्राह—अत्र येन वः कार्यं ब्रूतेति । अत्रास्माकं मध्ये । सामान्यनिर्देशे[3] 'सामान्ये[4] नपुंसकमि'ति येनेत्यस्य नपुंसकत्वम् । वः युष्माकं(कार्यम्) भवतीति शेषः । ब्रूत वदत । अस्मासु मध्ये मया वा भार्यया वा कन्यया वा भवतां(किं)कार्यं भवतीति वदतेत्यर्थः । निगूढोऽभिप्रायः । नन्वेतत्त्रयव्यतिरेकेण भवतो भृत्यधनधान्यादिकमस्त्येव । तत् किमर्थं न निर्दिश्यत इत्यत्राह—बाह्यवस्तुषु अनास्था इति । बाह्यवस्तुषु अस्मद्व्यतिरिक्तेषु वस्तुषु

---

१. 'ष्माकम' क. पाठः. २. 'न्यव' ङ. पाठः. ३. 'शः सा' क. ख. ग. घ. पाठः. ४. 'न्यं' ङ. पाठः.

पदार्थेषु । युष्मभ्यं दातुमिति शेषः । अनास्था अनादरः । ममेति शेषः । एतत्त्रयव्यतिरिक्तं वस्तु भवद्भ्यो दातुं ममानास्थैवेत्यर्थः ॥ ६३ ॥

**इत्यूचिवांस्तमेवार्थं दरीमुखविसर्पिणा ।**
**द्विरिव प्रतिशब्देन व्याजहार हिमालयः ॥ ६४ ॥**

(प्रकाशिका)

उपसंहरति —

**इत्नीति । दरीमुखविसर्पिणेति द्विर्व्याहरणोत्प्रेक्षाङ्गम् । उत्प्रेक्षा चादरद्योतिका ॥ ६४ ॥**

(विवरणम्)

हिमवतो वचनमुपसंहरति —

इतीति । इति ऊचिवान् हिमालयः दरीमुखविसर्पिणा प्रतिशब्देन तं अर्थम् एव द्विः व्याजहार इव । इति उक्तप्रकारेण ऊचिवान् अभिहितवान् । दर्येव मुखं दरीमुखं तत्र विसर्पिणा व्यापनशीलेन । प्रतिशब्देन प्रतिध्वनिना । तं पूर्वोक्तमर्थमेव । द्विः द्विवारम् । 'द्वित्रिचतुर्भ्यः सुच्' (५. ४. १८) इति क्रियाभ्यावृत्तिगणने सुच्प्रत्ययः । व्याजहार उक्तवानिव । इत्थमभिधाय विरतवचसि हिमवति तस्य स्थावरशरीरदरीमुखव्यापिना प्रतिशब्देन पूर्वं जङ्गमशरीरोदितमर्थमेव स्थावरशरीरेण पुनरप्युक्तवानिवेत्युत्प्रेक्षा । शब्दस्य दरीमुखविसर्पित्वमुत्प्रेक्षाङ्गम् । दरीमुखविस(र्पिणः?र्पणे) शब्दस्य गाम्भीर्यं हेतुः । उत्प्रेक्षया चादरातिशयो द्योत्यते ॥ ६४ ॥

**अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।**
**ऋषयश्चोदयामासुः प्रत्युवाच स भूधरम् ॥ ६५ ॥**

(प्रकाशिका)

**अथेति । उदाहरणमुक्तिः । यथा 'पत्रे निवेशितमुदाहरणं**

---

१. 'तुमना' ङ. पाठः. २. 'गुहामु' मुद्रितकोशपाठः. ३. 'गुहामु' क. ख. ग. घ. पाठः. ४. 'यो नोद' मुद्रितकोशपाठः.

प्रियायाः' (विक्रमो० अङ्क. २. श्लो. १३) इति। उदाहरणवस्तुषु उक्तिप्रतिपाद्येष्वर्थेषु ॥ ६५ ॥

(विवरणम्)

अथ मुनीनां प्रतिवचनोपक्रममाह —

अथेति । अथ ऋषयः अङ्गिरसं चोदयामासुः । अथ हिमवतो नियोगप्रार्थनानन्तरम् । अङ्गिरसम्, अङ्गिरा इति सप्तर्षीणामन्यतमस्य नाम । तं चोदयामासुः प्रेरयामासुः । प्रतिवक्तुमिति शेषः । अन्ये महर्षयो भगवत्सन्दि[1]ष्टमर्थं वक्तुमङ्गिरसं प्रेरयामासुरित्यर्थः । नन्वङ्गिरसः को विशेष इत्यत्राह — उदाहरणवस्तुषु अग्रण्यमिति । उदाहरणम् उक्तिः । यथोक्तमनेनैव — 'पत्रे निवेशितमुदाहरणं प्रियायाः' इति । वस्तुशब्दोऽर्थवाची । उक्तिप्रतिपाद्येष्वर्थेष्वित्यर्थः । अग्रणीः श्रेष्ठः, तम् । उक्तिकौशलशालिनमिति यावत् । चोदितस्याङ्गिरसः प्रवृत्तिमाह — सः भूधरं प्रत्युवाच इति । सः अङ्गिराः भूधरं[2] हिमवन्तं प्रत्युवाच[3] उत्तरमुक्तवान् ॥ ६५ ॥

उपपन्नमिदं सर्वमतः परमपि त्वयि ।
मनसः शिखराणां च सदृशी ते समुन्नतिः ॥ ६६ ॥

(प्रकाशिका)

उपपन्नमिति । इदं सर्वं त्वय्युपपन्नम् । अतः परमपीति द्वितीयं वाक्यम् । कथमित्याह — मनस इति । मनस उन्नतिरौदार्यम् । ईदृशस्यौ[4]दार्यस्य किं नोपपद्यत इति भावः ॥ ६६ ॥

(विवरणम्)

अथाङ्गिरसः प्रतिवचनप्रकारमेवाह उपपन्नमित्यादिभिः । तत्रादावष्टभिः श्लोकैः

---

१. 'ष्टार्थ' ङ. पाठः. २. 'रं प्र' ङ. पाठः. ३. 'च उक्त' ङ. पाठः. ४. 'शौदा' घ. पाठः.

हिमवन्तं स्तौति। तत्र च तद्वचनप्रशंसानेन श्लोकेन क्रियते—

उपपन्नमिति। त्वयि इदं सर्वम् उपपन्नम्। त्वयि परमेष्ठिनः पुत्रे। इदं सर्वम् 'अपमेघोदयं वर्षम्'(श्लो. ५४) इत्याद्यारभ्य सर्वस्वसमर्पणपर्यन्तं वचनम्। उपपन्नं युक्तम्। त्वया यदभिहितं तत् सर्वं परमेष्ठिनः पुत्रे परिशुद्धान्तःकरणे च त्वयि न विस्मयायेत्यर्थः। किञ्चेत्याह—अतःपरमपीति। इतोऽधिकमपीत्यर्थः। त्वय्युपपन्नमिति अत्रापि योज्यम्। एतस्मात् परमपि यत्किञ्चिद्वक्तव्यं समर्पणीयं वास्ति चेत्, तद्वचनं तत्समर्पणं च त्वय्युपपन्नमेवेति भावः। कथमुपपन्नमित्यत्राह—ते मनसः शिखराणां च समुन्नतिः सदृशी इति। मनस उन्नतिरौदार्यम्। शिखराणामुन्नतिस्तुङ्गत्वम्। सदृशी तुल्या। यथा ते शिखराणामुन्नतिर्दृश्यते, तथा मनसोऽपि समुन्नतिरस्त्येवेत्यर्थः। ईदृशस्यौदार्यस्य किं किं नोपपद्यत इति भावः॥ ६६॥

स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथाहि ते।
चराचराणां भूतानां कुक्षिराधारतां गतः॥ ६७॥

(प्रकाशिका)

**स्थान** इति। स्थावरात्मानं विष्णुमाहुरिति 'स्थावराणां हिमालयः' (अ. १०. श्लो. २५) इति भगवद्गीतावचनात्। कुक्षिशब्देन मध्यभाग उच्यते, ऊर्ध्वाधोभागयोर्व्योमपातालगतत्वात्॥ ६७॥

(विवरणम्)

उपपन्नत्वमेव हेतुनोपपादयितुं हिमवतो जगदाधारत्वमाह—

**स्थान** इति। स्थावरात्मानं त्वां विष्णुम् आहुः, स्थाने। स्थावरात्मानं स्थावरस्वरूपम्। पर्वतस्वरूपमित्यर्थः। त्वां भवन्तं विष्णुं नारायणम्

---

१. 'च' ङ. पाठः. २. 'गत्वा' घ. पाठः.

आहुः वदन्ति । सन्त इति शेषः । स्थाने इति युक्तवाचकमव्ययम् । 'स्थाने युक्तार्थमव्ययमि'ति भोजः । 'स्थावराणां हिमालयः' इति भगवद्गीतावचनानुसारेण सन्तो यद् भवन्तं नारायणमेवाहुः, तदुपपन्नमेवेत्यर्थः । कथमुपपन्नमित्यत्राह — तथाहि ते कुक्षिः चराचराणां भूतानाम् आधारतां गतः इति । विष्णुपक्षे कुक्षिशब्द उदरवाची । 'त्रैलोक्यं मधुसूदनस्य जठरे' इत्यादिवचनात् । हिमवत्पक्षे तु मध्यभागवाची । चराश्चाचराश्च चराचराः, तेषाम् । भूतानां लोकानाम् आधारताम् आधारत्वं गतः प्राप्तः । यथा विष्णोः कुक्षिः चराचरात्मकस्य जगत आधारत्वेन प्रसिद्धः, तथा भवतो मध्यभागोऽपि । हिमवत ऊर्ध्वभागो हि व्योमव्यापी, अधोभागस्तु पातालव्यापीति युक्तं मध्यभागस्य चराचरात्मकजगदाधारत्वम् ॥ ६७ ॥

**गामधास्यत् कथं नागो मृणालसदृशैः[2] फणैः ।**
**आ रसातलमूलात् त्वमवालम्बिष्यथा न चेत् ॥ ६८ ॥**

(प्रकाशिका)

अत एवाह —

**गामिति** । मृणालसदृशैरिति, एतदपेक्षया कोमलत्वस्य विवक्षितत्वात् । त्वयैव धृता भूः, शेषेण धृतेति प्रवादमात्रमिति भावः ॥ ६८ ॥

(विवरणम्)

तत्र हिमवत ऊर्ध्वदेशव्यापित्वं प्रागेवोक्तम् 'अधो विवस्वान् परिवर्तमानः' (स. १. श्लो. १६) इत्यादिष्विति अधोदेशव्यापित्वमसाधारणकर्मत्वप्रतिपादनमुखेनाह —

गामिति । त्वं रसातलमूलाद् आ गां न अवालम्बिष्यथाः चेद्, नागः फणैः कथम् अधास्यत् । रसातलं पातालम् 'अधोभुवनपातालबलिसद्मरसातलमि'त्यमरः । रसातलमेव मूलं रसातलमूलं तस्मात् । अभिविधावाङ् । गां भूमिं न अवालम्बिष्यथाः नाधास्यश्चेत्, तर्हि । नागः अनन्तः, सामा-

---

१. 'कज' ङ. पाठः. २. 'मृदुभिः फ' मुद्रितकोशपाठः.

न्यवाचिनः शब्दाः श्रेष्ठपर्यवसायिन इति न्यायात्। फणैः। 'स्फुटायां तु फणा द्वयोरि'त्यमरः। कथमधास्यद्, न कथञ्चिदित्यर्थः। 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ'(३.३.१३९) इत्युभयत्रापि लृङ्। यदि त्वं पातालमूलपर्यन्तमधःस्थितः पृथिव्या धरणं नाकरिष्यः, तर्ह्यनन्तः पृथिव्या धारणं कथमकरिष्यदित्यर्थः। फणानां धारणासामर्थ्यमाह — मृणालसदृशैरिति। मृणालेन सदृशैः तुल्यैः। मृणालवत् कोमलैरित्यर्थः। त्वयैव भूमिरनवरतं ध्रियते। अनन्तफणैर्ध्रियत इति प्रवादमात्रमेवेति भावः ॥ ६८ ॥

**अच्छिन्नामलसन्तानाः समुद्रोर्मिनिवारिताः।**
**पुनन्ति लोकं[1] पुण्यत्वात् कीर्त्तयः सरितश्च ते ॥ ६९ ॥**

(प्रकाशिका)

**अच्छिन्नेति।** सन्तानः प्रवाहः। तथा पुण्यश्लोकस्तथा पुण्यप्रसवश्चासीत्यर्थः। अत्र साम्यगर्भः समुच्चयोऽलङ्कारः[2] ॥ ६९ ॥

(विवरणम्)

अथ हिमवत उत्तमश्लोकत्वं जगत्पावनत्वं चाह —

अच्छिन्नेति। ते कीर्त्तयः सरितश्च पुण्यत्वात् लोकं पुनन्ति। ते कीर्त्तयः यशांसि त्वदुद्भूताः सरितश्च पुण्यत्वाद् निसर्गपावनत्वात्। लोकं पुनन्ति। लोकस्याघं हरन्तीत्यर्थः। 'पूञ् पवने इति धातुः। यथा त्वत्तो निर्गता गङ्गाद्याः सरितो लोकस्याघं हरन्ति, तथैव कीर्त्तयश्चेति भावः। कीर्त्तीनां सरितां च साधारणधर्ममाह — अच्छिन्नेत्यादिना विशेषणद्वयेन। अच्छिन्नामलसन्तानाः। अत्र कीर्त्तिपक्षे कीर्त्तिकारणानां धर्मादीनां प्रत्यहमनुष्ठीयमानत्वादच्छिन्नत्वं, दुष्कीर्त्तिलेशेनापि रहितत्वादमलत्वम्। अच्छिन्नः अमलश्च सन्तानः परम्परा यासां तास्तथा इति च योज्यम्। सरित्पक्षे सन्तानः प्रवाहः। योजना तु पूर्ववदेव। अच्छिन्ननिर्मलप्रवाहा इत्यर्थः। तथा समुद्रोर्मिनिवा-

---

१. 'कान पु' मुद्रितकोशपाठः. २. 'रः प्रतीयते ॥' ङ पाठः.

रितां इति । समुद्राणामूर्मिभिः वीचिभिः निवारिताः । अनेनान्यैरनिवारितत्वमुक्तम्। चतुस्समुद्रपर्यन्तं व्याप्ता इत्यर्थः। नदीपक्षे समुद्रं प्राप्ता इत्यर्थः। समुद्रोर्म्यनिवारिता इति वा पाठः। अत्र साम्यगर्भः समुच्चयोऽलङ्कारः ॥ ६९ ॥

यथैव श्लाघते[1] गङ्गा पातेन[3] परमेष्ठिनि[4] ।
प्रथमेन द्वितीयेन तथैवोच्छिरसि[5] त्वयि[6] ॥ ७० ॥

(प्रकाशिका)

यथैवेति । श्लाघते स्वयं बहुमन्यते । *परमेश्वरस्थाने तिष्ठतीति परमेष्ठी । द्वितीयेन तत्सदृशेनेत्यर्थः ॥ ७० ॥

(विवरणम्)

अथ हिमवतो हरसमानत्वमाह —

यथेति। गङ्गा परमेष्ठिनि प्रथमेन पातेन यथा एव श्ला(घ्य?घ)ते।(?)§ उच्छिरसि उन्नतं शिरो यस्य स तथा तस्मिन्। आभिजात्यतपःप्रभृतिभिरुत्कृष्टे च । एतच्च परमेश्वरसाम्यद्योतकं विशेषणम् । द्वितीयेन पूर्वपातसदृशेनेत्यर्थः । सादृश्यं चाधिकरणस्य पावनत्वसाम्यात्। पातेनेत्यनुपज्यते। तथैव। श्ला(घ्य?-घ)त इति शेषः । एवशब्दद्वयेन श्लाघायामीषद्भेदस्याप्यभाव उक्तः। यथा पूर्वं परमेश्वरशिरःप्रदेशपतनेन गङ्गा नान्या मत्सदृशी नदीत्यात्मानं बहुमन्यते, द्वितीयेन त्वयि निपातेनापि तथैव बहुमन्यत इत्यर्थः । अत्र हिमवतः परमेश्वरसाम्यप्रतिपादनेन वक्ष्यमाणस्य परस्परसम्बन्धस्य युक्तत्वं द्योत्यते ॥ ७० ॥

तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।
त्रिविक्रमोद्यतस्यासीत्[7] स तु स्वाभाविकस्तव[8] ॥ ७१ ॥

(प्रकाशिका)

तिर्यगिति। व्यापक आसीदित्यन्वयः । अत्र व्यतिरेकः ॥ ७१ ॥

---

१. 'ताः ।' ङ. पाठः. २. 'घ्य', ३. 'दे', ४. 'न.', ५. 'भवेण द्वि', ६. 'सा', ७. 'या' मुद्रितकोशपाठः. ८. , 'स्वं व' क ग. ङ. पाठः.

---

* 'परम ईश्वरस्थाने' इति वा पाठः स्यात् । § अत्र कतिचन वाक्यान्यपेक्षितानि ।

(विवरणम्)

हिमवतो भगवतस्त्रिविक्रमाद् व्यतिरेकमाह —

तिर्यगिति । त्रिविक्रमोद्यतस्य हरेः महिमा तिर्यग् ऊर्ध्वम् अधस्तात् च व्यापकः आसीत् । त्रयो विक्रमाः पादविक्षेपाः । 'क्रमु पादविक्षेप' इति धातुः । तेषूद्यतस्य उद्युक्तस्य । बलिमखे पदत्रयेण त्रैलोक्यं क्रमितुमुद्यतस्येत्यर्थः । हरेर्विष्णोः महिमा महत्त्वं तिर्यक् परितः ऊर्ध्वम् उपरिभागे अधस्तादधोभागे च । व्याप्नोतीति व्यापकः । आसीत् । वामनावतार इति शेषः । हरेर्महिमा वामनावतारे सकृदेव सर्वलोकव्यापी[1] बभूवेत्यर्थः । त्वन्महिमा तु न तथेत्याह — तव तु सः स्वाभाविकः इति । तुशब्दो विशेषद्योतकः । सः सर्वलोकव्यापी महिमा स्वाभाविकः स्वभावसिद्धः । हिमवच्छिखराणामतिमहत्त्वादित्थमुक्तम् । अत्र व्यतिरेकोऽलङ्कारः ॥ ७१ ॥

**यज्ञभागभुजां मध्ये पदमाक्रम्य तस्थुषा[2] ।**
**उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥ ७२ ॥**

(प्रकाशिका)

यज्ञेति । पदमाक्रम्य स्थानमधिष्ठाय । वितथीकृतं निरुत्कर्षं कृतमित्यर्थः । शृङ्गं शिखरम् । जातावेकवचनम् । शृङ्गशब्दशक्त्या प्राधान्यमपि ध्वन्यते ॥ ७२ ॥

(विवरणम्)

स्वजात्युत्कर्षमाह —

यज्ञेति । यज्ञभागभुजां मध्ये पदम् आक्रम्य तस्थुषा त्वया सुमेरोः हिरण्मयं शृङ्गं वितथीकृतम् । यज्ञेषु यागेषु भागम् अंशं भुञ्जत इति यज्ञभाग-

---

१. 'वैव्या' ङ. पाठः. २. 'तस्थुषा त्वया ।' मुद्रितकोशपाठः.

भुजः तेषाम् । मध्ये, न तु पार्श्वभागे कुत्रापि । अनेन हिमवतो महेन्द्रादिसमानकक्ष्यत्वं ध्वन्यते । पदं स्थानम् आक्रम्य अधिष्ठाय तस्थुषा स्थितेन त्वया देवतात्मना भवता सुमेरोः महामेरोः हिरण्मयं हिरण्यस्वरूपं शृङ्गं शिखरम् । जातावेकवचनम् । अत्र शृङ्गशब्दशक्त्या प्राधान्यमपि ध्वन्यते । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । वितथीकृतं निरुत्कर्षं कृतमित्यर्थः । सुमेरोः सुवर्णात्मकत्वेन य उत्कर्षः, स तस्य यज्ञभागभोजित्वाभावाद् यज्ञभागभुजा त्वया निष्फलतां प्रापित इत्यर्थः । किमस्य हिरण्मयशृङ्गवत्त्वादिभिराडम्बरैः, यस्य न यज्ञभाग इति भावः । हिमवतो यज्ञभागभोजित्वं प्रागेवोक्तं 'प्रजापतिः कल्पितयज्ञभागः' (स. १. श्लो. १७) इत्यत्र ॥ ७२ ॥

**काठिन्यं स्थावरे काये भवतः सर्वमर्पितम् ।**
**इदं तु ते भक्तिनम्रं[3] मर्हदाराधनं वपुः ॥ ७३ ॥**

(प्रकाशिका)

**काठिन्यमिति** । भक्त्या नम्रं प्रह्वीकृतमिति मार्दवमुक्तम् । आराधनमिति करणे[4] ल्युट् । अत्राष्टश्लोक्यां प्रथमे तद्वचनाभिनन्दनं, द्वितीये तस्य जगदाधारत्वं, तृतीये त्वसाधारणकर्मत्वं, चतुर्थे जगत्पावनत्वं, पञ्चमे[5] परमेश्वरसमकक्ष्यत्वं, षष्ठे महत्त्वं, सप्तमे स्वजात्युत्कृष्टत्वम्, अष्टमे प्रश्रय इत्युक्तानि ॥ ७३ ॥

(विवरणम्)

प्रश्रयगुणशालित्वमाह —

काठिन्यमिति । भवतः काठिन्यं सर्वं स्थावरे काये अर्पितम् । काठिन्यं कठिनत्वम् अर्थिषु कार्कश्यमिति च स्फुरति । सर्वं, कायान्तरे स्थापयितुं न किञ्चिदप्यवशेषितमिति भावः । स्थावरे काये पर्वतस्वरूपे शरीर इत्यर्थः । अर्पितं न्यस्तम् । शरीरान्तरे काठिन्यलेशस्याप्यभावमाह — अर्ह-

१. 'इत्वादि' ङ. पाठः. २. 'तो', ३. 'म्रं सतामारा' मुद्रितकोशपाठः. ४. 'णे व्युत्पत्तिः ।' ङ. पाठः. ५. 'मे ईश्व' ङ. पाठः.

दाराधनम् इदं वपुः तु भक्तिनम्रम् इति। अर्हतां पूज्यानाम्। सज्जनानामित्यर्थः। आराध्यतेऽनेनेत्याराधनम्। करणे व्युत्पत्तिः। सज्जनाराधनसाधनमित्यर्थः। इदं दृश्यमानं वपुः शरीरं, जङ्गमशरीरम्। तुशब्दः शरीरान्तराद् विशेषमाह। भक्त्या नम्रं नमनशीलम्। 'नमिकम्पि—' (३. २. १६७) इत्यादिना रः। अनेनातिमृदुत्वमुक्तम्। नहि कठिनानां नमनशीलत्वमुपपद्यते ॥७३॥

**[1]यदागमनकार्यं नः शृणु कार्यं तवैव तत्।**
**श्रेयसामुपदेशात् तु वयमत्रांशभागिनः॥ ७४ ॥**

(प्रकाशिका)

एवं हिमवन्तमभि(ष्टूय?ष्टुत्य) प्रस्तुतमवतारयति —

**यदिति।** आगमनस्य कार्यं प्रयोजनम्। तवैव कार्यं तच्छृण्वित्यन्वयः। श्रवणस्य सिद्धत्वेऽपि विधानमवहितश्रवणपरम्। तत्र हेतुः— तवैव कार्यमिति। स्वार्थाभावे वः कथमागमनमित्याह — श्रेयसामिति। अत्रेति लोके। श्रेयसामिति बहुवचना[2]च्छ्रेयस उपदेशादपि श्रेयो भवतीति भावः॥ ७४ ॥

(विवरणम्)

अथ प्रस्तुतमर्थमेवावतारयति —

यदिति। त्वं नः आगमनकार्यं यत्, तत् शृणु। नः अस्माकम्। आगमनकार्यम् आगमनस्य कार्यं प्रयोजनं यत्, तच्छृणु आकर्णय। अत्रागमनकार्यकथनमात्रेणैव श्रवणस्य सिद्धत्वेऽपि श्रवणविधानेन सावधानश्रवणं प्रतिपाद्यते। आगमनकार्यं सामान्यतो निर्दिशति — तवैव कार्यम् इति। तवैव, नान्यस्य कस्यचित्। कार्यं प्रयोजनम्। अस्मदागमनं त्वत्प्रयोजनमात्रपरमित्यर्थः। इदं सावधानश्रवणे हेतुः, अचिरेणैव तव महान् प्रमोदो भविष्य-

१. 'त' मुद्रितकोशपाठः. २. 'नेन श्रेय' ङ. पाठः.

तीति। तस्मात् सावधानमाकर्णयेत्यर्थः। ननु स्वार्थाभावे कथं वः प्रवृत्त्युपपत्तिः, अत आह — वयं तु अत्र श्रेयसाम् उपदेशाद् अंशभागिनः इति। तु-शब्दो विशेषमाह। अत्र लोके श्रेयसामभ्युदयानाम्। अत्र बहुवचनस्यायमभिप्रायः — एकस्मिन्नेव हि कर्मणि बहूनि फलान्युपपद्यन्ते। तेषु कानिचित् तत्र सहायभूतानधिगच्छन्ति। तस्मादुपदेष्टरि विद्यमानेनैवांशेन वयमिह लोके पूर्णकामा भवाम इति। उपदेशाद् ज्ञापनाद् अंशस्य भागिनः भजनशीलाः। 'संपृच—'(३.२.१४२) इत्यादिना घिनुण्। 'कुघिण्यतोः'(७.३.५२) इति कुत्वम्। श्रेयसामिति अत्राप्यनुषज्यते॥ ७४॥

**अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम्।**
**शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः॥ ७५॥**

(प्रकाशिका)

तत्र प्रथमं वरगुणवर्णनेनोद्धर्षयति —

**अणिमेति।** अणिमादिगुणयोगेन ईश्वरस्य वाचकत्वेनावस्थितम्। यदाहुः —

"अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाश्यमीशिता वशिता(?)।
ईशस्य यत्र कामावसायितेत्यष्टधैश्वर्यम्॥"

इति। अन्येषां तु तदनुग्रहादष्टैश्वर्ययोग इत्यनीश्वरत्वमपि न विरुद्धम्। अत एवाह — अस्पृष्टपुरुषान्तरमिति। वाचकत्वेन पुरुषान्तरमस्पृशन्तमित्यर्थः। उच्चैः लोकप्रख्यातम्। सार्धचन्द्रम् अर्धचन्द्रेणाविनाभूतम्। अनेनास्पृष्टपुरुषान्तरत्वमुपपादितम्॥ ७५॥

**(विवरणम्)**

अथ वरगुणप्रशंसया हिमवन्तं प्रोत्साहयति त्रिभिः श्लोकैः। तत्रादौ परमेश्वरस्यानन्यशब्दवाच्यत्वमाह —

---

१. 'षां त' ङ. पाठः.

अणिमेति। यः ईश्वरः इति शब्दं बिभर्ति। अत्र श्लोकत्रये विद्यमानस्य यच्छब्दस्य 'स ते दुहितरं साक्षाद्'(श्लो. ७८) इति चतुर्थश्लोकगतेन तच्छब्देनान्वयः। यः शंभुः ईश्वर इति शब्दं बिभर्ति वाचकत्वेनैव बिभर्तीत्यर्थः। ईश्वरशब्दं विशिनष्टि चतुर्भिर्विशेषणैः। तत्रादौ परमेश्वरस्येश्वरशब्दवाचकत्वे* हेतुमाह — अणिमादिगुणोपेतम् इति। अणिमादिभिरष्टभिः गुणैः उपेतं सहितम्। अणिमाद्यष्टैश्वर्यसहितस्यैव वाचकमित्यर्थः। यथोक्तं स्कान्दपुराणे —

"अणिमा महिमा चैव लघिमा गरिमा तथा।
ईशित्वं च वशित्वं च प्राप्तिः प्राकाश्यमेव च॥
ईश्वरस्येत्थमैश्वर्यमष्टधा परिकीर्तितम्।"

इति। अत्र वाचकतया परमेश्वरे वर्तमानस्येश्वरशब्दस्य परमेश्वरगतानामणिमादिगुणानां च सामानाधिकरण्यादुपेतत्वमित्यवसेयम्। इतरेषां तु तदनुग्रहादष्टैश्वर्ययोग इति न तेष्वतिव्याप्तिः। अत एव अस्पृष्टं पुरुषान्तरं परमेश्वरव्यतिरिक्तः पुरुषो येन तम्। न केवलं शम्भोरीश्वरशब्दवाच्यत्वं योगमात्रेण, अपि तु रूढ्या चेत्याह — उच्चैरिति। लोकप्रख्यातम्। परमेश्वर एव रूढमित्यर्थः। अस्पृष्टपुरुषान्तरत्वमेवोपपादयति — सार्धचन्द्रमिति। अर्धचन्द्रेणाविनाभूतमित्यर्थः। अर्धचन्द्रधारिणो देवस्यैव वाचकमिति भावः। यस्मादीश्वरशब्दोच्चारणानन्तरमर्धचन्द्रधारी देव एव श्रोतॄणां मनसि स्फुरति, तस्मादस्पृष्टपुरुषान्तर एवायं शब्द इति भावः॥ ७५॥

**कल्पितान्योन्यसामर्थ्यैः[1] पृथिव्यादिभिरात्मभिः।**
**यस्येदं[2] ध्रियते व्यक्तं[3] धुर्यैर्यानमिवाध्वनि॥ ७६॥**

(प्रकाशिका)

कल्पितेति। कल्पितं सम्पादितम् अन्योन्यसामर्थ्यं यैः। अष्टे-

१. 'लि', २. 'येनेदं', ३. 'विश्वं धु' मुद्रितकोशपाठः.

* 'ईश्वरशब्दवाच्यत्वे' इति तात्पर्यम्।

जसी पृथिव्यैव धृते[1] स्वकार्यं कुरुत इति तयोस्तया सामर्थ्यकल्पनम् । एवमन्यत्रापि । आत्मभिर्देहैः । अध्वनीत्युभयशेषः ॥ ७६ ॥

(विवरणम्)

परमेश्वरस्य भोगप्रदत्वमाह —

कल्पितेति । यस्य पृथिव्यादिभिः आत्मभिः इदं व्यक्तं ध्रियते । यस्य शम्भोः । पृथिव्यादिभिः पृथिवीसलिलात्ममारुततेजस्सूर्य(चन्द्र)ाकाशरूपैः अष्टभिः । आत्मभिः देहैः इदं दृश्यमानं व्यक्तं विश्वं ध्रियते । 'धृञ् धरणे' इत्यस्मात् कर्मणि लडन्तोऽयं शब्दः । पृथिव्यादिरूपैर्यस्य शरीरैरस्य विश्वस्य धरणं क्रियत इत्यर्थः । अत्रोपमामाह — धुर्यैः अध्वनि यानम् इव इति । रथस्य धुरं वहन्तीति धुर्या अश्वाः तैः । अध्वनि मार्गे यानं रथ इव । मार्गे यथा रथानां धारणमश्वैः क्रियते, तथा संसारमार्गे परमेश्वरशरीरैर्विश्वमित्यर्थः । अत्र साधारणं धर्ममाह — कल्पितान्योन्यसामर्थ्यैरिति । कल्पितं सम्पादितम् अन्योन्यस्य सामर्थ्यं यैस्तैः । जलं कूपतटाकादिरूपया पृथिव्या धृतमेव स्वकार्यभूतं स्नानादिकं जनयति । तेजोऽपि काष्ठादिरूपया पृथिव्या धृतमेव पाकादिकार्यकृद् भवति । पृथिवी तु सलिलानुगृहीतैव सस्यादिकार्यमुत्पादयति, जलतेजोभ्यामनुगृहीतैव घटादिकार्यं सम्पादयतीत्यादि सर्वत्र द्रष्टव्यम् । अथवा कल्पितान्योन्यसामर्थ्यैः पञ्चीकृतैरित्यर्थः । धुर्याणामपि वहनसामर्थ्यमन्योन्यकृतमेव, चतुर्णामश्वानां मध्ये कस्यचिदभावे त्रयाणामपि वहनसामर्थ्याभावात् । भगवच्छरीरैरेव सर्वे जना यथासुखं वर्तन्त इति भावः ॥ ७६ ॥

**योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।**
**अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥ ७७ ॥**

(प्रकाशिका)

योगिन इति । क्षेत्रं शरीरं, तदभ्यन्तरवर्तिनोऽपि विचेयत्वेन परं

१. 'ते का' ङ. पाठः.

सूक्ष्मत्वं दर्शयति। योगिन इति सनकादीनामेव विचयनेऽप्यधिकार इति द्योतयति। किमेवंविधस्य[1] महता प्रयासेन विचयने तेषां फलमित्याह — अनावृत्तीति। आवृत्तिः संसारः, तस्माद् भयं यत्र नास्ति। पदं स्वरूपम्। कथं धीरास्तत्प्राप्तौ न यतेरन्निति भावः। अत्र प्रथमेन पद्येनानन्यसाधारणमीश्वरत्वम्, अनन्तराभ्यां क्रमाद् भोगमोक्षप्रदत्वं च परमेश्वरस्योक्तम्। यदाहुः—

"भुक्तिं मुक्तिमणूनां स्वव्यापारे समर्थताधानम्।
जडवर्गस्य विधत्ते सर्वानुग्राहकः शंभुः॥"

इति॥ ७७॥

(विवरणम्)

मुक्तिप्रदत्वमप्याह —

योगिन इति। योगिनः यं विचिन्वन्ति। योगिनः योगाभ्यासशीलाः यं परमेश्वरम्। विचिन्वन्ति स्वरूपावधारणार्थमतद्व्यावृत्तिमुखेनान्विच्छन्तीत्यर्थः। ननु किं भगवतः शम्भोरत्यन्तदूरावस्थितत्वादन्वेषणं, नेत्याह — क्षेत्राभ्यन्तरवर्तिनमिति। क्षेत्रं शरीरं तस्याभ्यन्तरे वर्तितुं शीलमस्येति तथा। क्षेत्राभ्यन्तरवर्तिनमपि विचिन्वन्तीत्यर्थः। अनेन स्वरूपस्य परमसूक्ष्मत्वमुक्तम्। ननु किमेवंविधस्यात्यन्तदुर्ग्रहस्य तस्य महता प्रयासेन विचयने तेषां प्रयोजनमित्यत्राह — मनीषिणः यस्य पदम् अनावृत्तिभयम् आहुः। मनीषिणो मन्वादयः यस्य शम्भोः पदं स्वरूपम्। अनावृत्तिभयम्। आवृत्तिः संसारः तस्माद् भयं यत्र नास्ति तदनावृत्तिभयम्। आहुः वदन्ति। 'यतः प्रतिनिवर्तन्ते नैव जातु विपश्चितः' इत्यादिवचनेष्विति भावः॥ ७७॥

**स ते दुहितरं साक्षात् साक्षी विश्वस्य कर्मणः[2]।
वृणुते[3] वरदः शंभुरस्मत्सङ्क्रा[4]मितैः पदैः[5]॥ ७८॥**

---

१. 'स्य तस्य म' ङ., 'स्य तस्य वि' घ. पाठः. २. 'प' ङ. पाठः. ३. 'सू' ख. ग. पाठः. ४. 'णाम्।', ५. 'ङ्क्रा' मुद्रितकोशपाठः.

(प्रकाशिका)

स इति। सः, य एवंभूतत्वेन श्रुत्यादिप्रसिद्धः। ते दुहितरमिति अहो धन्योऽसीति भावः। साक्षादव्यवधानेन। स्वयमेव वृणुते इत्यर्थः। व्यवधानं हि तदर्थमन्येन वरणे सति भवति। वरदः, यः स्वयं तस्य तस्येप्सितान् वरान् ददाति, सोऽपि त्वां वृणुत इति पुनरप्यहो धन्योऽसीति प्रकाश्यते। स्वयमब्रुवन् कथं साक्षाद् वृणुत इत्याह — अस्मत्संक्रमितैरिति। लेखस्थानीया वयमिति भावः। अनेन 'अयाचितारं नहि देवमद्रिः' (स. १. श्लो. ५१)इत्युक्तमयाचनमपास्तम्। वृणुत इति कर्त्रभिप्रायक्रियाफलप्रकाशकेन देवस्य वरणे सादरत्वं द्योतयति ॥ ७८ ॥

(विवरणम्)

अथ परमेश्वरसन्देशमेवाह —

स इति। सः शम्भुः ते दुहितरम् अस्मत्सङ्क्रमितैः पदैः साक्षाद् वृणुते। सः यः पूर्वोक्तसकलगुणविशिष्टत्वेन श्रुत्यादिषु प्रसिद्धः स इत्यर्थः। शं मुक्तिसुखं भवत्यस्मादिति शम्भुः परमेश्वरः। ते दुहितरं तव पुत्रीम्। अहो ते भाग्यपरम्परेति भावः। ननु स्वयं किञ्चिदप्यब्रुवन् महेश्वरः कथं स्वयं वृणुत इत्युच्यत इत्यत्राह — अस्मत्सङ्क्रमितैः पदैः इति। अस्मासु सङ्क्रमितैः कृतसङ्क्रमैः। सम्पूर्वात् क्रमेर्णिचि निष्ठा। मान्तत्वाद् वृद्ध्यभावः। अनेन लेखस्थानीया वयमिति द्योत्यते। अत एवाह — पदैरिति। पदान्यपि तदुदीरितान्येवेत्यर्थः। अनेन लेखस्थानीयत्वमेवोपपादितम्। साक्षादव्यवधानेन। स्वयमेव वृणुत इत्यर्थः। अन्येन वरणे सति हि व्यवधानं भवति, न तु लेखादिना वरण इति भावः। वृणुते याचते। '(व?वरणं) प्रार्थना याच्ञा' इति भोजः। 'वृञ् वरणे' इति धातोरिदं रूपम्। 'स्वरित—'(१. ३. ७२) इत्यादिनात्मनेपदम्। तेन च क्रियाफलस्य कर्त्रभिप्रायत्वप्रतिपादनेन वरणे देवस्य सादरत्वं द्योत्यते। अथ पुनरपि वरगुणप्रशंसया हिमवतो ध-

न्यत्वमेव प्रतिपादयति विशेषणद्वयेन । विश्वस्य कर्मणः साक्षी । विश्वस्य सर्वेषामपि जीवानाम् । कर्मण इति जातावेकवचनम् । सत्कर्मणां दुष्कर्मणां चेत्यर्थः । साक्षी द्रष्टा । अत एव वरदः तत्तत्फलप्रदातेत्यर्थः । यः सर्वेषामपि जीवानामीप्सितं ददाति, सोऽपि निजाभिमतसिद्ध्यर्थमिदानीं त्वां याचते । अहो धन्योऽसीति भावः । अनेन 'अयाचितारं नहि देवम्' इत्यत्रोक्तमयाचनमपास्तं वेदितव्यम् ॥ ७८ ॥

**तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।**
**अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥ ७९ ॥**

(प्रकाशिका)

**तमिति** । परस्परोपकारकत्वमुपमया ध्वन्यते । यतोऽर्थः शब्दोत्पन्नत्वेनैव प्रकाशते, शब्दश्चार्थप्रकाशनेन चरितार्थो भवति । तत्र तदीप्सिततमत्वेन तस्यापेक्षणीयतरत्वं यदुक्तं, तदुपपादयति—अशोच्येति । अशोच्या श्लाघ्येत्यर्थः । पितुरित्यनेन तवापि श्रेयो भविष्यतीति द्योतयति ॥ ७९ ॥

(विवरणम्)

ननु तर्हीदानीं मया किं कर्तव्यमित्यत्राह —

तमिति । त्वं तं सुतया योक्तुम् अर्हसि । तं महेश्वरम् । अत्र कर्मसंज्ञया कर्तुरीप्सिततमत्वात् तवैवाभिमतोऽयमर्थ इति द्योत्यते । तेन च 'शृणु कार्यं तवैव तत्' ( श्लो. ७४) इत्यत्रोक्तोऽर्थोऽनुसंहितः । सुतया तव पुत्र्या । अनेन त्वदायत्त एवायमर्थ इति द्योत्यते । योक्तुं योजयितुम् अर्हसि योग्यो भवसि । अत्रोपमामाह — भारत्या अर्थम् इव इति । भारत्या शब्देन अर्थं पदार्थमिव । ईश्वरकृतः शब्दार्थसम्बन्ध इति तार्किकाणां मतम् । तदनुसारेणेयमुक्तिः । यथेश्वरो जगत्सर्गानन्तरं शब्दार्थं पर-

स्परं योजयति, तथा भवान् पार्वतीपरमेश्वरौ परस्परं योजयितुमर्हतीत्यर्थः । अत्रोपमया दम्पत्योः परस्परोपकर्तृत्वं ध्वन्यते । अर्थो हि शब्दोल्लेखेनैव प्रकाशत इति हि वैयाकरणानां मतम् । यथोक्तं — 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति । शब्दश्चार्थप्रकाशेनैव चरितार्थो भवतीति यथा शब्दार्थयोः परस्परोपकर्तृत्वं तथात्रापीत्यर्थः । 'शृणु कार्यं तवैव तद्' इत्यत्रोक्तमर्थमेव प्रकाशयति — कन्या सद्भर्तृप्रतिपादिता हि पितुः अशोच्या इति । कन्या पुत्री । सद्भर्तृप्रतिपादिता सते श्रेष्ठाय भर्त्रे वराय प्रतिपादिता दत्ता सती । हिशब्दः प्रसिद्धौ । पितुरिति कर्तरि षष्ठी । पित्रेत्यर्थः । अशोच्या श्लाघ्या भवति । तवाप्यनेनैव श्रेयो भविष्यतीत्यर्थः ॥ ७९ ॥

**यावद्[1] द्ध्यानि भूतानि स्थावराणि चराणि च ।**
**मातरं कल्पयन्त्[2]येनामीशो हि जगतः पिता ॥ ८० ॥**

(प्रकाशिका)

इत्थमासूत्रि[3]तां वध्वा भाविनीं श्लाघ्यतां त्रि[4]श्वातिशायितया श्लोकाभ्यां प्रपञ्चयति —

**यावदि[5]ति** । भविष्यन्तीति पूर्वार्धे वाक्यं समापनीयम् । उत्तरार्धे च तावच्छब्दोऽध्याहार्यः । तावत् कल्पयन्तीति वर्तमानसामीप्ये लट् । केचित् तु यावत् कल्पयन्ती[6]ति 'यावत्पुरा —'(३.३.४)इति लटमाहुः । दक्षिणावर्तस्तु — 'यावदवधारणे (२.१.८) इत्याह ॥ ८० ॥

(विवरणम्)

इत्थमासूत्रितां पुत्र्यास्तत्तादृशीं भाविनीं श्लाघ्यतां श्लोकद्वयेन प्रपञ्चयति । तत्रादौ पुत्र्या लोकमातृत्वमाह —

---

१. 'न्त्येतानि', २. 'न्त्वे' मुद्रितकोशपाठः. ३. 'तां भा' ङ. पाठः. ४. 'तीतां श्लो' क. पाठः. ५. 'ति । यावदिति भ' क. ख. ग. घ. पाठः. ६. 'ति ल' ङ. पाठः.

यावदिति। स्थावराणि चराणि च द्वयानि भूतानि यावत् तावदेनां मातरं कल्पयन्ति। स्थावराणि अजङ्गमानि चराणि जङ्गमानि। द्वयानि द्विविधानीत्यर्थः। भूतानि जगन्ति। यावद्, भविष्यन्तीति शेषः। तावद् एनां तव पुत्रीं मातरं कल्पयन्ति आत्मनो मातृत्वेन कल्पयन्तीत्यर्थः। वर्तमानसामीप्ये लट्। अत्र भूतानामेव कल्पनेऽपि कर्तृत्वम्। चराचरात्मना द्विविधानि भूतानि यावदात्मनः सत्तां लभन्ते, तावदेनां निजमातृत्वेनैव कल्पयिष्यन्तीत्यर्थः। अनेन देव्या नित्यत्वमुक्तम्। मातृत्वकल्पने हेतुमाह—ईशो हि जगतः पिता। ईशो महेश्वरः। हिशब्दः प्रसिद्धौ। जगतः स्थावरजङ्गमात्मकस्य प्रपञ्चस्य। पिता उत्पादकः। यस्मान्महेश्वरो जगतः पितृत्वेन प्रसिद्धः, तस्मात् तत्पत्नी मातैव, 'पत्न्यः पितुर्मातर एव सर्वाः' इति न्यायादिति भावः॥ ८०॥

**प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम्।**
**चरणौ रञ्जयन्त्यस्याश्चूडामणिमरीचिभिः॥ ८१॥**[1]

(प्रकाशिका)

प्रणम्येति। प्रणम्येत्यनुवादेन[2] तत्प्रणामस्य स्वतः प्राप्तत्वं द्योतयता विबुधकर्तृकं[3] तच्चरणरञ्जनमुपपादितम्। रञ्जयन्तीति वर्तमानसामीप्ये लट्॥ ८१॥

(विवरणम्)

मातृत्वकल्पनस्य फलमाह—

प्रणम्येति। विबुधाः शितिकण्ठाय प्रणम्य तदनन्तरं चूडामणिमरीचिभिः अस्याः चरणौ रञ्जयन्ति। विबुधा देवाः शितिकण्ठाय नीलकण्ठाय।

---

१. 'न्त्व' मुद्रितकोशपाठः. २. 'ति त' ङ. पाठः. ३. 'कं चर' ङ. पाठः.

'शिती धवलमेचकावि'¹त्यमरः । प्रणम्य प्रणमनं कृत्वा तदनन्तरं तस्य प्रणमनस्यानन्तरं चूडामणीनां शिरोरत्नानाम् । 'चूडामणिः शिरोरत्नम्' इति सिंहः । मरीचिभिः रश्मिभिः । किरीटरत्नप्रभाभिरिति यावत् । अस्या इति सहस्तनिर्देशं वचनम् । चरणौ पादौ । रञ्जयन्तीति वर्तमानसामीप्ये लट् । रागयुक्तौ करिष्यन्ति । तादृशः कालोऽपि प्रत्यासन्न इत्यर्थः । अत्र शितिकण्ठाय प्रणम्येति नित्यप्राप्तं तत्प्रणमनमनूद्य विबुधकर्तृकं देवीचरणरञ्जनं विधीयत इति देव्यास्तत्समानकक्ष्यत्वप्राप्तिर्ध्वन्यते ॥ ८१ ॥

**उमा वधूर्भवान् दाता याचितार इमे वयम् ।**
**वरः शंभुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥ ८२ ॥**

(प्रकाशिका)

न केवलमस्याः, किन्तु कुलस्यैवास्य कापि लोकोत्तरता भविष्यतीत्याह —

उमेति । इमे वयं याचितारः शम्भुर्वर इत्यन्वयः । एष विधिर्विवाहविधिः । अत्रानूद्यमानानामङ्गभूतानां गुणाधिकानामुमादीनां पदार्थानामेकैकस्य वधूत्वाद्येकैकविधानादङ्गिनो विवाहविधेः किमपि कुलोन्नतिहेतुत्वं समर्थितम् । तत्र गुणा उमायाः शीलादयः, हिमवतः श्रद्धादयः, अस्मदर्थस्य शमादयः, शंभोः पारमैश्वर्यादयो लोकतोऽधिका द्रष्टव्याः ॥

(विवरणम्)

अपि च अनेन विवाहविधिना न केवलमस्याः, नापि केवलं तवैव, तव कुलस्यापि किमपि लोकोत्तरमौन्नत्यं भविष्यतीत्याह —

उमेति । उमा वधूः । उमा पार्वती वधूः कन्या । अत्र हि विवाहविधौ देया पार्वती । सा हि सौशील्यादिबहुगुणविशिष्टा । देयद्रव्यस्य गुणोत्तरत्वं हि दाने प्रधानम् । तस्मादनेनैव तव कुलस्य श्रेयो भविष्यतीत्यर्थः । पुनरपि विशेषमाह — भवान् दाता इति । श्रद्धादिगुणविशिष्टो भवान्

१. 'कवि' ङ. पाठः.

दाता दानकर्ता। देयद्रव्यस्य न्यूनगुणत्वेऽपि श्रद्धावता कृतं दानं फलभू-यिष्ठं भवति। यथोक्तं भगवतैव— 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रय-च्छति' (गीता० अ. ९. श्लो. २६) इति। इत्थं गुणद्वयसाहचर्यमुक्त्वा पुन-रपि गुणान्तरमाह— इमे वयं याचितार इति। इमे वयं शमदमादिगुणवि-शिष्टा वयम्। याचितारः प्रार्थयितारः। विप्रवाक्यपुरस्सरं क्रियमाणं हि सर्वमपि कर्म मङ्गलोदर्कं भवति, 'विप्रवाक्यं जनार्दन' इत्युक्तत्वात्। तत्रापि विशिष्टविप्रभाषितत्वमत्र विशेष इति भावः। अत एव माधवेन—

"विशिष्टविप्रभाषितं शुभग्रहस्य चोदयः।
शुभग्रहस्य वर्गता त्रयो महागुणाः स्मृताः॥"

इत्युक्तम्। पुनरपि महा(न्तं?)गुणान्तरमाह— शंभुः वरः। वरो भर्ता। पारमैश्वर्यादिलोकोत्तरगुणविशिष्टाय हराय दीयते। अनेनैव त्वत्कुलस्य श्रेयो भविष्यति, उत्तमपात्रदानमात्रस्यैव गुणोत्तरत्वस्मृतेः। तस्मादेकैकमपि वस्तु दाने प्रशस्ततरं, किं पुनः समस्तमित्याह— एष विधिः त्वत्कुलोद्भूतये अलं हि इति। एष विधिः उमाया अस्मन्नियोगपूर्वकत्वत्कर्तृकहरार्पणरूपो विवाहविधिः। तव कुलस्य उद्भूतये उत्कृष्टायै समृद्ध्यै। पूर्वोक्तेष्वेकैक-स्यापि समृद्ध्यै पर्याप्तत्वेऽपि समस्तपरिमेलनादत्रोत्कृष्टत्वम्। अलं पर्याप्तः। हिशब्दोऽवधारणार्थः। पर्याप्त एवेत्यर्थः॥ ८२॥

**अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः।**
**सुतासम्बन्धविधिना भव विश्वगुरोर्गुरुः॥ ८३॥**

(प्रकाशिका)

भवतोऽपि कापि लोकोत्तरता भविष्यतीति विधिमुखेनाह—

**अस्तोतुरिति। लोको हि स्वनिकृष्टोत्कृष्टापेक्षया स्तवनवन्दनयोः कर्मत्वं कर्तृत्वं च भजते। अयं तु न तथेत्यर्थः। तत्र हेतुर्विश्वगुरुत्वम्॥८३॥**

(विवरणम्)

न केवलमदृष्टवशादेव तत्रोत्कृष्टत्वम्, अपि तु दृष्टवशादपीत्याह —

अस्तोतुरिति। त्वं सुतासम्बन्धविधिना विश्वगुरोः गुरुः भव। सम्बन्धविधिः सम्बन्धविधानम्। सुतया करणभूतया भगवता सहात्मनः सम्बन्धविधानेन। विश्वेषां गुरोः त्रैलोक्यगुरोरपि तस्य। गुरुर्भव श्वशुरभावं लभस्वेत्यर्थः। श्वशुरस्यापि गुरुत्वं स्मृतिप्रसिद्धं —

"पित्रादयस्त्रयो भ्राता पितुर्मातामहस्तथा।
ज्येष्ठभ्राता मातुलश्च श्वशुरो गुरवस्त्विमे॥"

इति। भगवतो विश्वगुरुत्वमेवोपपादयति — अस्तोतुरित्यादिभिश्चतुर्भिर्विशेषणैः। अस्तोतुः। स्वयं कस्यचिदपि स्तोता न भवतीत्यस्तोता तस्य। आत्मकर्तृकस्तवनरहितस्येत्यर्थः। अनेन स्तवने भगवतः कर्तृत्वं निरस्तम्। स्तवने कर्मत्वमुपपादयति — स्तूयमानस्येति। सर्वैरपि जनैः आत्माभीष्टसिद्ध्यर्थमनिशं कृतस्तवनस्येत्यर्थः। वन्दनेऽपि कर्मत्वमाह — वन्द्यस्येति। वन्दनयोग्यस्येत्यर्थः। वन्दनेऽपि भगवतः कर्तृत्वं निराकरोति — अनन्यवन्दिन इति। अन्यवन्दनशीलो न भवतीत्यनन्यवन्दी। आत्मकर्तृकवन्दनरहितस्येत्यर्थः। अयमेवार्थो माघेन विस्तरतः प्रतिपादितः —

"केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि।
धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः॥"
(स. १४. श्लो. ६६.)

इति। लोके हि सर्वे जनाः स्वन्यूनगुणेन जनेन वन्द्यन्ते स्तूयन्ते च, उत्कृष्टगुणांस्तु वन्दन्ते स्तुवन्ति च। अयं पुनरितः पूर्वं स्तवनवन्दनयोः कर्मत्वमेव सर्वदा लब्धवान्। विवाहानन्तरं तु गुरुभूतत्वदपेक्षया तयोः कर्तृत्वमप्यस्य भविष्यतीति भावः॥ ८३॥

**एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।**
**लीलाकमलपत्राणि गणयामास पार्वती ॥ ८४ ॥**

(प्रकाशिका)

अथ मुनिवचनसमाप्तिं दर्शयन् रसाविष्टः कविः क्रमप्राप्तहिमवद्वृत्तान्तवर्णनात् प्रागेव नायिकावृत्तान्तमनुसन्धत्ते —

**एवमिति । अत्र लक्ष्यक्रमो लज्जाभावध्वनिः, अनुभावरूपाभ्यां लीलाकमलपत्रगणनाधोमुखत्वाभ्यामन्यथापि कन्यानां सम्भवद्भ्यां प्रवृत्ततपश्चर्याद्यनुसन्धानपुरस्सरं शनैर्लज्जायां प्रतीतिविश्रान्तेः । तस्याश्चालम्बनं देवर्षिवाक्यं, पितृपार्श्ववृत्तिरुद्दीपनम् ॥ ८४ ॥**

(विवरणम्)

अथ रसाभिनिविष्टः कविः क्रमप्राप्तात् पर्वतराजवृत्तान्तोपवर्णनात् पूर्वमेव मुनिवचनसमाप्तिं दर्शयन् नायिकावृत्तान्तमनुसन्धत्ते —

**एवमिति ।** देवर्षौ एवं वादिनि पार्वती पितुः पार्श्वे अधोमुखी लीलाकमलपत्राणि गणयामास । देवर्षौ अङ्गिरसि । एवं पूर्वोक्तप्रकारेण वदितुं शीलमस्येत्येवंवादी । तथाभूते सति । पार्वती पितुः पार्श्वे समीपे । स्थितेति शेषः । अधोमुखी नम्रानना सती लीलार्थं यत् कमलं तस्य पत्राणि दलानि गणयामास सङ्ख्यातवती । अत्र देवर्षीणां पितुश्च वचनाकर्णनकौतुकात् पितृपार्श्ववर्तिन्या देव्या लज्जाख्यो भावोऽनेन वाक्येन ध्वन्यते । अलक्ष्यक्रमो लक्ष्यक्रमश्चेति द्विविधो हि ध्वनिः । तत्र रसभावादिध्वनिरलक्ष्यक्रमः । तथाप्यत्र भावध्वनिर्लक्ष्यक्रम एव । लीलाकमलपत्रगणनाधोमुखत्वाभ्यां झटिति लज्जायाः प्रतीत्यनुदयात् पूर्वानुरागतपश्चर्याद्यनुसन्धानक्रमेण प्रतीतेश्च । लीला-

---

१. 'न्यका' ग. घ. ङ. पाठः

पत्रगणनमधोमुखत्वं च लज्जाया अनुभावः, देवर्षिवाक्यमालम्बनविभावः। पितृपार्श्ववर्तनमुद्दीपनविभावः ॥ ८४ ॥

**शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत ।**
**प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥ ८५ ॥**

(प्रकाशिका)

हिमवतः प्रतिपत्तिमाह —

**शैल इति । मेनामुखोदीक्षणं[1] तदभिप्रायवेदनाय । सम्पूर्णकामस्य[2] तस्य किं तन्मुखोदीक्षणविलम्बनेनेत्याह[3][4][5] — प्रायेणेति । गृहिणीनेत्राः गृहिणीप्रमाणाः । कन्यार्थेषु कन्याकार्येषु । कुटुम्बिनो गृहस्थाः ॥ ८५ ॥**

( विवरणम् )

अथ प्रकरणक्रमागतां हिमवतः प्रवृत्तिमेवानुसन्धत्ते —

शैल इति । शैलः संपूर्णकामः अपि मेनामुखम् उदैक्षत । सम्यक् पूर्णः कामो मनोरथो यस्य तथाभूतः सन्नपि । 'तस्थौ निवृत्तान्यवराभिलाषः' (स. १ श्लो. ५१) 'अथानुरूपाभिनिवेशतोषिणा'(स. ५. श्लो. ७) इत्यादिवचनेषु प्रतिपादितस्याभिलाषस्य देवर्षिवचनश्रवणानन्तरं परिपूर्णत्वे जातेऽपि तदभिप्रायवेदनार्थं मेनाया मुखमुदैक्षत उदीक्षितवान् । ननु किं परिपूर्णमनोरथस्यास्य कार्यविलम्बनमात्रफलेन मेनामुखवीक्षणेनेत्यत्राह — कुटुम्बिनः कन्यार्थेषु प्रायेण गृहिणीनेत्राः इति । कुटुम्बिनो गृहस्थाः । कन्याया अर्थेषु कार्येषु । दानादिकर्मस्वित्यर्थः । प्रायेण प्रायशः । गृहिणी भार्या सैव नेत्रं येषां ते तथा । भवन्तीति शेषः । यथा चक्षुषा विना जनाः कर्तव्यमर्थं किञ्चिदपि न पश्यन्ति, तथा गृहस्थाः कन्यादानादिरूपमर्थं भार्यया विना न पश्यन्तीत्यर्थः । गृहिणीप्रमाणा इति भावः । गौणोऽयं प्रयोगः ॥८५॥

---

१. 'द्वी' ङ. पाठः. २. 'स्य किमस्य त' क. ख. ग. घ. पाठः. ३. 'द्वी' ङ. पाठ.. ४. 'ड' ङ. पाठः. ५. 'म्बेनेत्या' घ. पाठः.

*इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विचिन्त्य सः[1] ।
आददे वचसामन्ते मङ्गलालङ्कृतां सुताम् ॥ ८६ ॥

(प्रकाशिका)

इदमिति । इदमा वक्ष्यमाणं हृदयगतं परामृश्यते। अत्रेति कन्याप्रार्थने । उत्तरमनन्तरकर्तव्यम् । विचिन्त्य विमर्शपूर्वं निश्चित्य । आददे हस्ते जग्राह । वचसां मुनिवचसाम् । अन्त इत्यविलम्बं द्योतयति । मङ्गलैः गौरसर्षपदूर्वादिभिः । अनेने[2] रसाज्झटितीतिकर्तव्यतानिश्चयानुष्ठाने दर्शिते ॥ ८६ ॥

( विवरणम् )

मेनामुखनिरीक्षणानन्तरं तन्मुखमपि प्रसन्नमवलोकयतो हिमवतः प्रवृत्तिमाह —

इदमिति । सः अत्र इदं न्याय्यम् उत्तरमिति बुद्ध्या विचिन्त्य वचसाम् अन्ते मङ्गलालङ्कृतां सुताम् आददे । अत्र सप्तर्षिकृते कन्याप्रार्थने। इदं वक्ष्यमाणं हृदयगतं कन्यार्पणमेव । न्याय्यं न्यायादनपेतम्। युक्तमित्यर्थः । उत्तरं प्रतिवचनम्। अनन्तरकरणीयमिति यावत् । बुद्ध्या स्वमनीषया विचिन्त्य विचारपूर्वकं निश्चित्य वचसामन्ते मुनिवचनावसानसमय एव । अनेनाविलम्बो द्योत्यते । मङ्गलैर्दूर्वाङ्कुरादिभिः अलङ्कृतां कृतनेपथ्यां सुतां पार्वतीम् आददे दानार्थं हस्ते गृहीतवान् । शीघ्रमेव कर्तव्यमर्थमवधार्य तनयां त्वरिततरमलङ्कृत्य मुनिवचनावसानसमय एव दातुमारेभ इत्यर्थः ॥ ८६ ॥

एहि विश्वात्मने वत्से! भिक्षा[3] त्वं परिकल्पिता ।
अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥ ८७ ॥

---

१. 'मृश्य सः' मुद्रितकोशपाठः. २. 'नेति' ङ. पाठः. ३. 'क्षासि प' मुद्रितकोशपाठः.

---

* इतः पूर्वं मुद्रितपुस्तके—
"मने मेनापि तत् सर्वं पत्युः कार्यमभीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥"
इत्ययं श्लोकोऽधिकः पठ्यते ।

(प्रकाशिका)

आदानस्योपयोगमुक्तिमुखेन दर्शयति —

**एहीति । एहि मुनीन् यथोचितमुपगच्छेत्यर्थः । विश्वात्मने परमेश्वराय त्वं भिक्षा परिकल्पिता, 'रत्नादिस्तम्बपर्यन्तं सर्वं भिक्षा तपस्विन' इति वचनात् । गृहमेधी गृहस्थः । अनेन 'उमा वधूः' (श्लो. ८२) इत्यादिनोक्तस्यार्थस्य सविशेषाङ्गीकरणं द्योतितम् ॥ ८७ ॥**

( विवरणम् )

आत्मना परिनिश्चितमर्थं पुत्रीं प्रत्याह —

एहीति । वत्से ! त्वम् एहि । हे वत्से ! अनेन स्नेहातिशय उक्तः । त्वम् एहि आगच्छ । किमर्थमहमागच्छामीत्यत्राह — त्वं विश्वात्मने भिक्षा परिकल्पिता इति । विश्वात्मने परमेश्वराय । अनेन पतिगुणप्रशंसया पुत्र्याः प्रदा(नं ? नजं) दुःखं निराकरोति । भिक्षा देयद्रव्यम् । 'रत्नादिस्तम्बपर्यन्तं सर्वं भिक्षा तपस्विन' इति वचनानुसारेण भिक्षाशब्दप्रयोगः । कल्पिता, मयेति शेषः । नन्वनर्थिने कथं भिक्षाप्रदानोपपत्तिरत आह — मुनयः अर्थिनः इति । मुनयः सप्तर्षयः अर्थिनो याचकाः । परमेश्वरनियोगात् त्वद्याचनार्थमेते समागता इत्यर्थः । आत्मनः प्रसादमपि पुत्रीं प्रति निवेदयति — मया गृहमेधिफलं प्राप्तम् । 'गृहमेधी गृहस्थः स्यादि'ति भोजः । गृहमेधिनः फलं गृहस्थाश्रमावलम्बनस्य फलं मया प्राप्तमित्यर्थः ।

> "गृहस्थः श्रद्धया दद्याद् भिक्षां भिक्षार्थिने सदा ।
> भिक्षामददतः पुंसो गार्हस्थ्यं निष्फलं भवेत् ॥"

इति स्मृतेरिति भावः । अनेन श्लोकेन 'उमा वधूरि'त्यत्र श्लोके यदुक्तं, तस्यैवार्थस्य विशेषेणाङ्गीकरणं कृतमित्यवसेयम्, अत्रापि परमेश्वराय भिक्षा दीयते त्वमत्र भिक्षाद्रव्यं मुनयश्चार्थिन इति पूर्ववदेव सर्वमुक्त्वा तदन्ते गृहमेधिफलं मया प्राप्तमित्युपसंहारात् ॥ ८७ ॥

---

१. 'त्यनेनो' क. ग. पाठः.

एतावदुक्त्वा तनयामृषीनाह महीधरः ।
इयं नमति वः सर्वांस्त्रिलोचनवधूरिति ॥ ८८ ॥

(प्रकाशिका)

एतावदिति । एतावत् परिमिताक्षरमित्यर्थः । त्रिलोचनवधूरिति सिद्धतानिर्देशेन मुनिप्रार्थने दूराभ्युपगमं द्योतयति ॥ ८८ ॥

(विवरणम्)

अथ हिमवतो मुनिप्रार्थितस्यार्थस्य सविशेषमङ्गीकरणमेवाह —

एतावदिति । महीधरः तनयाम् एतावदुक्त्वा ऋषीनाह । तनयां पुत्रीम् एतावद् एतावन्मात्रम् । परिमिताक्षरमित्यर्थः । अनेन कार्यत्वरा गम्यते । उक्त्वा अभिधाय । आह उक्तवान् । लिडर्थमव्ययमिदम् । वचनप्रकारमाह — त्रिलोचनवधूरियं वः सर्वान् नमतीति । त्रिलोचनस्य हरस्य वधूः । 'वधूर्जाया स्नुषा स्त्री चे'त्यमरः । इयमिति सहस्तंनिर्देशं वचनम् । वः सर्वान् नमति प्रणमति । इतिशब्दः प्रकारवाची । अत्र त्रिलोचनवधूरिति सिद्धवदभिधानान्मुनिप्रार्थितस्यार्थस्य सविशेषमनुवादं दर्शितवान् ॥ ८८ ॥

ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥ ८९ ॥

(प्रकाशिका)

अत एवाह —

ईप्सितेति । ईप्सितार्थोऽभ्युपगमः, तत्क्रियायामुदारं विदग्धम् । वैदग्ध्यप्रदर्शिताभ्युपगममित्यर्थः । अभिनन्द्य प्रशस्य । आशीर्भिः प्रणामसमुचिताभिः । पुरःपाकाभिः पुरस्कृतफलाभिः ॥ ८९ ॥

(विवरणम्)

देवीप्रणामानन्तरं मुनीनां तदनुरूपां प्रवृत्तिमाह—

ईप्सितेति । ते गिरेर्वचः अभिनन्द्य अम्बिकाम् आशीर्भिः एधयामासुः । वचः इयं नमतीत्यादिवचनम् अभिनन्द्य प्रशस्य अम्बिकां पार्वतीम् आशीर्भिः प्रणामानन्तरोचितैराशीर्वादैः एधयामासुः वर्धयामासुः । संवर्धिताभिलषितप्राप्तिनिमित्तभूतादृष्टां व्यधुरित्यर्थः । हिमवद्वचसः प्रशंसार्हत्वमाह—ईप्सितार्थक्रियोदारामिति । कन्याप्रार्थनानन्तरं मुनिभिरीप्सितस्याभिलषितस्यार्थस्य । अभ्युपगमस्येत्यर्थः । क्रियायां करणे उदारं विदग्धम् । प्रार्थनानन्तरं किमसौ वक्ष्यतीति मुनीनामाकाङ्क्षायां जातायां त्रिलोचनवधूरियं वो नमतीति वैदग्ध्यप्रदर्शिताभ्युपगममित्यर्थः । अत एव कुतूहलाधिक्यादभिनन्दनम् । तेषामाशिषामुत्कर्षमाह—पुरःपाकाभिरिति । पुरस्कृतफलाभिरित्यर्थः । पुरः अग्र एव पाकः अनुभवकालो यासामिति विग्रहः ॥ ८९ ॥

**तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।**
**अङ्कमारोपयामास लज्जमानामरुन्धती ॥ ९० ॥**

(प्रकाशिका)

तामिति । प्रणामादरः सादरप्रणामः । लज्जमानामिति वरबन्धुबुद्ध्या ॥ ९० ॥

(विवरणम्)

'आर्याप्यरुन्धती तत्र' (श्लो. ३२) इति यत् प्रागुक्तं, तदेव श्लोकद्वयेनानुसन्दधाति तामित्यादिना । तत्रादावरुन्धत्याः स्वपदप्रणतवधूविषयां प्रवृत्तिमाह—

तामिति । अरुन्धती ताम् अङ्कम् आरोपयामास । तां स्वपदप्रणतां पार्वतीम् अङ्कम् उत्सङ्गम् । 'उत्सङ्गचिह्नयोरङ्क' इत्यमरः । आरोपयामास

प्रसादातिशयादात्मन उत्सङ्गेऽवस्थापयामासेत्यर्थः। देव्याः प्रणामोचितभक्त्यतिशयमाह — प्रणामादरस्रस्तजाम्बूनदवतंसकामिति । (प्रणामादरेण) सादरेण प्रणामेनेत्यर्थः । स्रस्तः पतितः जाम्बूनदं सुवर्णं 'स्वर्णम् । सुवर्णं कनकमि'त्यारभ्य 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामि'ति सिंहः । तन्मयो वतंसः शिरोलङ्कारो यस्यास्ताम् । सादरे हि प्रणामे शिरः सम्यगानतं भवति । शिरसः सम्यगानमने सति तु शिरोलङ्कारः स्रस्तो भवतीति भावः । वरबन्धुबुद्ध्या सञ्जातं तात्कालिकं भावविशेषमाह — लज्जमानामिति । अत्र वर्तमानप्रयोगेण लज्जायाः सन्ततप्रवृत्तत्वमुक्तम् ॥ ९० ॥

**तन्मातरं चाश्रुमुखीं दुहितृस्नेहविक्लबाम् ।**
**वरस्यानन्यपूर्वस्य विशोकामकरोद् गुणैः ॥ ९१ ॥**

(प्रकाशिका)

तन्मातरमिति । दुहितृस्नेहविक्लबामिति दुहिता मे दूरीभविष्यतीति । अन्या पूर्वं न विद्यते यस्य सोऽनन्यपूर्वः । पुंवद्भावः प्रागुपपादितः । आभ्यां श्लोकाभ्याम् 'आर्याप्यरुन्धती' (श्लो०, ३२) इत्यादिनोक्तमनुसंहितम् ॥ ९१ ॥

(विवरणम्)

देवीमातृविषयां प्रवृत्तिमाह —

तन्मातरमिति । सा दुहितृस्नेहविक्लबां तन्मातरम् अनन्यपूर्वस्य वरस्य गुणैः विशोकाम् अकरोच्च । दुहिता पुत्री, तद्विषयेण स्नेहेन विक्लबां परवशाम् । इतः परं मे दुहिता दूरवर्तिनी भविष्यतीति बुद्ध्या परवशीकृतामित्यर्थः । तस्या देव्या मातरं मेनाम् । अन्या पूर्वं न विद्यते यस्य सोऽनन्यपूर्वः । अन्यशब्दस्य सर्वनामत्वात् पुंवद्भावः। भार्यान्तररहितस्येत्यर्थः । इदमेव हि वधूनां प्रथममाशास्यम् । वरस्य भर्तुः गुणैः सकल-

लोकनियन्तृत्वादिरूपैः । विशोकां विगतशोकामकरोत् । चशब्दो देवीला-लनसमुच्चयार्थः । अलं विषादेन, तव पुत्र्या महानुत्कर्षो भविष्यति, नापि सपत्नीशोकलेशोऽपीत्यादिवचनैर्मेनां शोकहीनामकरोदित्यर्थः । दुहितृस्नेहवैक्लव्यस्यानुभावमाह — अश्रुमुखीमिति । अश्रूणि बाष्पजलानि मुखे यस्यास्ताम् । स्वहस्ताभ्यामेवाश्रूणि विमृज्य वरगुणप्रशंसया मेनां सुप्रसन्नामकरोच्चेति भावः ॥ ९१ ॥

**वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।**
**तां त्र्यहादूर्ध्वमाख्याय चेलुश्चीरपरिग्रहाः ॥ ९२ ॥**

(प्रकाशिका)

**वैवाहिकीमिति** । वैवाहिकीं विवाहयोग्याम् । हरबन्धुनेत्यनेन यथा सुतायास्तथा जामातुरपि कुशलं वाञ्छता हिमवता कृतो विशिष्टतिथिप्रश्न इति द्योत्यते । त्र्यहादूर्ध्वं चतुर्थेऽह्नीत्यर्थः । चेलुरासनादुदचलन् ॥ ९२ ॥

(विवरणम्)

हिमवत्संवादप्रकरणमुपसंहरति —

**वैवाहिकीमिति** । हरबन्धुना तत्क्षणं वैवाहिकी तिथिं पृष्टाः चीरपरिग्रहाः तां त्र्यहादूर्ध्वम् आख्याय चेलुः । हरस्य बन्धुना श्वशुरभावं गमिष्यता हिमवता । अत एव सुतायामिव जामातर्यपि कुशलाभिलाषात् तदानीमेव विवाहोचितविशिष्टदिवसप्रश्नावकाशः । तत्क्षणं तस्मिन् क्षण एव । अहो मोहस्य महिमेति भावः । वैवाहिकीं विवाहयोग्यां तिथिं दिनम् । विवाहयोग्यो दिवसः क इति पृष्टाः चीरपरिग्रहाः मुनयः विवाहयोग्यां तिथिं त्र्यहादूर्ध्वं दिवसत्रयादूर्ध्वं चतुर्थेऽहनीत्याख्याय चेलुः आसनादुदचलन् ॥

---

१. 'ते', २. 'रु' मुद्रितकोशपाठः.

**ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य[1] च शूलिनम् ।**
**सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ९३ ॥**

(प्रकाशिका)

त इति । आमन्त्र्य आपृच्छ्य । तद्विसृष्टास्तदनुज्ञाताः । खमिति ज्योतिष्पथवर्तित्वात् ॥ ९३ ॥

(विवरणम्)

मुनिप्रवृत्तिमुपसंहरति —

त इति । ते हिमालयम् आमन्त्र्य पुनः शूलिनं प्रेक्ष्य च सिद्धमर्थम् अस्मै निवेद्य च तद्विसृष्टाः खम् उद्ययुः । आमन्त्र्य आपृच्छ्य पुनरपि शूलिनं महेश्वरं प्रेक्ष्य दृष्ट्वा च । सिद्धमर्थं निजप्रयाससिद्धं प्रयोजनम् । अस्मै शूलिने निवेद्य च विज्ञाप्य च तद्विसृष्टाः तेन शूलिना विसृष्टाः गमनायानुज्ञाताः । खम् आकाशम् । ज्योतिष्पथमित्यर्थः । उद्ययुः उद्गतवन्तः । अत्र कथासङ्क्षेपो दर्शितः ॥ ९३ ॥

**पशुपतिरपि तान्यहानि कृच्छ्रा-**
**दगमयदद्रिसुतासमागमोत्कः ।**
**कमपरमवशं न विप्रकुर्यु-**
**र्विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ९४ ॥**

(प्रकाशिका)

**पशुपतिरिति । पशुपतिः सकलब्रह्मादिचेतनवर्गप्रवृत्तिनिवृत्तिनियमकारी । अपिरसम्भावनां द्योतयति । तानीति त्रीणि । अवशम् अस्वतन्त्रम् । विप्रकुर्युर्बाधेरन् । विभुं स्वतन्त्रम् । भावा औत्सुक्यादयः । परमस्वतन्त्रस्यास्येयमवस्था, किमुतास्वतन्त्राणामितरेषामित्यर्थः । अ-**

---

१. 'प्राप्य च' मुद्रितकोशपाठः.

नेन वक्ष्यमाणस्य सम्भोगस्य प्राणप्रदत्वेनाभिलाषविप्रलम्भो दर्शितः ॥

इत्यरुणगिरिनाथविरचितायां कुमारसम्भवप्रकाशिकायां

षष्ठः सर्गः ।

---

(विवरणम्)

अथ भगवद्वृत्तमेवानुसन्दधाति —

**पशुपतिरिति** । पशुपतिरपि तानि अहानि कृच्छ्रादगमयत् । पशुपतिः पशूनां ब्रह्मादिस्तम्बपर्यन्तानां जीवानां पतिः प्रवृत्तिनिवृत्तिनियमकारी । तदुक्तं शैवागमे —

"ब्रह्मादयो जगति जीवगणास्तृणान्ताः सर्वे विमोहितधियः पशवः प्रदिष्टाः ।
तेषामभूदधिपतिः शिव एक एव तस्माद् विदुः पशुपतिं परमेश्वरं तम् ॥"

इति । तथाभूतः सन्नपि । अपिशब्दोऽयमसम्भावनां द्योतयति । तान्यहानि विवाहोचितचतुर्थदिवसप्राप्तिपरिपन्थिभूतानि त्रीणि दिनानि । कृच्छ्राद् यथाकथञ्चित् । चित्रदर्शनादिभिरिति भावः । अगमयद् अतिवाहयामास । कृच्छ्रादतिवाहने हेतुमाह — अद्रिसुतासमागमोत्क इति । अद्रेः सुतायाः पार्वत्याः समागमे सङ्गमे उत्क उन्मनाः । पार्वतीसमागमोत्सुक इत्यर्थः । परमेश्वरस्य तावदियं समवस्था । इतरेषां का कथेत्याह — अमी भावाः अवशम् अपरं कं न विप्रकुर्युः इति । अमी पशुपतेरपि बाधकाः भावाः औत्सुक्यादयश्च अवशं कर्मपाशनिबद्धत्वादस्वतन्त्रम् । मायापराधीनमित्यर्थः । इदं बाधाधिक्ये हेतुः । अपरं भगवद्व्यतिरिक्तम् । कं न विप्रकुर्युः सर्वानपि बाधेरन्नित्यर्थः । तादृशानां भावानां पशुपतावपि प्रवृत्तिं पुनरपि सविस्मयमाह — तं विभुमपि स्पृशन्ति यदिति । अत्राप्यमी भावा इत्यनुषज्यते । तं तत्तादृशं विभुं नित्यमुक्तत्वात्

स्वतन्त्रम् । अपिर्विरोधमाह । स्पृशन्ति बाधन्त इत्यर्थः । अत्र स्पृशन्तीत्यनेन स्पर्शनमात्रस्याप्यसम्भावना द्योत्यते । यद् यस्मात् । नित्यमुक्तस्य भगवतस्तावदीदृशी दशा । तस्मादन्येषां बाधने को विस्मय इत्यर्थः । अत्र दिनत्रयं कथञ्चिदतिवाहयामासेत्यनेन चतुर्थेऽहनि कर्तव्यस्य विवाहस्य वर्णनमनन्तरसर्गे क्रियत इत्युत्तरसर्गार्थोपक्षेपः कृतः । औत्सुक्यप्रतिपादनेन तु वक्ष्यमाणानां संभोगानां प्राणभूतोऽभिलाषविप्रलम्भो दर्शित इत्यवगन्तव्यम् ॥९४॥

षष्ठः सूक्ष्मतरो निसर्गमधुरः सर्गोऽयमत्युज्ज्वलैः
प्रत्युत्पन्नरसैरसीमहृदयैः पद्यैश्च विद्योतते ।
वाणीवेयमणीयसी मतिरतिक्षीणा मदीया तथा-
प्यस्मिन् मां गुरुपादभक्तिरमलां व्याख्यां समाख्यापयत् ॥

ऊढाभोगनृसिंहचम्पुरचनादक्षस्य नारायण-
क्ष्मादेवस्य कृतौ गिरीशगिरिजाभक्तिप्रवृद्धोदये ।
व्याख्यानेऽत्र कुमारसम्भवपदार्थालोचनप्रक्रिया-
निष्णाते बत षष्ठ एष निरगात् सर्गो निसर्गोज्ज्वलः ॥

इति श्रीकृष्णशिष्यस्य नारायणस्य कृतौ

कुमारसम्भवविवरणे

षष्ठः सर्गः ।

---

# अथ सप्तमः सर्गः ।

अथौषधीनामधिपस्य वृद्धौ
तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुताया
विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥

(प्रकाशिका)

अथोपक्षिप्तं विवाहं वर्णयितुमुपक्रमते —

अथेति । ओषधीनामाधिपस्य वृद्धौ, तथा च कालविधाने—'अर्के कर्कटकन्यकाघटधनुर्मुक्ते भृगौ मन्त्रिणि स्फीतज्योतिषि शीतरोचिषि बलोद्रिक्ते विरिक्ते तिथावि'ति । जामित्रं सप्तमराशिः, तस्य गुणो ग्रहमुक्तत्वम् । तथा सुबोधे — 'शुद्धो भवेत् सप्तम' इति । अत्र तु जामित्रशब्देन विवाहो लक्ष्यते, मुख्यार्थाभावात् । जामित्रगुणो विवाहयोग्यता । दाक्षिणावर्तस्तु — तनौ च जामित्रेति केचित् पठन्ति । तनौ लग्ने । 'लग्नादयस्तनुकुटुम्बसहोत्थबन्धि'त्यादिना लग्नादीनां संज्ञाकरणात् । तच्चायुक्तम् । वैवाहिकीं तिथिं पृष्टा इत्युक्तत्वादिति । एतत् त्वयुक्तम् । तिथिप्रश्ने विलग्नगुणस्याप्यपेक्षणीयत्वात् । तस्मात् सोऽपि पाठो न वर्जनीयः । विवाहदीक्षा विवाहोपनयनं, तस्य विधिः तदर्थं कर्तव्यं देवताराधनादिकमनुष्ठानम् । 'दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेष्वि'त्यस्माद् धातोर्दीक्षापदं व्युत्पन्नम् । स्त्रीणां विवाह एवोपनयमत्वेन स्मर्यते । 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः'(अ. २. श्लो. ६७) इति मनुः । अन्वतिष्ठत् कारयामास । ण्यर्थोऽन्तर्भूतः ॥ १ ॥

---

१. 'था च वि' क. पाठः. २. 'यु' क. ख. ग. घ. पाठः. ३. 'त्र जा' क. ख. ग. घ. पाठः. ४. 'ति । त' ग. पाठः. ५. 'श्नेऽपि ल' क. ख. ग. घ. पाठः.

(विवरणम्)

अथ पूर्वसर्गोपक्षिप्तो विवाहोत्सवः सप्तमेनानेन सर्गेण वर्ण्यते। तत्रादौ तद्विषयां हिमवतः प्रवृत्तिमाह अथेत्यादिना—

अथेति। अथ हिमवान् ओषधीनाम् अधिपस्य वृद्धौ तिथौ जामित्रगुणान्वितायां च सुतायाः विवाहदीक्षाविधिम् अन्वतिष्ठत्। अथ सप्तर्षिनिर्दिष्टदिवसत्रयात्ययानन्तरम् ओषधीनामधिपश्चन्द्रः। 'ओषधीशो निशापतिरि'ति सिंहः। तस्य वृद्धौ वर्धनकाले। पूर्वपक्ष इत्यर्थः। 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः'(१.४.१)'सार्वकालमेके विवाहम्' (१.४.२) इत्याश्वलायनगृह्ये। तन्मतानुसारेणैवेयमुक्तिः। तिथिः प्रतिपदादिः, तस्यां जामित्रगुणान्वितायाम्। जामित्रशब्देनात्र विवाहो लक्ष्यते। जामित्रशब्दो हि लग्नस्य सप्तमराशौ प्रसिद्धः। यथोक्तं मुहूर्तदर्शने— 'जामित्रास्तकलत्रमन्मथमदद्यूनाभिधं सप्तमम्' इति। तस्य गुणस्तु ग्रहरहितत्वम्। यथोक्तं सुबोधे— 'शुद्धो भवेत् सप्तमः' इति। तस्मात् सप्तमस्य ग्रहरहितत्वं लग्नस्यैवोपपद्यते, न तु तिथेरिति मुख्यार्थासम्भवः। विवाहस्य सप्तमशुद्ध्या सह नित्यसम्बन्धश्चास्ति। सप्तमशुद्धेरावश्यकत्वप्रतीतिश्च फलम्। तस्माज्जामित्रगुणो विवाहयोग्यता। तिथौ विवाहयोग्यतासहितायां चेत्यर्थः। विवाहयोग्ये दिवस इति यावत्। विवाहयोग्या दिवसाश्च मुहूर्तपदव्यामुक्ताः— 'इष्टाः कृष्णाष्टमीनेन्द्रजपितृमरुदन्त्योत्तरा मूलमित्रा उद्वाहे' इति। सुतायाः पुत्र्याः। विवाह एव दीक्षा विवाहदीक्षा। दीक्षाशब्दस्यात्रोपनयनमर्थः। 'दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु' इत्यस्माद् धातोर्दीक्षापदव्युत्पत्तिः। विवाह एव हि स्त्रीणामुपनयनम्। यथाह मनुः— 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः' इति। तस्माद् विवाहदीक्षा विवाहोपनयनं, तस्य विधिं तदर्थं कर्तव्यं देवताराधनादिरूपमनुष्ठानम्। अन्वतिष्ठद् अनुष्ठापितवान्। अन्तर्भूतण्य-

र्थोऽयं प्रयोगः । विवाहदीक्षाविधेः पूर्वरङ्गमाह — समेतबन्धुरिति । समेताः संप्राप्ताः बन्धवो यं स तथा । सर्वानपि बन्धुजनानानीय तैः सम्भूयेत्यर्थः ॥ १ ॥

**वैवाहिकैः कौतुकसंविधानै-**
**र्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।**
**आसीत् पुरं सानुमतोऽनुरागा-**
**दन्तःपुरं चैककुलोपमेयम् ॥ २ ॥**

(प्रकाशिका)

**वैवाहिकैरिति** । वैवाहिकैर्विवाहप्रयोजनैः । कौतुकसंविधानैः मङ्गलोपकरणसंपादनैः प्रतिसरबन्धोपकरणसंपादनैर्वा । करणे हेतौ वा तृतीया । अनुरागाद् गृहे गृहे व्यग्रो व्यापृत आकुलो वा पुरन्ध्रिवर्गः कुटुम्बिनीजनो यत्र । 'व्यग्रस्तु विगताग्रे स्याद् व्यापृताकुलयोरपी'ति केशवः । एवम्भूतं पुरमन्तःपुरं च एकेन कुलेन वंशेन उपमेयमासीदित्यर्थः ॥ २ ॥

(विवरणम्)

अथ विवाहदीक्षामेवानुक्रमेण वर्णयितुमपक्रमते —

वैवाहिकैरिति । सानुमतः पुरम् अन्तःपुरं च एककुलोपमेयम् आसीत् । सानुमतः पर्वतस्य पुरं राजधानी । तस्यां वर्तमाना जना इत्यर्थः । अन्तःपुरम् अन्तःपुरजनाश्च । एककुलोपमेयम् एकेनैव कुलेनोपमेयम् उपमातुं शक्यमासीत् । सानुमतः पौराणामन्तःपुरवासिनां च[२] तदानीमेकवंशोद्भूतत्वप्रतीतिर्जातेत्यर्थः । तत्र हेतुमाह — वैवाहिकैः कौतुकसंविधानैः अनुरागाद् गृहे गृहे व्यग्रपुरन्ध्रिवर्गमिति । वैवाहिकैः विवाहप्रयोजनैः । कौतुकं

१. 'होत्सवमे' ख. छ. पाठः.　२. 'च एक' ख. पाठः.

मङ्गलम् । 'कौतूहले मङ्गले च कौतुकं स्याद्' इति भोजः । अत्र कौतुकशब्देन मङ्गलोपकरणं लक्ष्यते । मङ्गलोपकरणानां संविधानैः सम्पादनैः । हेतौ करणे वा तृतीया । अनुरागाद्धेतोः गृहे गृहे प्रतिगृहम् । व्यग्रः व्याकुलः व्यापृतो वा । 'व्यग्रस्तु विगताग्रे स्याद् व्यापृताकुलयोरपी'ति केशवः । पुरन्ध्रिवर्गः कुटुम्बिनीजनो यत्र । अन्तःपुरवासिनां जनानां पौरजनानां चानुरागसाम्यनिमित्तेन प्रवृत्तिसाम्येनैकवंशजाता एवैते जना इति द्रष्टृणां प्रतीतिर्जातेत्यर्थः ॥ २ ॥

**सन्तानकाकीर्णमहापथं त-**
**च्चीनांशुकैः कल्पितकेतुमालम् ।**
**भासो[1] ज्वलत् काञ्चनतोरणाङ्कं[2]**
**स्थानान्तरे[3] स्वर्ग इवाबभासे ॥ ३ ॥**

(प्रकाशिका)

**सन्तानकेति । सन्तानकं देवकुसुमम् । महापथो राजपथः । तत्सामर्थ्यात् तच्छब्देन पुरमेव परामृश्यत इत्यवसेयम् । चीनो जनपदविशेषः ॥ ३ ॥**

(विवरणम्)

मङ्गलोपकरणसम्पादनस्य फलमाह—

सन्तानकेति । तत् स्थानान्तरे स्वर्गः इव आबभासे । तद् हिमवत्पुरं स्थानान्तरे मेरुशिखरव्यतिरिक्तस्थाने स्वर्ग इव शोभते स्म । हिमवच्छिखरवर्तित्वमात्रमेवास्य[4] स्वर्गाद्विशेष इति भावः । स्वर्गसाम्यमेवोपपादयति—सन्तानकेत्यादिना । सन्तानकाकीर्णमहापथं सन्तानकैर्देवतरुकुसुमैराकीर्णो विकीर्णो[5] महापथो राजमार्गो यत्र[6] तत् । रथ्यासंस्कारस्तत्र कल्पवृक्ष-

---

१. 'सोज्ज्वल', २. 'नां', ३. 'रं' मुद्रितकोशपाठः. ४. 'त्वमे' क. ङ. च. पाठः, ५. 'त्र' क. ङ. च. पाठः. ६. 'त्र ।' छ. पाठः.

पुष्पैरेवेत्यर्थः । पताकाबन्धनेऽपि विशेषमाह — चीनांशुकैः कल्पितकेतुमालम् इति । चीनाख्ये जनपदविशेषे निर्मितैरंशुकैः वसनैः । दुकूलैरिति यावत् । कल्पिता निर्मिताः केतुमालाः पताकाः यत्र तत् । पुरस्य स्वाभाविकीमेव शोभामाह — भासा ज्वलदिति । भासा तेजसा ज्वलद् दीप्यमानम् । तोरणानां विशेषमाह — काञ्चनतोरणाङ्कमिति । काञ्चनैः कनकैः निर्मितानि तोरणान्येवाङ्कः चिह्नं यस्य तत् तथा । काञ्चनतोरणानामिति पाठे काञ्चन-तोरणानां भासा ज्वलदित्यन्वयः । नहि स्वर्गस्यैतद्व्यतिरिक्तं किमपि गुणा-न्तरमस्तीति भावः ॥ ३ ॥

**एकैव सत्यामपि पुत्रपङ्क्तौ**
**चिरस्य दृष्टेव मृतोत्थितेव ।**
**उपोढपाणिग्रहणेति पित्रो-**
**रुमा विशेषोच्छ्वसिता बभूव ॥ ४ ॥**

(प्रकाशिका)

एकैवेति । एकशब्दः केवलार्थः । उपोढपाणिग्रहणा निकटीभूत-विवाहा । इतिर्हेतौ । विशेषेणोच्छ्वसिता उल्लासिता । अधिकलालितेत्यर्थः । उमैकैवेत्यन्वयः । 'महीभृतः पुत्रवतोऽपि' (स० १. श्लो. २६) इत्यादिना या विशेषप्रतिपत्तिरुक्ता, तस्या एवेदानीं विवाहप्रत्यासत्त्या प्रागव-स्थाया दूराधिकत्वमुत्प्रेक्षाद्वयेन प्रकाश्यते ॥ ४ ॥

(विवरणम्)

इत्थमारब्धेषु विवाहकोलाहलेष्वासन्नविवाहायां देव्यां पित्रोः प्रीतिविशेषमाह —

एकैवेति । पुत्रपङ्क्तौ सत्याम् अपि उमा एका एव उपोढपाणिग्रहणा इति पित्रोः विशेषोच्छ्वसिता बभूव । पुत्राणां पङ्क्तौ समूहे सत्यां भवन्त्यामपि ।

---

१. 'ने वि' ख. छ. पाठः. २. 'कीं शोभामेवाह' छ. पाठः. ३. 'आसन्नपा', ४. 'तं' मुद्रितकोशपाठः.

अपिशब्दोऽयमसम्भावनां द्योतयति । उमा पार्वती एकैव । एकशब्दः केवलार्थः । उपोढं प्रत्यासन्नं पाणिग्रहणं विवाहो यस्याः सा तथा । इति-शब्दो हेतौ । प्रत्यासन्नविवाहत्वादित्यर्थः । पित्रोः हिमवतो मेनायाश्च । विशेषोच्छ्वसिता[1] विशेषेणोच्छ्वसिता उल्लसिता । पूर्वकालाद् विशेषेण लालनास्पदं बभूवेत्यर्थः । 'महीभृतः पुत्रवतोऽपि दृष्टिरि'त्यत्र पार्वत्यां यः स्नेहविशेषः प्रतिपादितः, स एवेदानीमनुरूपनायकप्राप्तिहेतुभूतविवाहप्रत्यास-त्त्या शतगुणः संबभूवेत्यर्थः । अत एवोत्प्रेक्षते — चिरस्य दृष्टा इव इति । पूर्वमतिचिरकालमदृष्टा सती पुनः सहसा दृष्टेवेत्यर्थः । ततोऽप्यधिकतरलाल-नीयत्वप्रतिपादकमुत्प्रेक्षान्तरमाह — मृतोत्थिता इवे इति । पूर्वं गतजीविता पुनर्दैववशात् सञ्जातजीवितेवेत्यर्थः ॥ ४ ॥

अङ्काद् ययावङ्कमुदीरिताशीः
सा मण्डनान्मण्डनमन्वभुङ्क्त ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य
स्नेहस्तदेकायतनं जगाम ॥ ५ ॥

(प्रकाशिका)

इतरबन्धुवर्गस्यापि प्रतिपत्तिमाह —

अङ्कादिति । यथा कादम्बर्यां — गन्धर्वाणामङ्कादङ्कं सञ्चर-न्तीति[2] । उदीरिताशीरिति यानसमये[3]विशेषणम् । मण्डनाद्[4] एकया कृतं मण्डनमनुभूयेत्यर्थः । मण्डिता सत्येव मण्डनमनुबभूवेत्यर्थः । संबन्धिनः पुत्रादयः, तैर्भिन्नो विभक्तः । कुलस्य ज्ञातिसङ्घस्य । तच्छब्देन देवी परामृश्यते । एकशब्दः प्रधानार्थः केवलार्थो वा । तत्कुलस्य पुत्रादिविभ-क्तः स्नेह एकौघीभूय[5] तामेव जगामेवेत्युत्प्रेक्षागर्भेयमुक्तिः ॥ ५ ॥

---

१. 'व ।' छ. पाठः. २. 'ती' क. ख. ग. घ. पाठः. ३. 'ये' क. ख. ग. घ. पाठः. ४. 'नम् ए' ङ. पाठः. ५. 'एकैक' ग. पाठः.

(विवरणम्)

अन्येषामपि बन्धुजनानां प्रतिपत्तिविशेषमाह—

अङ्कादिति । सा उदीरिताशीः अङ्काद् अङ्कं ययौ । सा पार्वती उदीरिता उच्चारिता आशिषः आशीर्वादा यस्यै तथाभूता सती । प्रयाणसमयविशेषणं चेदम् । अङ्कादुत्सङ्गाद् अङ्कमुत्सङ्गान्तरं ययौ गतवती । तां सर्वेऽप्यङ्कमारोप्याशीर्वादानुदीरयामासुरित्यर्थः । स्नेहातिशयद्योतकं चेदम् । अलङ्कारेऽपि स्नेहातिशयद्योतकं विशेषमाह—सा मण्डनान्मण्डनमन्वभुङ्क्त इति । एकैकया कृतं मण्डनमनुभूयान्याभिः कृतं मण्डनमनुबभूवेत्यर्थः । मण्डनमत्र बन्धुजनप्रीतिदायानामाभरणानामर्पणम् । बन्धुजनाः पूर्वमेव मण्डितामप्येनां पुनरपि स्नेहातिशयान्मण्डयामासुरित्यर्थः । किं बहुनेत्याह—गिरेः कुलस्य स्नेहः संबन्धिभिन्नः अपि तदेकायतनं जगाम । गिरेः कुलस्य ज्ञातिवर्गस्य स्नेहः वात्सल्यं सम्बन्धिभिः पुत्रादिभिः भिन्नः विभक्तोऽपि । तदेकायतनं, तच्छब्देनात्र देवी परामृश्यते । एकशब्दः प्रधानवाची केवलार्थो वा । आयतनं गृहम् । पार्वतीरूपमेकमेव गृहं जगाम । हिमवत्कुलजातानां स्नेहः पुत्रादिविभक्तोऽप्येकाकारेण तामेव प्राविशदिवेत्युत्प्रेक्षागर्भेयमुक्तिः ॥ ५ ॥

**मैत्रे मुहूर्ते शशलाञ्छनेन**
**योगं गतासूत्तरफल्गुनीषु ।**
**तस्याः शरीरप्रतिकर्म[1] चक्रु-**
**र्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥ ६ ॥**

(प्रकाशिका)

मैत्र इति । सूर्योदयात् तृतीयो मैत्रः । उत्तरफल्गुनीषूत्तराख्यासु तारासु । शरीरस्य प्रतिकर्म रोमादिशोधनम् । अत्र सुबोधिनीवचनं—'रोहिण्यैन्दवरेवतीश्वसनभं मूलानुराधा मघा हस्ताश्वोत्तरभत्रयं च शुभदं

१. 'रे प्र' मुद्रितकोशपाठः.

वैवाहिके कर्मणि' इति । पतिपुत्रवत्य इति मङ्गलार्थम् ॥ ६ ॥

(विवरणम्)

अथ रोमनखशोधनाभ्यञ्जनस्नानवसनधारणादिकं क्रमेण वर्ण्यते । तत्र रोमादि-शोधनमाह—

मैत्र इति । उत्तरफल्गुनीषु शशलाञ्छनेन योगं गतासु मैत्रे मुहूर्ते बन्धु-स्त्रियः तस्याः शरीरप्रतिकर्म चक्रुः । उत्तरफल्गुनीसंज्ञासु तारासु । 'फल्गु-नीप्रोष्ठपदानां च नक्षत्रे'(१. २. ६०) इति बहुवचनम् । शशलाञ्छनेन चन्द्रेण योगं गतासु संयोगं प्राप्तासु । उत्तरफल्गुनीनक्षत्रस्य विवाहयोग्यत्वमुक्तं सुबो-धिन्यां—'रोहिण्यैन्दवरेवतीश्वसनभं मूलानुराधा मघा हस्ताश्चोत्तरभत्रयं च शुभदं वैवाहिके कर्मणि' इति । तत्रोत्तरफल्गुन्या विशेषेण शुभदत्वमुक्तं गौत-मेन—'विवाहे शुभदात्यन्तं तस्मादुत्तरफल्गुनी'ति । मैत्रे मित्रदेवत्ये । मुहूर्ते मुहूर्तशब्दो नाडिकाद्वयवाची ।

"अष्टादश निमेषास्तु काष्ठा त्रिंशत् तु ताः कला ।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ॥
ते तु त्रिंशदहोरात्रः"

इति सिंहः । सूर्योदयादारभ्य तृतीयो मुहूर्तो मैत्रः । 'रौद्रः सार्पस्तथा मैत्रः' इत्यादिवचनात् । बन्धुभूताः स्त्रियः तस्याः शरीरस्य प्रतिकर्म रोमादिशोधनं चक्रुः । बन्धुस्त्रीष्वपि विशेषमाह— याः पतिपुत्रवत्यः इति । पतिः पुत्राश्च सन्त्यासां तास्तथा । मङ्गलक्रियासु तासामेवोचितत्वादित्थमुक्तम् ॥ ६ ॥

**सा गौरसिद्धार्थनिवेशवद्भि-**
**र्दूर्वाप्रवालैः प्रतिभिन्नशोभम् ।**

---

१. 'सु यो' ख. छ. पाठः. २. 'घटिका' क. ख. ग. घ. च. पाठः.

उन्नीविकौशेयमुपात्तबाण-
मभ्यङ्गनेपथ्यमलञ्चकार ॥ ७ ॥

(प्रकाशिका)

सेति। गौरं धवलम्। निवेशो योगः। दूर्वायाः प्रवालैः पल्लवैः। प्रतिभिन्नं सञ्जातम्। उन्नीवि उद्गतनीविबन्धनं कौशेयं यत्र। अनेन पाणिग्रहणात् प्राक्तनः परिधानप्रकार उक्तः। यथा विद्धसालभञ्जिकायां—

"कन्येति सूचयति वेषविशेष एव यन्नीलचोलकवती लिखितात्र चित्रे।
पाणिग्रहात् प्रभृति तु प्रमदाजनस्य नीवीनिवेशसुभगः परिधानमार्गः॥"

इति। उपात्तबाणम्, अत्र मनुः—

"शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने॥" (अ०.३. श्लो. ४४)

इति। देवेषु च परमेश्वर एक एव ब्राह्मणः। श्रुतिं चात्र प्रमाणयन्ति। तस्माद् वर्णोत्कृष्टस्य वेदनमत्रावसेयम्। अभ्यङ्गनेपथ्यम् अभ्यङ्गस्याङ्गभूतं प्रसाधनं, स्नानस्य वक्ष्यमाणत्वात्। अलञ्चकार प्रसाधनस्यापि प्रसाधनमभूदित्यर्थः॥ ७॥

(विवरणम्)

अथाभ्यञ्जनस्याङ्गभूतं मङ्गलालङ्कारमाह—

सेति। सा अभ्यङ्गनेपथ्यम् अलञ्चकार। अभ्यङ्गस्याङ्गभूतं नेपथ्यमाकल्पम्। 'आकल्पवेषौ नेपथ्यम्' इति सिंहः। अलञ्चकार अलङ्कृतवती। अभ्यङ्गार्थं कृतानां मङ्गलालङ्काराणामप्यलङ्कारतामनुबभूवेत्यर्थः। सर्वेषां हि मण्डनं शरीरशोभार्थम्। अस्यास्तु शरीरशोभायाः स्वाभाविकत्वाद् वैपरीत्यं जातमिति भावः। अत एव वक्ष्यति—'तां प्राङ्मुखीं तत्र निवेश्य तन्वीम्' (श्लो. १३) इत्यादि। तानेव मङ्गलालङ्कारानाह विशेषणत्रयेण। तत्र शिरोलङ्कारमा-

---

१. 'निर्नाभिकौ' मुद्रितकोशपाठः. २. 'न्धं को' ङ. पाठः. ३. 'त' ङ. पाठः. ४. 'विशेषसुलभः प' ङ. पाठः. ५. 'नै' क. ख. ग. घ. पाठः.

ह—गौरसिद्धार्थनिवेशवद्भिः दूर्वाप्रवालैः प्रतिभिन्नशोभम् इति । गौराणां धवलानां सिद्धार्थानां सर्षपाणां निवेशो योगो येषामस्तीति तथा, तैः । अत्र सिद्धार्थशब्दो यद्यपि धवलसर्षपवाची । 'सिद्धार्थस्त्वेष धवल' इत्यमरः । तथापि करिकलभन्यायाद् गौरशब्दोपादानं मङ्गलार्थम् । अत्यन्तधावल्यप्रतीतिश्च फलम् । दूर्वाप्रवालैः दूर्वापल्लवैः । प्रतिभिन्ना सञ्जाता शोभा यत्र तत् तथा । कटितटालङ्कारमाह—उन्नीविकौशेयमिति । उन्नीवि उद्गतनीवीबन्धं कौशेयं दुकूलं यत्र तत् । अनेन स्त्रीणां विवाहात् पूर्वं नीवीबन्धरहितः परिधान-प्रकार उक्तः । यथोक्तं विद्धसालभञ्जिकायां—

"कन्येति सूचयति वेषविशेष एव यन्नीलचोलकवती लिखितात्र चित्रे ।
पाणिग्रहात् प्रभृति तु प्रमदाजनस्य नीवीविशेषसुभगः परिधानमार्गः ॥"

इति । हस्तालङ्कारमाह—उपात्तबाणमिति । उपात्तो धृतो बाणः शरो यत्र तत् । अत्र मनुः—

"शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने ॥"

इति । देवेषु परमेश्वर एक एव ब्राह्मण इति श्रुतिप्रसिद्धिरिति हिमवतः क्षत्रियत्वमनेन प्रतिपादितम् ॥ ७ ॥

**बभौ च सम्पर्कमुपेत्य बाला**
**विवाहदीक्षाविधिसायकेन[3] ।**
**करेण भानोर्बहुलावसाने**
**सन्धुक्ष्यमाणेव शशाङ्करेखा ॥ ८ ॥**

---

१. 'रसिंहवचनात् । त' ख. ङ. च. पाठः. २. 'धवलप्र' ख. पाठः. ३. 'नवेन दी' मुद्रितकोशपाठः.

(प्रकाशिका)

**बभाविति । बहुलावसाने पूर्वपक्षप्रतिपदीत्यर्थः । शशाङ्करेखा चन्द्रकला । यथोक्तं—'सौषुम्नेन त्वममृतपथेनैत्य शीतांशुभावम्' इति ॥८॥**

(विवरणम्)

बाणग्रहणमेव विशेषतो वर्णयति—

बभाविति । बाला विवाहदीक्षाविधिसायकेन सम्पर्कम् उपेत्य बभौ च । शशाङ्कलेखासाम्यसिद्ध्यर्थं बालेत्युक्तम् । विवाहदीक्षा विवाहोपनयनं, तस्य विधिर्विधानं, तदर्थेन सायकेन शरेण । सम्पर्कं संबन्धम् उपेत्य प्राप्य बभौ[1] शुशुभे च । अत्र चकारेण 'अभ्यङ्गनेपथ्यमलञ्चकार'(श्लो॰७)इति[2] पूर्वं यदुक्तं, तत्र बाणस्य विशेषं द्योतयति । विवाहदीक्षाविधिसायकेन तु सम्पर्कमुपेत्य[3] बाला शुशुभे च, न केवलमलञ्चकारेत्यर्थः[4] । अत्रोपमामाह—बहुलावसाने भानोः करेण सन्धुक्ष्यमाणा शशाङ्कलेखा[5] इव इति । बहुलः कृष्णपक्षः । 'बहुलः कृष्णपक्षः[6] स्यादि'ति भोजः । तस्य अवसाने समाप्तौ । पूर्वपक्षप्रतिपदीत्यर्थः । भानोः सूर्यस्य करेण किरणेन कर्तृभूतेन सन्धुक्ष्यमाणा सम्यग् वर्ध्यमाना । 'सन्धुक्षणं दीपने स्याद् वर्धने दहनेऽपि चे'ति भोजः । शशाङ्कलेखा[7] चन्द्रकलेव[8] । रविकरैरेव हि शशिकलावर्धनम् । तदुक्तं—

"सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशम् ।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः ॥"

इति ॥ ८ ॥

**तां लोध्रकल्केन हृताङ्गतैला-**
**माश्यानकालेयकृताङ्गरागाम् ।**

---

१. 'भौ च' क. पाठः. २. 'ति यत् पूर्वमुक्तं' ख. ङ. छ. पाठः. ३. 'त्य च बा' ख., 'त्य तु बा' ङ. च. छ. पाठः. ४. 'रेति भावः । अ' ख. ङ. छ. पाठः. ५. 'रे' ख. पाठः. ६. 'क्षे' ख. ङ. छ. पाठः. ७. 'रेखेव च' ख., 'लेखेव च' क. ग. घ. ङ. पाठः. ८. 'लेखेव' क. ख. ग. घ. ङ. च. पाठः.

वासो वसानामभिषेकयोग्यं
नार्यश्चतुष्काभिमुखीमनैषुः ॥ ९ ॥

(प्रकाशिका)

तामिति । आश्यानेति ईषदार्द्रयावककृताङ्गरागाम् । 'अथ यावकं कालेयकं चे'ति सिंहः । स्नानात् प्रागङ्गरागकरणं लोध्रकषायस्य रौक्ष्यं परिहर्तुम् । अभिषेकयोग्यं कार्पासादि । चतुष्कं चतुस्तम्भप्रतिष्ठितं मण्डपम् ॥ ९ ॥

(विवरणम्)

स्नानोद्योगमाह —

तामिति । नार्यः तां चतुष्काभिमुखीम् अनैषुः । नार्यः स्नानाधिकृताः स्त्रियः । चतुष्कं चतुस्तम्भं मण्डपं, तदभिमुखीम् । अनैषुः स्नानमण्डपं प्रापयामासुरित्यर्थः । कीदृशीमित्यत्राह — लोध्रकल्केन हृताङ्गतैलामित्यादिना । लोध्रो वृक्षविशेषः, तस्य कल्केन । परिमृदितया त्वचेत्यर्थः । हृतमङ्गगतं तैलं यस्याः ताम् । तथा आश्यानकालेयकृताङ्गरागाम् । आश्यानेन ईषदार्द्रेण । 'आश्यानमीषदार्द्रे स्यादि'ति भोजः । कालेयेन जावकेन । 'अथ जावकम् । कालेयकं चे'त्यमरः । कृतो विहितः अङ्गरागो यस्याः ताम् । लोध्रकल्कस्य रौक्ष्यं परिहर्तुं स्नानात् प्राक्तनमिदमङ्गरागार्पणमित्यवसेयम् । पुनश्चाभिषेकयोग्यं वासः वसानाम् । अभिषेकः स्नानम् । कौशेयादिवाससामभिषेकयोग्यत्वाभावात् कृतकार्पासवसनपरिधानामित्यर्थः । तैलपरित्यागम्, अङ्गरागार्पणं, वासःपरिधानं च विजने प्रदेशे विधाय सतूर्यस्नानार्थं मण्डपमेनां तदधिकृताः स्त्रियः प्रापयामासुरित्यर्थः ॥ ९ ॥

विन्यस्तवैडूर्यशिलातलेऽस्मि-
न्नाविद्धमुक्ताकृतभक्तिलेखे ।

१. 'खं व्यनै' मुद्रितकोशपाठः. २. 'जालक', ३. 'जालकं' ङ. पाठः. ४ 'म् इति । आ' छ. पाठः. ५. 'र्द्रे' छ. पाठः. ६. 'ब', ७. 'फलभ', ८. 'चित्रे ।' मुद्रितकोशपाठः.

आवर्जिताष्टापदकुम्भतोयैः
सतूर्यमेनां स्नपयाम्बभूवुः ॥ १० ॥

(प्रकाशिका)

विन्यस्तेति । आसनार्थन्यस्तवैडूर्यशिलापट्टे । आविद्धेति, सूत्रस्यूतमुक्तासम्पादितभक्तिरचने । अष्टापदं स्वर्णम् ॥ १० ॥

(विवरणम्)

सतूर्यस्नानमेवाह —

विन्यस्तेति । ताः अस्मिन् आवर्जिताष्टापदकुम्भतोयैः एनां सतूर्यं स्नपयाम्बभूवुः । अस्मिन् चतुस्तम्भे मण्डपे । आवर्जितैः आस्नावितैः अष्टापदकुम्भतोयैः । अष्टापदं काञ्चनम् ।

"चामीकरं जातरूपं महारजतकाञ्चने ।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥"

इत्यमरः । काञ्चनमये कुम्भे सम्भृतैस्तोयैरित्यर्थः । सतूर्यमिति स्नपनक्रियाविशेषणम् । तूर्यशब्दो वाद्यविशेषवाची । सवाद्यघोषमित्यर्थः । स्नपयाम्बभूवुः स्नानं कारितवत्यः । स्नातेर्मित्त्वाद्ध्रस्वः । (तत्? इद)शब्दोक्तस्य चतुष्कस्य देवीस्नानयोग्यतां दर्शयति विशेषणद्वयेन । तत्रासनसौख्यमाह — विन्यस्तवैडूर्यशिलातले इति । वैडूर्यं विडूरदेशोद्भूतो रत्नविशेषः । विन्यस्तं वैडूर्यमयं शिलातलं शिलापट्टं यत्र तस्मिन् । अवस्थानसौख्यप्रदर्शनार्थं तलशब्दनिर्देशः । मण्डपस्य दर्शनीयत्वमाह — आविद्धमुक्ताकृतभक्तिलेखे इति । आविद्धाभिः सूत्रप्रोताभिः मुक्ताभिः मुक्ताफलैः कृता सम्पादिता भक्तिलेखा विन्यासविशेषरचना यत्र तस्मिन् । आबद्धमुक्ताफलभक्तिशोभे इति पाठे आबद्धैः सूत्रप्रोतैः मुक्ताफलैः कृतया भक्त्या विन्यासविच्छित्त्या शोभा यत्रेति विग्रहः । सूत्रप्रोतभक्तिरचनाचित्रे चतुस्तम्भमण्डपे वैडूर्यशिलायामासीनां तां काञ्चनकलशजलैः सतूर्यघोषं स्नपयामासुरित्यर्थः ॥ १० ॥

सा मङ्गलस्नानविशुद्धगात्री
गृहीतवत्युद्गमनीयवस्त्रम् ।
निर्वृत्तपर्जन्यजलाभिषेका
प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥

(प्रकाशिका)

सेति । विशुद्धमङ्गरागादिरहितम् । 'धौतमुद्गमनीयं स्यादि'ति हलायुधः ॥ ११ ॥

(विवरणम्)

अथ कृतमङ्गलस्नानाया देव्याः शोभां विशेषेण वर्णयति—

सेति । मङ्गलस्नानविशुद्धगात्री उद्गमनीयवस्त्रं गृहीतवती सा निवृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधा इव रेजे । मङ्गलार्थेन स्नानेन विशुद्धमङ्गरागादिरहितं गात्रं शरीरं यस्याः तथाभूता सती । पुनश्च उद्गमनीयवस्त्रं कारुधौतं वसनम् । 'धौतमुद्गमनीयं स्यादि'ति हलायुधः । गृहीतवती च सती । निवृत्तः उपरतः पर्जन्यजलाभिषेकः पर्जन्यजलैः मेघजलैः । 'पर्जन्यौ रसदब्देन्द्रावि'त्यमरः । अभिषेकः परितः सेको यस्याः तथाभूता सती । पुनश्च शरदि प्रफुल्ला विकसितकुसुमाः काशास्तृणविशेषा यस्यां तथाभूता च सती । वसुधा भूमिरिव रेजे शुशुभे । मङ्गलस्नानेन संक्षालिताङ्गरागा गृहीतधवलवसना पार्वती वर्षजलसंक्षालितपङ्का शरदागमे विकसितकाशपरिष्कृता भूमिरिव रराजेत्यर्थः ॥ ११ ॥

तस्मात् प्रदेशाच्च वितानवन्तं
युक्तं मणिस्तम्भचतुष्टयेन ।

---

१. 'प', २. 'त्रा', ३. 'वृ' मुद्रितकोशपाठः. ४. 'स्याः सा त' क. ख. ग. घ. च. पाठः. ५. 'ता स' क. ङ. च. पाठः. ६. 'तकुसुमका' ख. छ. पाठः.

पतिव्रताभिः परिगृह्य निन्ये
क्लृप्तासनं कौतुकवेदिमध्यम् ॥ १२ ॥

(प्रकाशिका)

तस्मादिति । परिगृह्येत्यादरावधानादिद्योतकम् । कौतुकं प्रतिसरः, तद्बन्धार्था वेदिः कौतुकवेदिः ॥ १२ ॥

(विवरणम्)

अथ देव्या मङ्गलालङ्कारभवनप्रवेशप्रकारमाह—

तस्मादिति । सा पतिव्रताभिः परिगृह्य तस्मात् प्रदेशात् कौतुकवेदिमध्यं निन्ये च । परिगृह्य आदाय । सस्नेहबहुमानं निजकरैः परितः संस्पृश्येत्यर्थः । तस्मात् प्रदेशात् स्नानमण्डपात् । कौतुकं प्रतिसरः, तद्बन्धार्थं या वेदिः परिष्कृता भूमिः, तस्या मध्यं[1] मध्यप्रदेशं निन्ये नीता । चकारः पूर्वोक्तस्नानादिसमुच्चयार्थः । अत्र कौतुकबन्धनमन्येषामपि मङ्गलालङ्काराणामुपलक्षणम् । स्नानानन्तरमन्तःपुरसुन्दरीभिरलङ्कारमण्डपं नीतेत्यर्थः । अलङ्कारमण्डपस्य रमणीयतां दर्शयति विशेषणत्रयेण । वितानवन्तम् आबद्धवितानमित्यर्थः । तथा मणिस्तम्भचतुष्टयेन युक्तं मणिमयानां रत्नमयानां स्तम्भानां चतुष्टयेन । सङ्ख्याया अवयवे तयप् । मणिमयैश्चतुर्भिः स्तम्भैरुपेतमित्यर्थः । तथा क्लृप्तासनं क्लृप्तं कल्पितमासनं यत्र तं तथा ॥ १२ ॥

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्यः ॥ १३ ॥

---

1. 'ध्यं नि' क. ग. पाठः.

(प्रकाशिका)

तामिति। प्राङ्मुखीमिति मङ्गलार्थम्। भूतार्थः सत्यार्थः। भूतार्थश्चासौ[1] शोभा चेति समासः। स्वाभाविकशोभेत्यर्थः। प्रसाधने प्रसाधनसाधने। विवाहाङ्गतया प्रसाधनं कार्यम्। तस्मिंश्च[2] कृते स्वाभाविकी कान्तिरपिधीयेत। तस्मात् प्रागेव प्रसाधनादेनां कान्तिमनुभवाम इति तासां विलम्बः॥ १३॥

(विवरणम्)

देव्या मङ्गलालङ्कारप्रस्तावे विशेषमाह —

तामिति। नार्यः तां तन्वीं तत्र प्राङ्मुखीं निवेश्य प्रसाधने सन्निहितेऽपि पुरः निषण्णाः क्षणं व्यलम्बन्त। नार्यः अन्तःपुरस्त्रियः तत्र कौतुकवेदिमध्ये। प्राचि पूर्वभागे मुखं यस्याः तथाभूतां सतीं, निवेश्य अवस्थाप्य। अत्र प्राङ्मुखावस्थापनं मङ्गलार्थं, 'मङ्गल्ये प्राङ्मुखो भवेदि'ति वचनात्। प्रसाधने प्रसाधनसाधन इत्यर्थः। प्रसाधनमलङ्कारः। सन्निहिते समीपस्थेऽपि। अपिशब्दो विलम्बसम्भावनां परिहरति। पुरः अग्रभाग एव निषण्णाः स्थिताः सत्यः। पुरोनिषण्णत्वमपि कालविलम्बाभावे[3] हेतुः। क्षणं क्षणकालं, न तु चिरकालं, मुहूर्तातिक्रमभयादिति भावः। व्यलम्बन्त विलम्बनं कृतवत्यः। प्रसाधयितुमिति शेषः। प्रसाधिकाः प्रसाधनसाधनेषु सन्निहितेष्वपि पुरोभाग एव निषण्णाः सत्यः प्रसाधनं कर्तुं क्षणमात्रं कालक्षेपं कृतवत्य इत्यर्थः। विलम्बे हेतुमाह — भूतार्थशोभाह्रियमाणनेत्रा इति। भूतार्थः परमार्थः। भूतार्थश्चासौ[4] शोभा चेति भूतार्थशोभा। स्वाभाविकशोभेत्यर्थः। तया ह्रियमाणानि आह्रियमाणानि नेत्राणि यासां तास्तथा। अत्र पुरोनिषण्णत्वं नेत्रहरणेऽपि हेतुः। अवश्यं कर्तव्यं हि विवाहे प्रसाधनम्। कृते तु प्रसाधने बहुविधैराभरणाङ्गरागादिभिरस्याः स्वाभाविकी कान्तिः पिहिता भवेत्। तस्मात् प्रसाधनात्

१. 'र्थश्चा' क. ख. ग. घ. पाठः. २. 'स्मिन् कृ' घ. ङ. पाठः. ३. 'व' ख. पाठः.
४. 'र्थो चासौ' क. ख. ग. घ. ङ. च. पाठः.

पूर्वमेवास्याः स्वाभाविकीं कान्तिं क्षणमात्रमनुभवाम इति मत्वा व्यलम्बन्ते-त्यर्थः। नेत्रहरणमेव वा विलम्बे हेतुः ॥ १३ ॥

धूपोष्मणा त्याजितमार्द्रभावं
केशान्तमन्तःकुसुमं तदीयम्।
पर्याक्षिपत् काचिदुदारबन्धं
दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥

(प्रकाशिका)

धूपोष्मणेति। अन्तशब्दः स्वरूपवचनः। अन्तःकुसुमं, कृत्वेत्यर्थः। पर्याक्षिपद्[1] वेष्टयामास। उदारो विदग्धो बन्धो बन्धप्रकारो यस्य। पाण्डुशब्दः परभागद्योतकः। 'मधुमतीरोषधीरिति मधूकानि बध्नाती'ति शम्बिल्यगृह्यवचनान्मधूकधारणम् ॥ १४ ॥

(विवरणम्)

अथ मुहूर्तातिक्रमत्वरया तासां प्रसाधनोद्योगमाह —

धूपोष्मणेति। काचित् तदीयं केशान्तं दूर्वावता पाण्डुमधूकदाम्ना पर्याक्षिपत्। काचित् काचन प्रसाधिका तदीयं पार्वतीसम्बद्धम्। केशान्तम्, अन्तशब्दोऽयं स्वरूपवाची। 'अन्तः स्वरूपे पर्यन्ते मृत्यौ मध्यावसानयोः' इति भोजः। केशस्वरूपमित्यर्थः। दूर्वावता दूर्वायुक्तेन पाण्डुना श्वेतवर्णेन मधूकदाम्ना मधूकपुष्पनिबद्धेन दाम्ना मालया। अत्र मधूकशब्देनैव पाण्डुत्वे सिद्धेऽपि परभागद्योतनार्थमुपादानम्। पर्याक्षिपद् वेष्टयामास। प्रसाधिकासु काचित्[2] पार्वत्याः केशं दूर्वाङ्कुरानुविद्धया मधूककुसुममालया बन्धयामासेत्यर्थः[3]। 'मधूकानि बध्नाती'ति शाम्बल्यगृह्यवचनादत्र[4] मधूकधारणमुक्तम्। स्नातोत्तीर्णाया देव्याः केशानामार्द्रत्वादार्द्राणां च बन्धनानर्हत्वादार्द्रतात्यागप्रकारवचनेन केशान्तं विशिनष्टि — धूपोष्मणा आर्द्रभावं

---

१. 'र्ये' ङ. पाठः. २. 'चन पा' छ. पाठः. ३. 'वेष्टया' ङ. छ. पाठः. ४. 'शाम्ब' छ. पाठः.

त्याजितमिति। अगुरुचन्दनादिभिः संस्कृतो धूमो धूपः, तस्योष्मणा औष्ण्येन करणभूतेन आर्द्रभावम् आर्द्रत्वं कर्म त्याजितं हापितमित्यर्थः। प्रसाधिकाजनेनेति शेषः। आर्द्रभावस्य धूपोष्मणा परित्यागः सौरभ्यातिशयार्थः। सौरभ्यातिशयोत्पादनप्रकारमाह—अन्तःकुसुममिति। अन्तर्भागे कुसुमानि पुष्पाणि यस्य तम्। दर्शनमात्रेऽपि मनोहरत्वमाह—उदारबन्धमिति। उदारः उत्कृष्टः बन्धः बन्धनप्रकारो यस्य तं[1] तथा ॥ १४ ॥

[2]प्रसन्नशुक्लागुरु चक्रुरङ्गं
गोरोचनापत्रविभक्तमस्याः।
सा चक्रवाकाङ्कितसैकताया-
स्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ १५ ॥

(प्रकाशिका)

प्रसन्नेति। प्रसन्नं स्वच्छम्। गोरोचनापत्रैः विभक्तम्। विभक्तसर्वाङ्गीणशुक्लागु[3]रुविन्यासमित्यर्थः। तस्थौ, कक्ष्यान्तर इति शेषः॥ १५॥

(विवरणम्)

अङ्गरागार्पणप्रकारमाह—

प्रसन्ने[4]ति। ताः प्रसन्नशुक्लागु[5]रु अस्याः अङ्गं गोरोचनापत्रविभक्तं चक्रुः। प्रसन्नः स्वच्छः। शुक्लागुरुरगुरुविशेषः। अत्र शुक्लागुरुशब्देन तत्कृतमङ्गरागं† लक्ष्यते। प्रसन्नं शुक्लागुरुकृतमङ्गरागं यत्र तादृशम् अस्या अङ्गं गोरोचनानिर्मि[7]तेन पत्रेण पत्रभङ्गेन विभक्तं कृतविभागं चक्रुः। स्वच्छतरशुक्लागुरुनिर्मिताङ्गरागं तदङ्गं रक्ततरगोरोचनापत्रविभक्तं चक्रुरित्यर्थः। तथाभूताया देव्याः कान्तिविशेषमाह—सा चक्रवाकाङ्कितसैकतायाः त्रिस्रोतसः

१. 'तम् ॥' क. पाठः. २. 'विन्यस्तशु' मुद्रितकोशपाठः. ३. 'ग' ङ. पाठः. ४. 'ति। प्र' क. पाठः. ५. 'ग' ङ. च. छ. पाठः. ६. 'षो यत्र।' ख. ग. पाठः. ७. 'तपत्रे' ङ. च. छ. पाठः.

† अङ्गरागशब्दे तद्विशेषणे च पुंस्त्वं बोद्धव्यम्।

कान्तिम् अतीत्य तस्थौ इति । सा रक्तगोरोचनाविभक्तशुक्लाङ्गरागा । चक्रवाकैः सुवर्णवर्णैः पक्षिविशेषैः अङ्कितं चिह्नितं सैकतं पुलिनं यस्याः तस्याः त्रिस्रोतसः गङ्गायाः कान्तिं शोभाम् अतीत्य अतिक्रम्य तस्थौ । उत्कृष्टे कक्ष्यान्तरे इति शेषः । रक्ततरचक्रवाकाङ्कितसैकतायाः स्वत एव शुक्लतरायास्त्रिस्रोतसः कान्तिमधश्चकारेत्यर्थः ॥ १५ ॥

लीनद्विरेफं परिभूय पद्मं
समेघलेशं[1] शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धै-
श्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६ ॥

(प्रकाशिका)

लीनेति । प्रसिद्धैश्चूर्णाद्यलङ्कृतैः । प्रसङ्गः[2] प्रस्तावः[3] । सम्भावितसादृश्ययोरनयोः परिभवादेव तदाननस्यान्यसादृश्यं[4] न सम्भाव्यमित्यर्थः ॥

(विवरणम्)

अलकसंस्कारं भङ्ग्यन्तरेणाह —

लीनेति । तदाननश्रीः प्रसिद्धैः अलकैः लीनद्विरेफं पद्मं समेघलेशं शशिनः बिम्बं च परिभूय सादृश्यकथाप्रसङ्गं चिच्छेद । तस्याः पार्वत्याः आननस्य मुखस्य श्रीः शोभा । 'श्रीरिन्दिरायां शोभायामि'त्यमरः । प्रसिद्धैः भूषितैः । 'प्रसिद्धौ ख्यातभूषिताविे'त्यमरः । कुसुमचूर्णादिसंस्कृतैरलकैरित्यर्थः । लीनोऽधिष्ठितः द्विरेफः भृङ्गो यत्र तादृशं पद्मं पङ्कजं च परिभूय विजित्य । मेघस्य लेशेन खण्डेन सहितं समेघलेशं शशिनश्चन्द्रस्य बिम्बं च परिभूय । सादृश्यस्य कथा सादृश्यकथा, तस्याः प्रसङ्गं प्रस्तावं चिच्छेद दूरतो[5] निराचकार । [6]लीनद्विरेफस्य पद्मस्य समेघलेशस्य चन्द्रबिम्बस्य च लोके तादृ-

१. 'खं' मुद्रितकोशपाठः. २. 'ङ्ग', ङ. पाठः. ३. 'वम् । ' ङ. पाठः. ४. 'स्सा' ग. पाठः. ५. 'तस्तिरश्चका' ख. पाठः. ६. 'लग्नद्वि' क. पाठः.

शतदाननसादृश्यवार्तायाः सम्भावितत्वात् तयोरनायासेनैव परिभवाच्च सादृश्यवार्तायाः प्रसङ्गोऽपि नाभूदित्यर्थः ॥ १६ ॥

**कर्णार्पितो लोध्रकषायरूक्षे**
**गोरोचनाभेदनितान्तगौरे ।**
**तस्याः कपोले परभागलाभाद्**
**बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥**

(प्रकाशिका)

कर्णेति । रूष इति केचित् पठन्ति । लोध्रकषायेण रूषो रूषणं यस्य । भेदः सम्भेदः । गौरं पीतम् । 'परभागो गुणोत्कर्ष' इति यादवः । प्ररोहोऽङ्कुरः ॥ १७ ॥

(विवरणम्)

मङ्गलार्थं यवाङ्कुरकर्णावतंसार्पणमाह —

कर्णेति । कर्णार्पितः यवप्ररोहः तस्याः कपोले परभागलाभात् चक्षूंषि बबन्ध । कर्णयोरर्पितः कर्णावतंसत्वेन न्यस्तः यवस्य दीर्घशूकस्य प्ररोहोऽङ्कुरः कपोले गण्डप्रदेशयोः परभागस्य गुणोत्कर्षस्य लाभात् सिद्धेः । 'परभागो गुणोत्कर्ष' इति यादवः । चक्षूंषि नयनानि । द्रष्टॄणामिति शेषः । बबन्ध कपोलयोरेव †निबद्धमकरोत् । देव्याः कर्णार्पितः कपोलयोर्लम्बमानो यवाङ्कुरो नृणां चक्षुषां गण्डप्रदेशादितरप्रदेशगमनं नानुमनुते स्मेत्यर्थः । परभागलाभमेव प्रदर्शयति विशेषणद्वयेन । लोध्रकषायरूक्षे लोध्रकषायेण लोध्रपङ्केन रूक्षे अत्यन्तधवलत्वाद् दुर्निरीक्षे । मनोहर इत्यर्थः । लोध्रकषायरूषे इति वा पाठः । लोध्रकषायेण रूषो रूषणं यस्य तस्मिन् । लोध्रकषाय-

१. 'क्षेपनि' मुद्रितकोशपाठः.

† निबद्धमिति सामान्याभिप्रायमेकवचनम् ।

सम्पृक्त इत्यर्थः। तथा गोरोचनाभेदनितान्तगौरे गोरोचनाया भेदः सम्भेदः, तेन नितान्तगौरे अत्यन्तपीते। गोरोचनापत्रनितान्तगौर इति वा पाठः। तादृशे कपोले लम्बमानस्य यवप्ररोहस्य सकलजननेत्रहरणे कः प्रयास इति भावः॥ १७॥

**रेखाविभक्तः सुविभक्तगात्र्याः**
**किञ्चिन्मधूच्छिष्टविमृष्टरागः।**
**कामप्यभिख्यां स्फुरितैरपुष्य-**
**दासन्नलावण्यफलोऽधरोष्ठः॥ १८॥**

(प्रकाशिका)

रेखेति। रेखाकारेण विभक्तसन्निवेश इत्यर्थः। मधूच्छिष्टं सिक्थकं, तेन किञ्चिद्विमृष्टो विशोधितो रागो यस्य। अत्र वात्स्यायनवचनं—'सिक्थकमलक्तकं चौष्ठयोर्दत्त्वे'ति। तच्च जयमङ्गलायां व्याख्यातम्—'अलक्तकपिण्डेनोत्पिष्यौष्ठौ ताम्बूलमुपयुज्य सिक्थगुलिकया ताडयेदित्ययं क्रम' इति। कामप्यनिर्वचनीयाम्। अभिख्यां शोभाम्। स्फुरितैः प्रियतमभावनाजनितैः स्फुरणैरित्यर्थः। आसन्नं लावण्यस्य फलं प्रियोपभोगलक्षणं यस्य। तथाविधस्य स्फुरितं शोभत एवेति भावः॥ १८॥

( विवरणम् )

अधराभरणं वर्णयति—

रेखेति। सुविभक्तगात्र्याः अधरोष्ठः स्फुरितैः कामपि अभिख्याम् अपुष्यत्। सुविभक्तं सम्यग्विभक्तं गात्रं शरीरं यस्याः तस्याः। अनेन स्वाभाविकी कान्तिरुक्ता। सा च 'वपुर्विभक्तं नवयौवनेन'(स. १. श्लो. ३१)इत्य-

---

१. 'न' ङ. च. छ. पाठः. २. 'क्तपिण्ड्योतिप' ङ. पाठः. ३. 'ण्यफ' ङ. पाठः. ४. 'लङ्कर' ख. ङ. छ. पाठः.

त्र दर्शिता । अधरश्चासावोष्ठश्चेत्यधरोष्ठः । स्फुरितैः स्फुरणैः । प्रियतमभावना-जनितैरिति शेषः । भावनासन्निहितप्रियतमदर्शनसञ्जातैः सात्त्विकविकाररूपै-रधरस्फुरणैरित्यर्थः । कामप्यनिर्वचनीयाम् अभिख्यां शोभाम् । 'शोभाभिख्या कान्तिरि'त्यमरः । अपुष्यत् प्रापदित्यर्थः । अधरोष्ठस्यापि स्वाभाविकीं का-न्तिमाह — रेखाविभक्त इति । रेखाकारेण विभक्तः कृतविभागः । रेखाकारेण विभक्तसन्निवेश इत्यर्थः । संस्कारविशेषजां कान्तिमाह — किञ्चिन्मधूच्छिष्ट-विमृष्टराग इति । मधूच्छिष्टं सिक्थकं, तेन किञ्चिद्विमृष्टो विशोधितो रागो लाक्षादिरागो यस्य स तथा । यथोक्तमधरसंस्कारप्रकरणे वात्स्यायनेन — 'सिक्थकमलक्तकं चौष्ठयोर्दद्या'दिति । तच्च जयमङ्गलाकारेण व्याख्यातम् — 'आदावोष्ठमलक्तपिण्डेनोत्पिष्य पुनश्च ताम्बूलमुपयुज्य सिक्थकगुलिकया शनैश्शनैस्ताडयेदि'ति । प्रियतमभावनाजनितमधरस्फुरणमपि तदानीं शो-भावहमासीदित्याह — आसन्नलावण्यफल इति । आसन्नं प्रत्यासन्नं लाव-ण्यस्य प्रियोपभोगलक्षणं फलं यस्य । अत्यन्तप्रत्यासन्नं हि देव्या अध-रस्य प्रियतमोपभोगलक्षणं फलमिति तादृशं स्फुरणं तदानीं शोभत एवेति भावः ॥ १८ ॥

> पत्युः शिरश्चन्द्रकलामनेन
> स्पृशेति सख्या परिहासपूर्वम् ।
> सा रञ्जयित्वा चरणौ कृताशी-
> र्माल्येन तां निर्वचनं जघान ॥ १९ ॥

(प्रकाशिका)

पत्युरिति । अस्य भोजेन व्याख्यानं कृतम् — अनेन रागेण । रञ्जयित्वेति वचनाद् रञ्जनसाधनं लाक्षादिरागो गृह्यते । चरणपरामर्शे त्वाभ्यामिति भवितव्यमिति । अभिनवगुप्तयोजना तु — अनेनेति अ-लक्तकोपरक्तस्य चन्द्रमसि परभागलाभः । अनवरतपादपतनप्रसादनै-

१. 'योप' ङ. च. छ. पाठः.

र्विना न पत्युर्झटिति यथेष्टानुवर्तिन्या भवितव्यमिति चोपदेशः। शिरोधृता च या चन्द्रकला, तामपि परिभवेति सपत्नीलोकापजय उक्तः । निर्वचनमित्यनेन लज्जावहित्थहर्षेर्ष्यासाध्वससौभाग्याभिमानप्रभृति यद्यपि ध्वन्यते, तथापि[1] तद् निर्वचनशब्दार्थस्य कुमारीजनोचितस्याप्रतिपत्तिलक्षणस्यार्थस्योपस्कार(क)तां केवलमाचरति । उपस्कृतस्त्वर्थः शृङ्गाराङ्गतामेतीति[2] । माल्येन करधृतेन लीलारविन्देनेत्यर्थः ॥ १९ ॥

(विवरणम्)

पादयोरलक्तकरसार्पणं भङ्ग्यन्तरेणाह —

पत्युरिति । चरणौ रञ्जयित्वा अनेन पत्युः शिरश्चन्द्रकलां स्पृश इति परिहासपूर्वं सख्या कृताशीः सा तां माल्येन निर्वचनं जघान । चरणौ पादौ रञ्जयित्वा अलक्तकरसेन रागयुक्तौ कृत्वा । अनेनेति समनन्तररञ्जितो वामचरणो गृह्यते । अलक्तोपरक्तस्य पादस्य श्वेतांशुकलायां परभागलाभश्च भविष्यति । पत्युर्भविष्यतः पत्युश्चन्द्रशेखरस्य शिरसि या चन्द्रकला तां स्पृश । अपराधप्रशमनार्थे पादप्रणामे सरोषं संस्पृशेत्यर्थः । इतिशब्दः पूर्वोक्तप्रकारवाची । परिहासपूर्वमित्याशीर्वादक्रियाविशेषणम् । परिहासः पूर्वं यथा भवति तथा । कृताशीः कृता विहिता आशीः आशीर्वादो यस्यै सा पार्वती तां सखीं माल्येन कुसुमेन । करधृतेन लीलाकमलेनेत्यर्थः । जघान ताडनं कृतवती । अत्र 'पत्युश्शिरश्चन्द्रकलां स्पृशे'त्यनेन पादप्रणामचाटुशतवचनादिभिर्विना न झटिति भर्तृवशवर्तिनी भवेत्युपदेशः सूचितः । शिरसि वर्तमानां चन्द्रकलां प्रत्यपि परिभवमाचर, किं पुनः सपत्नीजनं प्रतीति च ध्वन्यते । अत्र निर्वचनशब्दः कुमारीजनोचितमप्रतिपत्तिलक्षणमर्थमेव साक्षात् प्रतिपादयति । लज्जावहित्थहर्षेर्ष्यासाध्वससौभाग्याभिमानप्रभृतयस्तु ध्वन्यमाना अप्यप्रतिपत्तिलक्षणस्यार्थस्य शोभामावहन्ति ॥ १९ ॥

---

१. 'पि ति' क. पाठः. २. 'ति ।' ङ. पाठः.

तस्याः सुजातोत्पलपत्रकान्ते
प्रसाधिकाभिर्नयने समीक्ष्य[1] ।
न चक्षुषोः कान्तिविशेषबुद्ध्या
कालाञ्जनं मङ्गलमित्युपात्तम् ॥ २० ॥

(प्रकाशिका)

तस्या इति । सुजातेति सुष्ठुजातत्वेन समग्रगुणत्वं लक्ष्य[2]ते । इति-र्हेतौ मननगर्भः । एवं बुद्ध्वेत्यर्थः । उपात्तं प्रसाधनमुपयोजितम् । कान्ति-विशेषबुद्ध्या अस्मिन् निक्षिप्ते चक्षुषोः कान्तिविशेषः स्यादिति बुद्ध्या ॥

(विवरणम्)

देव्या नयनप्रसाधने विशेषमाह —

तस्या इति । प्रसाधिकाभिः तस्याः सुजातोत्पलपत्रकान्ते नयने [3]समीक्ष्य कालाञ्जनं मङ्गलम् इत्युपात्तम् । प्रसाधिकाभिः अलङ्कारकर्त्रीभिः । सुजातस्य सुष्ठु जातस्य समीचीनपङ्कजलसम्पर्कादिवशाज्जातस्य । अनेन समग्रगुणत्वं लक्ष्यते । सुन्दरस्येत्यर्थः । उत्पलस्य कुवलयस्य पत्रवद् दलवत् कान्ते मनोहरे । अतीव कृष्णे दीर्घे चेत्यर्थः । नयने नेत्रे समीक्ष्य सम्यगवलोक्य । कालाञ्जनं कृष्णवर्णमञ्जनम् । अथवा कालाञ्जनं दीपमषी । 'कालाञ्जनं दीपमषी कज्जलमि'ति भोजः । इतिशब्दो हेतौ । मननगर्भश्चायं निर्देशः । मङ्गलमिति बुद्ध्वेत्यर्थः । उपात्तं प्रसाधने उपयोजितमिति यावत् । प्रसाधिका देव्याः कुवलयदलमनोज्ञं नयनद्वयमवलोक्य मङ्गलारम्भेष्ववश्यकर्तव्यमेतदिति बुद्ध्वै[4]व तस्मिन्नञ्जनमर्पयामासुरित्यर्थः । एतदेव स्फुटयति — चक्षुषोः कान्तिविशेषबुद्ध्या न इति । अस्मिन्नर्पिते चक्षुषोः कान्तिविशेषो भविष्यतीति बुद्ध्या न, केवलया मङ्गलबुद्ध्यैवेत्यर्थः ॥ २० ॥

---

१. 'निरीक्ष्य' मुद्रितकोशपाठः. २. 'क्ष्य' ङ. पाठः. ३. 'निरीक्ष्य' क. ख. ग. घ. पाठः. ४. 'द्ध्यै' छ. पाठः.

सा सम्भवद्भिः कुसुमैर्लतेव
ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद् विहङ्गैरिव लीयमानै-
रामुच्यमानाभरणा चकाशे ॥ २१ ॥

(प्रकाशिका)

सेति । सम्भवद्भिः प्रादुर्भवद्भिः । अत्रामुच्यमानेष्वाभरणेषु प्रथमं शरीरस्यैवेदं किञ्चिदुज्ज्वलमवयवजातमुन्मिषतीति द्रष्टॄणां प्रतीतिः, ततोऽन्यत्वावगमे प्रतिबन्धापगमसमुन्मिषदनाहार्यपदार्थबुद्धिः, ततश्च सम्यग्विचारे त्वाहार्यबुद्धिरिति क्रमादुपमानत्रयेण द्योत्यते । अत्राभरणानां समास उपसर्जनीभावो न हृदयहारी । आभरणै[१]रिति तु युक्तम् ॥ २१ ॥

(विवरणम्)

इत्थमङ्गरागार्पणप्रकारमुक्त्वा हाराद्याभरणार्पणप्रकारमाह —

सेति । आमुच्यमानाभरणा सा चकाशे । आमुच्यमानानि अर्प्यमाणानि आभरणानि यस्यां तथाभूता । सा पार्वती चकाशे शोभते स्म । अत्रोपमात्रयमाह — सम्भवद्भिरित्यादिना । लता सम्भवद्भिः कुसुमैः इव । लता मालत्यादिका सम्भवद्भिः प्रादुर्भवद्भिः कुसुमैः पुष्पैरिव । अनेनोपमानेन देव्याः शरीरस्यैवैतान्युज्ज्वलतराण्यवयवान्तराणि कानिचित् कालवशात् समुन्मिषन्तीति सहृदयानां प्रतीतिर्द्योत्यते । पुनश्च विचारदशायामाभरणानामवयवेभ्यो भेदावगमे सति प्रतिबन्धापगमप्रकाश्याः केचित् सहजा एवैते पदार्था इति प्रतीतिरुत्पन्ना । तदनुसारेण द्वितीयामुपमामाह—त्रियामा उद्यद्भिः ज्योति-

---

१. 'ति यु' क. ख. ग. घ. पाठः.

भिः इव इति । त्रियामा रात्रिः उद्यद्भिः सूर्यालोकप्रतिबन्धापगमे सति प्रकाशमानैः ज्योतिर्भिः नक्षत्रादिभिरिव । ततश्च सम्यग्विचारे सति आभरणेष्वर्पणा¹मोचनयोग्यपदार्थत्वावधारणमेव सञ्जातमिति तदनुसारेण तृतीयामुपमामाह — सरित् लीयमानैः विहङ्गैः इव इति । सरिन्नदी लीयमानैः वर्षापगमादिवेलायामवतरद्भिः विहङ्गैः हंसादिभिरिव । अनेनोपमानत्रयक्रमप्रदर्शनेन देवीशरीरावयवानामाभरणानां च परस्परसङ्गमयोग्यता दर्शिता । अत्रामुच्यमानाभरणेत्याभरणानां समासे उपसर्जनीभावो न सहृदयहृदयाह्लादकारी । आमुच्यमानैराभरणैरित्येव वक्तव्यमिति केचिन्मन्यन्ते । तन्मन्दम् । उपसर्जनीभावेऽपि महाकविप्रयोगरसवशात् पृथक्प्रयोगफलसिद्धेः ॥ २१ ॥

**आत्मानमालोक्य च शोभमान-**
**मादर्शबिम्बे स्तिमितायताक्षी ।**
**हरोपयाने त्वरिता बभूव**
**स्त्रीणां प्रियालोकफलो हि वेषः ॥ २२ ॥**

(प्रकाशिका)

आत्मानमिति । अक्ष्णोः स्तिमितत्वं प्रियागमनचिन्तया । त्वरिता उत्सुका ॥ २२ ॥

(विवरणम्)

इत्थं विहितानामलङ्काराणां फलमाह —

आत्मानमिति । सा आदर्शबिम्बे शोभमानम् आत्मानम् आलोक्य हरोपयाने त्वरिता बभूव च । आदर्शबिम्बे दर्पणतले शोभमानं स्वाभाविकेन सौन्दर्येण अलङ्कारजनितया कान्त्या च दीप्यमानम् आत्मानं

---

१. 'ष्वनामो' क. पाठः. २. 'णानामो' ख. पाठः.

स्वदेहम् आलोक्य दृष्ट्वा हरस्य परमेश्वरस्य उपयाने समीपप्राप्तौ त्वरिता उत्सुका बभूव सञ्जाता च । अत्र चकारेण हरोपयानौत्सुक्यस्य शोभमानात्मस्वरूपदर्शनसमकालीनत्वं द्योत्यते । हृदयगता हरोपयानाकाङ्क्षा नयनद्वये प्रकटाभूदित्याह — स्तिमितायताक्षीति । स्तिमिते प्रियागमनचिन्तया निश्चले । सावधानध्याने हि निश्चलं नयनं भवति । यथोक्तं रघुवंशे — 'ध्यानास्तिमितलोचन' (स०. १. श्लो. ७३) इति । आयते स्वत एवायते दीर्घे च अक्षिणी यस्याः । आयते सन्तोषवशात् प्रसारिते इति माधवः । उक्तमर्थमर्थान्तरन्यासेन समर्थयते — स्त्रीणां वेषः प्रियालोकफलः हि इति । स्त्रीणां वेषः अलङ्कारः । प्रियालोकफलः प्रियस्यालोक एव फलं यस्य स तथा । हिशब्दः प्रसिद्धौ । प्रियकर्तृकमवलोकनमेव हि स्त्रीणामलङ्कारस्य फलम् ॥ २२ ॥

**अथाङ्गुलिभ्यां हरितालमार्द्रं**
**मङ्गल्यमादाय मनःशिलां च ।**
**कर्णावसक्तामलदन्तपत्रं**
**माता तदीयं मुखमुन्नमय्य ॥ २३ ॥**

(प्रकाशिका)

अथेति । तस्या मुखं माता कर्णावसक्तामलदन्तपत्रं कृत्वा दक्षिणहस्ताङ्गुलिभ्यां हरितालकल्कं मनःशिलाकल्कं चादाय वामहस्तेन चिबुके गृही*त्वोन्नामितवतीत्यर्थः ॥ २३ ॥

अथ देवीमात्रा मेनयैवावश्यकर्तव्यं मङ्गलालङ्कारविशेषं वर्णयति त्रिभिः श्लोकैः । तत्रानन्तरश्लोके वक्ष्यमाणस्य विवाहदीक्षातिलकविधानस्याङ्गभूतं मुखोन्नयनमाह—

अथेति । अथ माता तदीयं मुखं कर्णावसक्तामलदन्तपत्रं मङ्गल्यम्

१. 'नं ध्या' क. पाठः. २. 'मा', ३. 'न्नमय्य ॥' मुद्रितकोशपाठः.

* उन्नमितेति न्याय्यम् ।

आर्द्रं हरितालं मनःशिलां च अङ्गुलिभ्यामादाय उन्निनाय । अथ प्रसाधिका-कर्तृकप्रसाधनानन्तरं माता मेना तदीयं देवीसम्बन्धि मुखं कर्णयो-रवसक्ते स्थिते अमले निर्मले दन्तपत्रे गजदन्तनिर्मितकर्णावतंसविशेषौ यस्य तथाविधम् । कृत्वेति शेषः । पुनश्च मङ्गल्यं मङ्गलप्रयोजनम् आर्द्रं जलसम्ब-न्धादार्द्रतां प्राप्तं हरितालं हरितालकल्कं मनःशिलां मनःशिलाकल्कं च अङ्गुलिभ्यामादाय[2] गृहीत्वा उन्निनाय चिबुके गृहीत्वोन्नामितवती । हरितालम-नश्शिलाभ्यां तिलकं विधातुमिति शेषः । प्रसाधिकाजनकर्तव्यप्रसाधनसमाप्त्यन-न्तरं मेना स्वयमेव देव्या वदनमादौ कर्णावसक्तामलदन्तपत्रं[3] कृत्वा दक्षिणह-स्ताङ्गुलिभ्यामार्द्रं[4] हरितालं मनश्शिलां चादाय चिबुके गृहीत्वा तिलकविधा-नार्थं मुखमुन्नमय्य मुखदर्शनकुतूहलात् किञ्चित्कालं तूष्णीमेव स्थितवतीत्यर्थः । अत एवोन्नयनमात्रे वाक्यसमाप्तिः, न पुनरुन्नीय तिलकं चकारेत्यत्र ॥ २३ ॥

**उमास्तनोद्भेदमनु प्रवृद्धो**
**मनोरथो यः प्रथमं बभूव ।**
**तमेव मेना दुहितुः कथञ्चिद्**
**विवाहदीक्षातिलकं चकार ॥ २४ ॥**

(प्रकाशिका)

किमर्थमुन्नामनमित्याह —

**उमेति । अनुर्लक्षणे । उमास्तनोद्भेदकालादारभ्येत्यर्थः । मनोरथो मनोरथविषयः । एवशब्देन इत्थं करिष्यामीति यत्प्रकारविशिष्टोऽभिल-षितः, तत्प्रकारमेव तिलकं कृतवतीति द्योत्यते । कथञ्चिदिति दुश्चरत-पश्चर्यादिकृच्छ्रमनुसन्धत्ते । 'अथ च प्रहर्षपरवशत्वात् कथञ्चित् । वि[5]वाह-दीक्षातिलकं दुहितुः कदा करिष्यामीति यो भर्तृवाल्लभ्यादिभ्यः प्रथमं मनोरथभूमिस्तिलक आसीत्, तमेव मेना कथञ्चिच्चकारेत्यर्थः । अत्र**

---

१. २. 'ली' च. पाठः. ३. 'तत्रं विधाय द' च. पाठः. ४. 'ली' च. पाठः. ५. 'भ्राम्य' क. ख. पाठः.

तथाविधस्य मुखोन्नयनस्य तिलककरणाङ्गत्वेऽप्यनयोः पद्ययोरेकवाक्यत्वं न कृतं मुखमुन्नीय तिलकं चकारेति । तच्च तन्मुखावलोकनकुतूहलिन्यास्तस्यास्तदुन्नयन एवेक्षणं विश्राम्यतीति द्योतयितुम् । यः प्रथमम् उमास्तनोद्भेदमनु प्रवृद्धो मनोरथो बभूव, मेना दुहितुस्तमेव विवाहदीक्षातिलकं कथञ्चिच्चकारेत्यन्वयः ॥ २४ ॥

(विवरणम्)

अथ मुखोन्नयनस्य प्रधानकार्यभूतं तिलकविधानमाह—

उमेति । यः प्रथमः उमास्तनोद्भेदम् अनु प्रवृद्धः मनोरथः बभूव, मेना दुहितुः तमेव विवाहदीक्षातिलकं कथञ्चिच्चकार । यः विवाहदीक्षातिलकः प्रथमः आदिमः । भर्तृवल्लभत्वगर्भधारणपुत्रजन्मादीनामपि मनोरथविषयत्वात् तद्व्यावृत्त्यर्थं प्रथमशब्दोपादानम् । उमायाः पार्वत्याः स्तनयोः कुचयोः उद्भेदमुद्गमनम् । अनुर्लक्षणे । प्रवृद्धः प्रकर्षेण सम्पूर्णः । उमास्तनोद्भेदं लक्षीकृत्य प्रवृद्धः, उमास्तनोद्भेदकालादारभ्य क्रमेण प्रवृद्ध इति यावत् । मनोरथः मनोरथविषयो बभूव । दुहितुः आत्मनः पुत्र्याः । तं विवाहदीक्षातिलकमेव । विवाहदीक्षा विवाहोपनयनं तदर्थस्तिलको विवाहदीक्षातिलकः, तम् । कथञ्चित् प्रहर्षपरवशत्वेन हस्तनेत्राणां सम्यक्प्रवृत्त्यभावेऽपि यथाकथञ्चिच्चकारेत्यर्थः । तिष्ठन्तु तावद् भर्तृवल्लभत्वादयः । मम पुत्र्या विवाहदीक्षातिलकमेवाहं कदात्र करिष्यामीति यो विवाहदीक्षातिलकः प्रथमो मनोरथविषयो बभूव, तमेव विवाहदीक्षातिलकं मेना कथञ्चिच्चकारेत्यर्थः । अथवा अहं कदा नु दुहितरमनुरूपाय वराय दातुं विवाहदीक्षातिलकं करिष्यामीति यत्प्रकारविशिष्टो मनोरथः प्रथममासीत्, पुत्र्या विहितं दुश्चरतपश्चर्या-

१. 'तुम् ॥ क्षी' घ. ङ. पाठः. २. 'दा क' ङ. च. छ. पाठः.

दिक्कृच्छ्रमनुभूयापि मेना तत्प्रकारविशिष्टमेव विवाहदीक्षातिलकं कथञ्चिच्चकारेत्यर्थः ॥ २४ ॥

*बबन्ध चास्राकुलदृष्टिरस्याः
स्थानान्तरे कल्पितसन्निवेशम् ।
धात्र्यङ्गुलीभिः प्रतिसार्यमाण-
मूर्णामयं कौतुकहस्तसूत्रम् ॥ २५ ॥

(विवरणम्)

कौतुकबन्धनमाह —

बबन्धेति[2] । सा अस्या ऊर्णामयं कौतुकहस्तसूत्रं बबन्ध च । ऊर्णामयम् ऊर्णातन्तुनिर्मितं विवाह[3]मङ्गलार्थं बन्धनीयं कौतुकाभिधानं हस्तसूत्रम् । बबन्ध च । चकारस्तिलकविधानसमुच्चयार्थः । कौतुकबन्धने स्नेहपारवश्यं दर्शयति — अस्राकुलदृष्टिरिति । अस्रेणानन्दाश्रुणा 'आकुले परवशे दृष्टी नेत्रे यस्याः सा तथा । अत एव स्थानान्तरे कल्पितसन्निवेशम् । स्थानान्तरे विहितस्थानादन्यत्र कल्पितः कृतः सन्निवेशः अवस्थानं यस्य तत् । अत एव धात्र्या अङ्गुलीभिः प्रतिसार्यमाणम् । धात्र्या उपमात्रा अङ्गुलीभिः प्रतिसार्यमाणं बन्धनोचितस्थानमेव नीयमानम् । हर्षपरवशत्वाद् आनन्दाश्रुभिराकुलदृष्टित्वाच्च मेनया स्थानान्तरे बन्धुमारब्धं कौतुकमुपमाता स्वस्थान एव तया बन्धयामासेत्यर्थः ॥ २५ ॥

क्षीरोदवेलेव सफेनपुञ्जा
पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना ॥ २६ ॥

---

१. 'त्र्य' मुद्रितकोशपाठः. २ 'ति । अ' च. छ. पाठः. ३. 'हे' ङ. च. छ. पाठः. ४. ५. 'आ' ङ. च. छ. पाठः.

---

* प्रकाशिकाग्रन्थेष्वस्य श्लोकस्य व्याख्या नोपलभ्यते ।

(प्रकाशिका)

क्षीरोदेति । वेला समुद्रजलविकृतिः । पर्याप्तः पूर्णः । भूयो बहुतरम् । अत्र शुक्लाङ्गरागायास्तस्या नवक्षौमनिवसनत्वं सर्वश्वेतत्व-प्रतीत्यर्थम् । ततश्च सर्वश्वेताभ्यामुपमितिः । इत्थमियत्पर्यन्तमत्र प्रबन्धे भक्तिपरवशेन कविना प्रथमं यौवनोद्भेदविशिष्टत्वेन, तदनन्तरं वसन्तपु-ष्पाभरणशोभित्वेन, पश्चाद् विवाहनेपथ्यशालित्वेन च परदेवतास्वरूपमु-पवर्णयता श्रोतृजनानुग्रहः कृत इत्यवसेयम् ॥ २६ ॥

(विवरणम्)

दुकूलपरिधानं दर्पणोद्धरणं च भङ्ग्यन्तरेणाह —

क्षीरोदेति । नवक्षौमनिवासिनी नवं दर्पणम् आदधाना सा सफेन-पुञ्जा क्षीरोदवेला इव पर्याप्तचन्द्रा शरत्त्रियामा इव भूयः बभौ । नवम् अभिनवं क्षौमं धवलतरं दुकूलविशेषं (नि)वसितुं परिधातुं शीलमस्या इति तथा । नवं वि-वाहसमये ग्रहणार्थं तदानीमेव निर्मितं दर्पणम् आदधाना करे गृह्णती । फेनानां ज-लविकाराणां पुञ्जेन समूहेन सहिता । क्षीरोदस्य क्षीरसमुद्रस्य । संज्ञायामुद-कस्योदादेशः । वेला समुद्रजलविकृतिः सेव । पर्याप्तः पूर्णः चन्द्रो यस्यां सा शरत्कालरात्रिरिव च । भूयः सुतरां बभौ शुशुभे । शुक्लाङ्गरागत्वेन शुक्ला-म्बरत्वेन च सर्वश्वेता दर्पणं दधाना च सती देवी सफेनपुञ्जा क्षीरोदवेलेव पूर्णचन्द्रसहिता शरत्कालरात्रिरिव च बभावित्यर्थः । अत्र नवक्षौमनिवासिनी-ति विशेषणं देव्याः सर्वश्वेतत्वप्रतीत्यर्थमेव । अत एव सर्वश्वेताभ्यामुभाभ्यामु-पमितिः । फेनपुञ्जपूर्णचन्द्रयोस्तु दर्पणप्रतिवस्तुत्वेनोपादानम् । अत्रापि म-हाकविः पूर्ववत् परदेवतायाः स्वरूपवर्णनं कृतवानित्यवसेयम् ॥ २६ ॥

---

१. 'प व' क. पाठः. २. 'वं क्षौ' क. ख. ग. घ. ङ. च. पाठः. ३. 'ती स' ङ. च. पाठः. ४. 'सा स' क. पाठः. ५. 'सा' क पाठः.

**तामर्चिताभ्यः कुलदेवताभ्यः**
**कुलप्रतिष्ठां प्रणमय्य माता ।**
**अकारयत् कारयितव्यदक्षा**
**क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥**

(प्रकाशिका)

**तामिति** । कुलदेवताभ्यः राजकुलप्रतिष्ठाभ्यो लक्ष्मीवागादिभ्यः । कुलस्य प्रतिष्ठां संरक्षणीमित्यर्थः । प्रणमय्य 'ल्यपि लघुपूर्वाद्'(६.४.५६) इति णेरयादेशः । क्रमेण यथाप्रधानं यथावयश्च यथाभिजनं च ॥ २७ ॥

(विवरणम्)

इत्थं कृतनेपथ्याया देव्याः कुलदेवतावन्दनं पतिव्रतापादाभिवन्दनं चाह —

तामिति । माता ताम् अर्चिताभ्यः कुलदेवताभ्यः प्रणमय्य सतीनां पादग्रहणं क्रमेण अकारयत् । अर्चिताभ्यः विवाहोत्सवानुगुणया महत्या सपर्यया पूर्वं पूजिताभ्यः कुलक्रमार्चिताभ्यो देवताभ्यः । सकलविपत्प्रशमनार्थं स्वकुलपारम्पर्येणार्चिताभ्यो लक्ष्मीदुर्गाभद्रकालीप्रभृतिभ्य इत्यर्थः । प्रणमय्य प्रणामं कारयित्वा । 'ल्यपि लघुपूर्वाद्' इति णेरयादेशः । सतीनां पतिव्रतानां पादग्रहणमभिवादनम् । 'समे तु पादग्रहणमभिवादनमित्युभे' इत्यमरः । क्रमेण आभिजात्यवयःप्रभृतिक्रमेण अकारयत् कारयामास । तां माता कुलक्रमार्चिताभ्यो देवताभ्यः नमस्कारं कारयित्वा पश्चाद् विवाहदर्शनकुतूहलादागतानां बन्धुभूतानां पतिव्रतानामभिवादनं चाभिजात्यवयःप्रभृतिक्रमेण कारयामासेत्यर्थः । मातुस्तस्यां तथाविधे प्रयासे हेतुमाह — कुलप्रतिष्ठामिति । कुलस्य प्रतिष्ठां स्थितिकरीम् । संरक्षणीमित्यर्थः । मेनायास्तादृशे कर्मणि कौशलमाह — कारयितव्यदक्षेति । कारयितव्ये कारयितुमुचिते कर्मणि दक्षा कुशला नह्यन्येन जनेन तत्कालोचितं कर्म कारयितुं सर्वेषां कुशलता सम्भवतीति भावः ॥ २७ ॥

अखण्डितं प्रेम लभस्व पत्यु-
रित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीरलाभात्
पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥ २८ ॥

(प्रकाशिका)

अथ तासां प्रत्यभिवादनमाह—

अखण्डितमिति । अखण्डितमन्ययानुपात्तांशमित्यर्थः । नम्रा प्रणामसमये इत्यर्थः । तुशब्दो देव्या महाभाग्यादिगुणसम्पदो विशेषोऽयमिति द्योतयति । पश्चात्कृता अधरीकृताः । प्रेमलाभाच्छरीरलाभस्य दुर्लभत्वात् । अपिशब्देन तदाशिषामेवातिभूम्यवगाहित्वं द्योत्यते ॥ २८ ॥

(विवरणम्)

तया गृहीतपादानां[२] च तासां प्रत्यभिवादनप्रकारमाह—

अखण्डितमिति । नम्रा उमा ताभिः पत्युः अखण्डितं प्रेम लभस्व इति उच्यते स्म । नम्रा पादानता साधुकारिणी । ताभिः पतिव्रताभिः पत्युः भर्तृभूतस्य हरस्य अखण्डितं सपत्नीभूतयान्ययानुपात्तांशं प्रेम स्नेहं लभस्व प्राप्नुहि इत्युच्यते स्म उक्ताभूत् । पतिव्रतानां पादानता देवी ताभिः पत्युः परं प्रेमास्पदं भवेत्याशीर्वादेनाभिनन्दिताभूदिति भावः । इत्थं कृताशिषो देव्या महाभाग्यादिगुणयोगाद् विशेषमाह—तया तु तस्य अर्धशरीरलाभात् स्निग्धजनाशिषः अपि पश्चात्कृताः इति । तया उमया । तुशब्दो महाभाग्यवत्त्वादिगुणविशिष्टाया देव्या विशेषं द्योतयति । तस्य पत्युः अर्धशरीरलाभात् । शरीरस्यार्धमर्धशरीरम् । 'अर्धं नपुंसकम्' (२. २. २) इति समा-

---

१. 'भाजा प' मुद्रितकोशपाठः, २. 'नां ता' ख. ङ. पाठः.

सः। तस्य लाभाद्धेतोः। समविभक्तांशस्य भर्तृशरीरस्य लाभादित्यर्थः। स्निग्धानां जनानामाशिषः आशीर्वादा अपि। अपिशब्देन सतीनां स्निग्धानां च तासामाशीर्वादानामत्युत्कर्षात् पश्चात्करणानुपपत्तिरुक्ता। पश्चात्कृता अधःकृताः। आभिरूप्यवैदग्ध्यसौशील्यसौभाग्यादिगुणविशिष्टया देव्या तु सतीनां स्निग्धानां च तासां भर्तृप्रेमलाभमात्रपरा आशिषो भर्तुः शरीरार्धस्यैव स्वीकारादधःकृता इति भावः॥ २८॥

इच्छाविभूत्योरनुरूपमद्रि-
स्तस्याः कृती कृत्यमशेषयित्वा।
सभ्यः सभायां सुहृदास्थितायां
तस्थौ[1] वृषाङ्कागमनं प्रतीक्ष्य॥ २९॥

(प्रकाशिका)

**इच्छेति। कृत्यमुक्तप्रकारं कौतुकबन्धादि। अशेषयित्वा समाप्य। सभ्यः सभागतसुहृद्विषयसमुदाचारा[2]दिनिपुण इत्यर्थः[3]। प्रतीक्ष्य प्रतीक्षमाण इत्यर्थः। वृषाङ्कशब्देन[4] वृषो धर्मः सोऽस्य चिह्नमिति धर्माधिष्ठातृत्वेन विश्वाधारत्वं विश्वस्पृहणीयत्वं च देवस्य द्योत्यते॥ २९॥**

(विवरणम्)

विवाहोत्सवे हिमवता कर्तव्यं कारयितव्यं चार्थजातमुपसंहरति —

इच्छेति। अद्रिः इच्छाविभूत्योः अनुरूपं तस्याः कृत्यम् अशेषयित्वा सुहृदास्थितायां सभायां वृषाङ्कागमनं प्रतीक्ष्य तस्थौ[5]। इच्छा पुत्रीविषयोऽभिलाषः कर्तव्यविषयो वा, विभूतिरैश्वर्यं, तयोः। अनुरूपं सदृशं तस्याः

---

१. 'नप्रतीक्षः' मुद्रितकोशपाठः. २. 'रनि' ङ. पाठः. ३. 'र्थः। वृ' क. ख. ग. घ. पाठः. ४. 'न यो वृ' क. ख. ग. घ. पाठः. ५. 'स्थौ इति। इ' क. पाठः.

कृत्यं पार्वतीसम्बद्धं कौतुकबन्धनादिरूपं कर्तव्यजातम् अशेषयित्वा निश्शेषं कृत्वा कारयित्वा च । समाप्येत्यर्थः । सुहृद्भिः बन्धुभिरास्थितायामधिष्ठितायाम् । बन्धुजनपरिपूर्णायां सभायामित्यर्थः । वृषाङ्कस्य वृषकेतनस्य हरस्यागमनं प्रतीक्ष्य प्रतिपाल्य तस्थौ । वृषाङ्कशब्देनात्र 'साक्षाद्धर्मो वपुष्मान्' इत्यादिषु हरवृषस्य धर्मरूपत्वप्रसिद्धेर्भगवतो धर्माधिष्ठातृत्वेन सर्वलोकाधारत्वं सर्वलोकस्पृहणीयत्वं च दर्शितम् । तेन च तत्सम्बन्धस्य पुरुपुण्यलभ्यत्वेन हिमवतः सभासम्भाव्यत्वं सूचितम् । कृत्यमशेषयित्वेत्यनेन सभायां स्वैरालापयोग्यता दर्शिता । अत एवाह — कृतीति । कृतकृत्य इत्यर्थः । कुशल इति वा । हिमवतः सभागतसुहृद्विषयसमुदाचारनिपुणत्वमाह — सभ्य इति । सभायां साधुः । सज्जनसम्भाषणकुशल इत्यर्थः ॥२९॥

**तावद् भवस्यापि कुबेरशैले**
**तत्पूर्वपाणिग्रहणानुरूपम् ।**
**प्रसाधनं मातृभिरादृताभि-**
**र्न्यस्तं पुरस्तात् पुरशासनस्य ॥ ३० ॥**

(प्रकाशिका)

अथावसरे नायकवृत्तान्तं प्रस्तौति —

**तावदिति** । यावता देव्याः कृत्यजातं सख्यादिभिरारभ्यते, तावता कालेनेत्यर्थः । भवस्यापि, न केवलमुमायाः । कुबेरशैले कैलासे[2] । तत्पूर्वेति प्रथमविवाहे प्रसाधनस्य सविशेषत्वं द्योतयति[3] । प्रसाधनं वस्त्राभरणादि । मातृभिरादृताभिरिति । बन्धुस्त्रियो हि वरमण्डने कौतुकिन्यो भवन्ति । पुरस्तान्न्यस्तं प्रसाधनाय पुरो निहितम् । पुरशासन-

---

१. 'मा' छ. पाठः. २. 'से । तत्पूर्वपाणिग्रहणानुरूपं त' क. ख. ग. घ. पाठः.
३. 'त्यते । प्र' घ. ङ. पाठः.

स्येत्यनेन चतुर्दशभुवनैकवीरस्य देवस्य शृङ्गाराङ्गभूतः प्रसाधनविधिः शोभावह इति द्योत्यते ॥ ३० ॥

(विवरणम्)

इत्थं नायिकावृत्तान्तमुपसंहृत्य नायकवृत्तान्तं प्रस्तौति तावदित्यादिना —

तावदिति । तावत् कुबेरशैले मातृभिः भवस्यापि प्रसाधनं पुरस्ताद् न्यस्तम् । तावद् यावत् पार्वत्याः प्रसाधनं प्रसाधिकाजनैरारब्धं, तावदेवेत्यर्थः । कुबेरस्य शैले कैलास इत्यर्थः । हरस्य स्वाधिष्ठानभूते शैले ममताभावात् कुबेरशैल इत्युक्तं, न तु गिरीशशैल इति । मातृभिः

"ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ॥"

इत्यादिषु प्रसिद्धाभिः । भवस्य हरस्य । अपिशब्दस्य न केवलमुमाया इत्यर्थः । प्रसाधयत्यलङ्करोति अनेनेति प्रसाधनमलङ्कारः। करणे ल्युट् । वसनाभरणादिकमित्यर्थः । पुरस्तात् पुरोभागे न्यस्तं निहितमासीत् । भगवतः प्रसाधनार्थमिति शेषः । प्रसाधनस्य सविशेषत्वमाह — तत्पूर्वपाणिग्रहणानुरूपमिति । तदेव पूर्वं यस्य तत् तत्पूर्वं, तादृशे पाणिग्रहणे अनुरूपम् उचितम्। प्रथमविवाहोचितमित्यर्थः । ननु स्वेच्छामात्रनिर्मितचतुर्दशभुवनस्य निजाभरणमात्रनिर्माणे कः प्रयास इति किं मातॄणां प्रसाधनार्पणप्रयासेन, अत आह — आदृताभिरिति । बन्धुभूता हि नार्यो वरमण्डने विशेषेण कौतुकिन्यो भवन्तीति तासामादरातिशय एव तत्र हेतुरिति भावः । चतुर्दशभुवनैकवीरस्य भगवतः शृङ्गाराङ्गभूतः प्रसाधनविधिरपि शुशुभेतरामित्याह — पुरशासनस्येति । पुरत्रयं शास्तीति पुरशासनः त्रिपुरहरस्येत्यर्थः ॥ ३० ॥

---

१. 'स्य शृ' क. ख. ग. पाठः. २. 'त्वा' ख. ङ. पाठः.

तद्गौरवान्मङ्गलमण्डनश्रीः
सा पस्पृशे केवलमीश्वरेण ।
स्वभाववेषः परिणेतुरिष्टं
भावान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥

(प्रकाशिका)

तदिति । तद्गौरवान्मातृषु बहुमानात् । श्रीशब्देन श्रीमल्लक्ष्यते । तस्यैव स्पर्शयोग्यत्वात् । केवलं पस्पृशे न तूपात्ता । तत् कथं वरवेष इत्याह— स्वभाववेष इति । स्वाभाविकं भस्मकपालाद्याकल्पजातम् । परिणेतुर्वरस्य । इष्टमपेक्षितम् । भावान्तरमन्यथाभवनम् । विभोरिति हेतुः ॥ ३१ ॥

(विवरणम्)

भगवतः प्रसाधने विशेषमाह—

तदिति । सा मङ्गलमण्डनश्रीः ईश्वरेण तद्गौरवात् केवलं पस्पृशे । सा मातृभिः अग्रे निहिता । मङ्गलार्थं मण्डनश्रीः । श्रीः शोभा । तस्याश्च स्पर्शयोग्यत्वाभावाद् अत्र श्रीमल्लक्ष्यते । श्रीमन्मण्डनमित्यर्थः । ईश्वरेण मातृषु गौरवाद् बहुमानात्केवलं पस्पृशे स्पृष्टाभूत् । न तूपात्तापीत्यर्थः । ननु कथं तर्हि विवाहोचितमण्डनोपपत्तिरत आह— विभोः तस्य स्वभाववेषः परिणेतुः इष्टं भावान्तरं प्रपेदे इति । विभोः प्रभोः । अनेनाभरणानामिच्छामात्रेणान्यथात्वप्राप्तौ[2] हेतुरुक्तः । स्वभावसिद्धो वेषः स्वाभाविकमलङ्कारजातम् । भस्मकपालादिकमित्यर्थः । परिणेतुर्वरस्य विवाहोद्युक्तस्येत्यर्थः । इष्टमपेक्षितं भावान्तरमन्यथाभावं प्रपेदे प्राप्तोऽभूत् । भगवतो भस्मकपालादिकं स्वाभाविकमलङ्कारसाधनमेव सिताङ्गरागशिरोलङ्कार[3]कुसुमादिस्वरूपतां प्राप्तमिति भावः ॥

---

१. 'स एव वे' मुद्रितकोशपाठः. २. 'थाप्रा' क. पाठः. ३. 'रादि' छ. पाठः.

बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्कः
सिंहाजिनस्यैव दुकूलभावः ॥ ३२ ॥

(प्रकाशिका)

एतदेव प्रपञ्चयति —

बभूवेति । उपान्तभागेषु पर्यन्तप्रदेशेषु । रोचनाङ्कः रोचनालिखितहंसादिलक्षणः । उक्तश्च 'हंसचिह्नदुकूलवान्'(रघु. स. १७. श्लो. २५) इति । केचित् तु विशेषणसम्बन्धयोग्यतार्थं सिंहाजिनं चैवेति पाठमादृत्य भावशब्दः पदार्थवाचीति व्याचक्षते ॥ ३२ ॥

(विवरणम्)

तदेव प्रपञ्चयति बभूवेत्यादिना —

बभूवेति । भस्म एव सिताङ्गरागः बभूव । भगवता शरीरे विलिप्तं भस्मैव सितो धवलोऽङ्गरागोऽभूत् । भस्मैव चन्दनाद्यङ्गरागत्वं प्राप्तमित्यर्थः । तथा कपालमेव अमलशेखरश्रीः बभूव । कपालं ब्रह्मशिरःकपालजालम् । अमलो निर्मलः शेखरः शिरोलङ्कारः, तस्य श्रीः । श्रीमाञ्छेखर इत्यर्थः । ब्रह्मशिरःकपालमेव निर्मलं शोभमानं च शिरोलङ्कारसाधनमभूदित्यर्थः । सिंहाजिनस्यैव दुकूलभावः च बभूव । सिंहस्याजिनं सिंहाजिनम् । अजिनं चर्म तस्यैव दुकूलभावः दुकूलत्वम् । सिंहाजिनस्य दुकूलत्वं चासीदित्यर्थः । चकारः पूर्वोक्तालङ्कारपरिणामसमुच्चयार्थः । दुकूलस्य मङ्गलालङ्कारयोग्यत्वं द्योतयितुं दुकूलभावं विशिनष्टि — उपान्तभागेषु रोचनाङ्कः इति ।

---

१. 'गजाजि' मुद्रितकोशपाठः. २. 'गो बभूवेत्यर्थः । भ' च. छ. पाठः. ३. 'नाङ्ग' क. ख. ग. घ. पाठः.

उपान्तभागेषु पर्यन्तप्रदेशेषु रोचनैवाङ्कश्चिह्नं यस्य स तथा। गोरोचनादिलिखितहंसादिलक्षण इत्यर्थः । तादृशमेव हि दुकूलं मङ्गलक्रियायामुचितं, विशेषतश्च विवाहे । यथोक्तमतिथेरभिषेकानन्तरं रघुवंशे —

"आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् ।
आसीदतिशयप्रेक्ष्यः स राजश्रीवधूवरः ॥"

इति । तत्र हंसचिह्नदुकूलस्य राजश्रीपरिणयनकालीनत्वमुक्तम् । अत्र केचिद् दुकूलस्यैव रोचनाङ्कत्वं, न तु दुकूलभावस्येति विशेषणविशेष्ययोः परस्परसम्बन्धार्थं सिंहाजिनं चैव दुकूलभाव इति पठन्ति । तन्मते भावशब्दः पदार्थवाची दुकूलपदार्थ इत्यर्थः । वयं तु लक्षणया सम्बन्धं ब्रूमः ॥ ३२ ॥

**शङ्खान्तरद्योति विलोचनं य-**
**दन्तर्निविष्टानलपिङ्गतारम् ।**
**सान्निध्यपक्षे हरितालमय्या-**
**स्तदेव जातं तिलकक्रियायाः ॥ ३३ ॥**

(प्रकाशिका)

**शङ्खेति** । 'शङ्खो निधौ ललाटास्थ्नी'ति सिंहः । 'शङ्खस्तु ललाटास्थिगमर्मणोरि'ति केशवः । सान्निध्यपक्षे सान्निध्यकृत्ये । 'पक्षः पार्श्वगरुत्साध्ये'ति यादवः ॥ ३३ ॥

(विवरणम्)

अपि च भगवतो ललाटलोचनमेव हरितालतिलकमासीदित्याह—

**शङ्खेति** । शङ्खान्तरद्योति विलोचनं यत् तद् एव हरितालमय्याः तिलकक्रियायाः सान्निध्यपक्षे जातम् । शङ्खो ललाटास्थि । 'शङ्खो निधौ ललाटा-

१. 'म' मुद्रितकोशपाठः.

स्थी'त्यमरः। तस्यान्तरे मध्ये द्योतितुं शीलमस्येति तथा। तादृशं यद् विलो-चनं नेत्रं तदेव। हरितालो धातुविशेषः, तन्मय्याः तिलकक्रियायाः। क्रियाशब्दो द्रव्यपरः। कृतस्य तिलकस्येत्यर्थः। सान्निध्यस्य सन्निधानस्य पक्षे साध्ये 'पक्षः सहाये मासार्धे साध्यपार्श्वगरुत्सु चे'ति भोजः। हरितालतिलकेन यत् साध्यं शोभोपादनं[1] तत्र ललाटलोचनमेव जातमित्यर्थः। हरितालतिलकसाम्यप्रतिपादकं[2] विलोचनविशेषणमाह— अन्तर्निविष्टानलपिङ्गतारमिति। अन्तर्भागे निविष्टेनानलेन पिङ्गा रक्तवर्णा तारा कनीनिका यस्य तत् तथोक्तम्। हरितालतिलकं हि रक्तवर्णं भवति॥ ३३॥

**यथाप्रदेशं भुजगेश्वराणां**
**करिष्यतामाभरणान्तरत्वम्।**
**शरीरमात्रं विकृतिं प्रपेदे**
**तथैव तस्थुः फणरत्नशोभाः॥ ३४॥**

(प्रकाशिका)

**यथेति। यथाशब्दो वीप्सायाम्। स्वे स्वे प्रदेश इत्यर्थः। आभरणान्तरत्वं हारादित्वम्। विकृतिमन्यथात्वम्॥ ३४॥**

(विवरणम्)

भुजगानामेव हारकाञ्चीकटकादिभावप्राप्तिं भङ्ग्यन्तरेणाह—

यथेति। यथाप्रदेशम् आभरणान्तरत्वं करिष्यतां भुजगेश्वराणां शरीरमात्रं विकृतिं प्रपेदे। यथाशब्दो वीप्सार्थः। प्रदेशो हाराङ्गदादिस्थानम्। स्वेषु स्वेषु प्रदेशेष्वित्यर्थः। आभरणान्तरत्वं तत्तत्स्थानोचितहाराद्याभरणत्वं करिष्यतां कर्तुमारब्धानाम्। भुजगेश्वरा वासुकिप्रभृतयः तेषाम्। शरीरमात्रं केवलं शरीरमेव। विकृतिं विकारं हारादिभावं प्रपेदे प्राप्तमभूत्। हारस्थाने हारत्वम्, अङ्गदस्थाने अङ्गदत्वं, काञ्चीस्थाने काञ्चीत्वं च

१. 'भोपादान' छ. पाठः. २. 'क लो' छ. पाठः.

भगवता विधातुमारब्धानां वासुकिप्रभृतीनां शरीरमात्रस्यैव तदानीमन्यथाभावो नेतव्योऽभूदित्यर्थः । मात्रशब्दव्यावर्त्यमर्थान्तरमाह — फणरत्नशोभाः तथा एव तस्थुः इति । फणे यानि रत्नानि तेषां शोभाः तथैव पूर्ववदेव तस्थुः स्थितिं चक्रुः । आभरणानां रत्नालङ्कृतत्वस्य शोभावहत्वाद् रत्नानामन्यथात्वप्राप्तौ भगवता न यत्नः कर्तव्योऽभूदित्यर्थः ॥ ३४ ॥

दिवापि निष्ठ्यूतमरीचिभाजा
बाल्यादनाविष्कृतलक्षणेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौले-
श्चूडामणेः किं ग्रहणं हरस्य ॥ ३५ ॥

(प्रकाशिका)

दिवेति । दिवा मरीचिमत्त्वं परमेश्वरपरिग्रहात् । बाल्यात् कलामात्रत्वात् । ग्रहणं वचनम् । सविशेषमुज्ज्वलेनाकलङ्केन चन्द्रेण नित्यसम्बद्धे देवस्य मौलौ चूडामणिरित्थमासीदिति न वक्तव्यमेवेत्यर्थः ॥ ३५ ॥

( विवरणम् )

चूडामणिस्थाने निहितस्य चन्द्रस्य तु स्वरूपमात्रेऽपि न विकारो नेतव्योऽभूदित्याह —

दिवेति । नित्यं चन्द्रेण प्रतिभिन्नमौलेः हरस्य चूडामणेः ग्रहणं किम् । नित्यं सर्वदा । चन्द्रेण आह्लादकरेणेत्यर्थः । प्रतिभिन्नो रञ्जितो मौलिर्यस्य तस्य हरस्य परमेश्वरस्य चूडामणेः शिरोलङ्कारस्य ग्रहणं वचनम् । ग्रहणशब्दस्य वचनार्थत्वं प्रसिद्धं 'वैकुण्ठनामग्रहणमशेषाघहरं विदुः' (श्रीभा. स्क. ६. अ. २. श्लो. १४) इत्यादौ । किं किमर्थम् । निष्प्रयोजनमित्यर्थः ।

---

१. 'ति भावः ॥' ङ. छ. पाठः. २. 'सा', ३. 'लाञ्छनेन' मुद्रितकोशपाठः. ४. 'हत्वात्' ङ. पाठः.

चन्द्रमसि मूर्धनि वर्तमाने सति हरस्य चन्द्र एवं रत्नचूडामणिरासीदिति वचनं निरर्थकमित्यर्थः । अस्य चूडामणेरितरचूडामणिभ्यो व्यतिरेकमाह — दिवा अपि निष्ठ्यूतमरीचिभाजा इति । दिवापि अह्न्यपि । निष्ठ्यूतान् निक्षिप्यमाणान् सर्वतः प्रसार्यमाणान् मरीचीन् रश्मीन् भजत इति तथा । रत्ननिर्मिता हि चूडामणयो न दिवसेषु किरणमुद्वमन्ति । हरचूडामणिश्चन्द्रस्तु हरपरिगृहीतत्वान्न दिवाकरकरैरभिभूयते' इति युक्तमस्य मरीचीनां सन्ततप्रवृत्तत्वमिति भावः । निर्दोषत्वमाह — बाल्याद् अनाविष्कृतलक्षणेन इति । बाल्याद् बालत्वात् । कलामात्रत्वादित्यर्थः । अनाविष्कृतमप्रकाशितं लक्षणं कलङ्को येन तेन । 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणमि'त्यमरः । 'बभूव भस्मैव सिताङ्गरागः' (श्लो० ३२) इत्यादिवचनानुसारेण निरूप्यमाणे हि भगवतश्चन्द्र एव चूडामणिरासीदिति वक्तव्यम् । तत् तु निष्प्रयोजनम् । तथा सति चन्द्रे दोषारोपणं च स्यात् । न्यूनगुणत्वोपादनाच्चन्द्रस्य । आह्लादकरत्वसन्ततप्रवृत्तरश्मित्वनिर्दोषत्वादेरितरचूडामणिव्यतिरेकस्य विद्यमानत्वादिति भावः ॥ ३५ ॥

> इत्यद्भुतैकप्रभवः प्रभावात्
> प्रसिद्धनेपथ्यविधेर्विधाता ।
> आत्मानमासन्नगणोपनीते
> खड्गे निषिक्तप्रतिमं ददर्श ॥ ३६ ॥

(प्रकाशिका)

इत्थीति । अद्भुतो निरूप्यमाणविस्मयनीयः संसारः, तदात्मभूतं तत्त्वजातं च । यदाहुः — 'संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम्' इति । तस्यैकप्रभवः प्रधानं जन्मकारणम् । तस्य महेन्द्रजालिकस्य

१. 'श्चू' क. ख. ग. घ. ङ. च. पाठः. २. 'न् क्षि' क. ख. ग. घ. ङ. पाठः. 'त्वोपादाना' छ. पाठः. ४. 'खड्गे नि', ५. 'ष' मुद्रितकोशपाठः.

प्रभावादित्थं प्रसिद्धनेपथ्यविधिविधानं किमाश्चर्यमिति भावः। प्रसिद्धो लोकसिद्धः। आसन्न आप्तः। टङ्के परशौ। निषिक्ता सङ्क्रान्ता प्रतिमा प्रतिबिम्बो यस्य। इत्थं नेपथ्यविधिं परिसमाप्य देवोऽत्वादर्शकृत्यं परशुनैव[2] निर्वर्तितवानित्यर्थः॥ ३६॥

(विवरणम्)

इत्थमुपवर्णितं नेपथ्यग्रहणमुपसंहरन् दर्पणावलोकनप्रकारमाह —

इतीति। प्रभावाद् इति प्रसिद्धनेपथ्यविधेः विधाता आत्मानं टङ्के निषिक्तप्रतिमं ददर्श। प्रभावाद् मायाबलाद् इति उक्तप्रकारेण प्रसिद्धो लोकेप्रसिद्धो यो नेपथ्यविधिः तस्य विधाता निर्माता सः। आत्मानं स्वशरीरं टङ्के परशौ। 'टङ्कः परशुश्च परश्वध' इति भोजः। निषिक्ता संक्रान्ता प्रतिमा प्रतिबिम्बो यस्य तम्। निविष्टप्रतिममिति वा पाठः। ददर्श दृष्टवान्। यथा भस्मादयः सिताङ्गरागतां गतास्तथा परशुरेवा(त्म?)दर्शोऽभूदिति भावः। इत्थमलौकिकानामाभरणानां प्रसिद्धाभरणत्वप्रापणे भगवतः कः प्रयास इत्याह — अद्भुतैकप्रभव इति। निरूप्यमाणे सति विस्मयनीयः प्रपञ्च एवात्राद्भुतशब्देनोच्यते। तस्यैकः प्रधानभूतः प्रभवः जन्मकारणम्। जगत्सर्गादिकर्तुर्भगवत एवंविधाभरणप्रणयने कः प्रयास इति भावः। टङ्कस्यापि प्रभाववशात् सुकरत्वमाह — आसन्नगणोपनीते इति। आसन्नेन आसन्नपरिचारकेण गणेन भूतगणेन उपनीते समीपं प्रापिते। भगवन्मनोगतवेदिना सेवाविचक्षणेन भूतगणेनानीत इत्यर्थः॥ ३६॥

**स गोपतिं नन्दिभुजावलम्बी**
**शार्दूलचर्मान्तरितोरुपृष्ठम्।**
**तद्भक्तिसंक्षिप्तबृहत्प्रमाण-**
**मारुह्य कैलासमिव प्रतस्थे॥ ३७॥**

१ 'प्याद' ङ. पाठः. २. 'ना देवो नि' ङ पाठः. ३. 'ता सः आ' ख. ग. छ. पाठः. ४. 'कसि' क. ग. छ. पाठः.

(प्रकाशिका)

अथ देवस्य श्वशुरकुलप्रयाणं वर्णयितुमुपक्रमते —

स इति । गोपतिं वृषम् । शार्दूलेति पर्याणीकृतशार्दूलचर्माणमित्यर्थः । तद्भक्तीति परोक्षपरामर्शिना तच्छब्देन कर्तृभूतत्वादध्यक्षायमाणस्य देवस्य परामर्शो न न्याय्य इति केचिन्मन्वते ॥ ३७ ॥

(विवरणम्)

अथ भगवतो हिमवत्पुरप्रस्थानं वर्णयितुमुपक्रमते —

स इति । सः नन्दिभुजावलम्बी गोपतिम् आरुह्य प्रतस्थे । सः य एवं कृतनेपथ्यः दृष्टतत्सामीचीन्यश्च परमेश्वरः । नन्दिनो नन्दिकेश्वरस्य भुजमवलम्बितुं शीलमस्येति तथा । अनेन नन्दिनः सेवाविचक्षणत्वमुक्तम् । गवां वृषाणां पतिं श्रेष्ठम् आरुह्य प्रतस्थे गन्तुमुदयुङ्क्त । यथा देवी दर्पणालोकनानन्तरं हरोपयानत्वरिता बभूव, तथा देवोऽपि तदैव गन्तुमारभतेत्यर्थः । 'कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन' इति न्यायोऽनेन दर्शितः । वाहनभूतस्य वृषस्य परि[2]स्तोमविधानप्रकारमाह — शार्दूलचर्मान्तरितोरुपृष्ठम् इति । शार्दूलो व्याघ्रः । 'शार्दूलद्वीपिनौ व्याघ्रे' इति सिंहः । तस्य चर्मणा अजिनेन अन्तरितम् आच्छादितम् उरु महत् पृष्ठं पृष्ठदेशो यस्य तम् । गोपतिमुत्प्रेक्षते — तद्भक्तिसङ्क्षिप्तबृहत्प्रमाणं कैलासम् इव इति । तस्मिन् परमेश्वरे भक्त्या सङ्क्षिप्तं सङ्कोचितं बृहद् अत्यन्तमुन्नतं विस्तृतं च प्रमाणं येन तादृशं कैलासमिव । नित्यं भगवदावासस्थानभूतः कैलास एव भगवतः प्रस्थानसमयेऽपि भगवद्भक्त्या वाहनभावोचितं वेषमादाय सहैव गन्तुमुद्युक्त एवायमिति जनैरुत्प्रेक्ष्यमाणमित्यर्थः । धवलवर्णत्वं[3] महाकायत्वं भगवदधिष्ठितत्वं चात्रोत्प्रेक्षाबीजम् । अत्र कर्तृभूतत्वात् प्रत्यक्षायमाणस्य देवस्य

---

१. 'परोक्षा' घ. छ. पाठः. २. 'र्याणवि' ख. च. छ. पाठः ३. 'त्वं भ' क. ख. ग घ. पाठः.

परोक्षपरामर्शिना तच्छब्देन तद्भक्तीति परामर्शो न हृदयङ्गम इति केचिदाहुः। तन्मन्दम्। प्रतीतिस्खलनाभावात् ॥ ३७ ॥

**तं मातरो देवमनुव्रजन्त्यः**
**स्ववाहनक्षोभचलावतंसाः।**
**मुखैः प्रभामण्डलराजिगौरैः[1]**
**पद्माकरीचक्रुरिवान्तरिक्षम्[2] ॥ ३८ ॥**

(प्रकाशिका)

**तमिति। राजिः परम्परा। गौरैररुणैः। 'गौरोऽरुणे सिते पीते' इति सिंहः। मण्डलराजिग्रहणं मुखानामपि परम्परारूपत्वं ध्वनयति॥३८॥**

(विवरणम्)

अथ देवपरिजनानामपि प्रस्थानं वर्णयति श्लोकद्वयेन। तत्र ब्रह्माण्यादीनां प्रस्थानमाह तमित्यादिना—

तमिति। तं देवम् अनुव्रजन्त्यः मातरः मुखैः अन्तरिक्षं पद्माकरीचक्रुः इव। तं प्रस्थितम् अनुव्रजन्त्यः अनुगच्छन्त्यः मातरः ब्रह्माण्याद्याः मुखैः आत्मीयैर्वदनैः अन्तरिक्षमाकाशम्। पद्मानि पङ्कजानि, तेषामाकरः उद्भवस्थानभूतः सरोविशेषः। पद्माकरीचक्रुरित्यभूततद्भावे च्विः। आकाशे दृश्यमानैः पद्मसन्निभैर्वदनैरपद्माकरमेवान्तरिक्षं पद्माकरं चक्रुरिवेत्यर्थः। तासां तात्कालिकं रमणीयत्वविशेषमाह—स्ववाहनक्षोभचलावतंसा इति। स्वेषां निजानां वाहनानां हंसवृषमयूरादीनां क्षोभेण गमनसम्भवेन चलनेन चलाश्चञ्चला अवतंसाः शिरोलङ्कारा यासां तास्तथा। मुखानां पद्मसाम्यमेव स्फुटयति—प्रभामण्डलराजिगौरैः इति। मण्डलाकारेण वर्तमाना प्रभा प्रभामण्डलं, तस्य राजिभिः परम्पराभिर्गौरैररुणैः। 'गौरोऽरुणे सिते पीत' इत्यमरः। अत्र

---

१. 'रेणुगौ', २. 'रं' मुद्रितकोशपाठः.

मण्डल(स्य?) राजिग्रहणं मुखानामपि परम्परारूपत्वं ध्वन(य)तीत्याकाशस्य पद्माकरसाम्यप्रतिपत्त्युपपत्तिः ॥ ३८ ॥

**तासां च पश्चात् कनकप्रभाणां**
**काली कपालाभरणा चकाशे ।**
**वलाकिनी नीलपयोदराजि-**
**र्दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥**

(प्रकाशिका)

**तासामिति** । वलाकिनी व्रीह्यादित्वादिनिर्मत्वर्थे । पुरःक्षिप्तशतह्रदा पुरःप्रसारितविद्युत्का । अत्र कालीत्यन्वर्थेन नाम्ना वर्णसाम्यं द्योत्यते ॥ ३९ ॥

(विवरणम्)

भद्रकाल्याः प्रयाणोद्योगं दर्शयति —

**तासामिति**। कनकप्रभाणां तासां पश्चात् कपालाभरणा काली च चकाशे । कनकं सुवर्णं, तस्य प्रभेव प्रभा यासां तासां मातॄणां पश्चात् पृष्ठभागे काली भद्रकाली । चकारः पूर्वोक्तमातृसमुच्चयार्थः । चकाशे शुशुभे । 'काशृ दीप्तावि'ति धातुः । कालीमुत्प्रेक्षते — वलाकिनी नीलपयोदराजिः दूरं पुरःक्षिप्तशतह्रदा इव इति । वलाकाः श्वेतवर्णाः पक्षिविशेषाः । ते सन्त्यस्यामिति वलाकिनी । व्रीह्यादित्वान्मत्वर्थीय इनिप्रत्ययः । नीलानां कृष्णवर्णानां पयोदानां मेघानां राजिः पङ्क्तिः । दूरं दूरभागे । पुर इति पुरोभागवाचकमव्ययम् । पुरोभागे क्षिप्ताः प्रसारिताः शतह्रदाः विद्युतो यया सा तथा । 'शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा । तडित् सौदामनी विद्युदि'त्यमरः । अत्र कालीनीलपयोदराज्योः कालीशब्दस्यान्वर्थत्वाद् वर्णसाम्यम् । शिरःकपालानां धवलत्वाद् वलाकासाम्यम् । सुवर्णवर्णानां मातॄणां विद्युत्सा-

म्यम् । काल्याः पश्चाद्गतत्वात् पुरःक्षिप्तशतह्रदमेघसाम्यम् । मातृणामत्यन्त-सामीप्याभावाद् दूरपदप्रयोगोपपत्तिः ॥ ३९ ॥

**ततो गणैः शूलभृतः पुरोगै-**
**रुदीरितो मङ्गलतूर्यघोषः ।**
**विमानशृङ्गाण्यवगाहमानः**
**शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥**

(प्रकाशिका)

तत इति । उदीरित उत्थापितः । सेवावसरं शशंसेति परमेश्वरदर्शनस्य तैरपि परमार्थदुर्लभत्वं तेषां तत्प्रतीक्षत्वं च द्योत्यते ॥ ४० ॥

( विवरणम् )

वाद्यघोषप्रकारमाह —

तत इति । ततः शूलभृतः पुरोगैः गणैः उदीरितः मङ्गलतूर्यघोषः विमानशृङ्गाणि अवगाहमानः सुरेभ्यः सेवावसरं शशंस । ततः प्रस्थानानन्तरं शूलभृतः परमेश्वरस्य पुरोगैः पुरोभागे गच्छद्भिः गणैः भूतगणैः उदीरितः उत्थापितः । मङ्गलं विवाहमङ्गलं, तदर्थः तूर्यघोषः वाद्यविशेषाणां घोषः नादः । विमानानां व्योमयानानाम् । 'व्योमयानं विमानोऽस्त्री'त्यमरः । शृङ्गाणि शिरोगृहाणि अवगाहमानः प्रविशन् सन् सुरेभ्यः देवेभ्यः सेवायाः अवसरं समयं शशंस निवेदयामास । अत्र बहुषु वाद्येषु निनदत्सु तूर्याणामेव तादृशदूरावस्थितदेवविमानशिरोगृहप्राप्त्युपपत्तेस्तूर्यशब्दोपादानम् । तूर्यश्रवणानन्तरं देवानामागमनदर्शनाच्छशंसेत्युत्प्रेक्षागर्भो निर्देशः । सेवा-

१. 'मदु' क. ख. ग. घ. पाठः.

वसरं शशंसेत्यनेन देवैरपि परमेश्वरदर्शनस्य परमार्थतो दुर्लभत्वं तेषां दर्शनावसरप्रतीक्षणपरत्वं च द्योत्यते ॥ ४० ॥

उपाददे तस्य सहस्ररश्मि-
स्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलि-
र्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१ ॥

(प्रकाशिका)

ज्ञापितावसराणां देवानां देवोपस्थानप्रकारमाह —

उपाददे इति । तद्दुकूलात् छत्रप्रान्तावलम्बिताद् दुकूलात् । 'अन्याराद् —'(२ . ३ . २९) इत्यत्र सूत्रे आराच्छब्दस्यार्थग्रहणादत्र पञ्चमी । पतद्गङ्गत्वोत्प्रेक्षया गङ्गापतनद्रष्टॄणां दिव्यानां तत्स्मरणं द्योत्यते ॥ ४१ ॥

( विवरणम् )

सेवावसरावगमानन्तरं देवानां सेवाप्रकारमाह पञ्चभिः श्लोकैः । तत्र सूर्यकृतां सेवामाह —

उपाददे इति । सहस्ररश्मिः तस्य आतपत्रम् उपाददे । सहस्ररश्मिरादित्यः तस्य परमेश्वरस्य आतपत्रं सितच्छत्रम् उपाददे गृहीतवान् । सूर्यरश्मिपरिहारार्थमेव हि सर्वैरातपत्रादानं क्रियते । भगवतस्तु सूर्यः स्वयमेव शरीरमवलम्ब्यातपत्रं गृहीतवानित्यर्थः । विश्वकर्मा तु छत्रप्रदानेनैव सेवितवानित्याह — त्वष्ट्रा नवं निर्मितम् इति । त्वष्ट्रा विश्वकर्मणा नवमभिनवं सत् । भगवतो विवाहप्रस्थानार्थं तदानीमेव निर्मितमित्यर्थः । अनेन दर्शनीयतरत्वमुक्तम् । आतपत्रग्रहणजनितं भगवतः शोभाविशेषमाह —

१. 'त्रान्त' ग. घ. ङ. पाठः. २. 'त्यादिसू' क. ख. ग. घ पाठः. ३. 'त्रकृत आ' ङ. पाठः. ४. 'ज्ञाप्रप' ङ. पाठः. ५. 'रज्ञापनान' ख. ङ. पाठः.

तद्दुकूलाद् अविदूरमौलिः सः उत्तमाङ्गे पतद्गङ्गः इव बभौ इति । तस्य आतपत्रस्य दुकूलादत्यन्तधवलाद् वसनविशेषात्। छत्रान्ते लम्बमानादतिधवलात् कौशेयादित्यर्थः । 'अन्याराद्'(६.३.२९) इति सूत्रे आराच्छब्दस्यार्थग्रहणादत्राविदूरशब्दयोगे पञ्चमी । अविदूरे समीपे मौलिः शिरो यस्य । सः परमेश्वरः उत्तमाङ्गे शिरसि पतन्ती गङ्गा यस्य तथाविध इव बभौ शोभते स्म । अत्र पतद्गङ्गत्वोत्प्रेक्षया पूर्वं गङ्गापतनदर्शिनां दिव्यजनानां तादृशदुकूलदर्शने पूर्वदृष्टगङ्गाप्रपतनस्मरणं द्योत्यते ॥ ४१ ॥

**मूर्ते च गङ्गायमुने तदानीं**
**सचामरे देवमसेविषाताम् ।**
**समुद्रगारूपविपर्ययेऽपि**
**सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥**

(प्रकाशिका)

मूर्ते इति । समुद्रगारूपं प्रवाहरूपम् । सहंसपाते इव लक्ष्यमाणे[2] सहंसपातत्वसम्भावनया दृश्यमाने ॥ ४२ ॥

(विवरणम्)

गङ्गायमुनयोः सेवाप्रकारमाह —

मूर्ते इति । गङ्गायमुने च तदानीं मूर्ते सचामरे देवमसेविषाताम् । गङ्गा च यमुना च गङ्गायमुने । चकारः सहस्ररश्मिसेवासमुच्चयार्थः । तदानीं विवाहप्रस्थानसमये मूर्ते मूर्तियुक्ते । गृहीतदेवस्त्रीशरीरे भूत्वेत्यर्थः । सचामरे चामरसहिते असेविषाताम् उपत(स्थतु:?स्थाते) । भगवतो विवाहप्रस्थानवेलायां गङ्गा च यमुना च नदीरूपमपहाय सुरसुन्दरीरूपमुपादाय च पार्श्वद्वये स्थित्वा चामरव्यजनवीजनैः सेवां व्यधत्तामित्यर्थः । तत्स्वरूपदर्शने सति सह-

---

१ 'रोलङ्कारो य' क. पाठः. २. 'णे हं' ङ. पाठः.

दयानां प्रतीतिमुत्प्रेक्षामुखेन दर्शयति — समुद्रगारूपविपर्यये अपि सहंस-
पाते इव लक्ष्यमाणे इति । समुद्रं गच्छत इति समुद्रगे तयोः यद् रूपं प्रवा-
हरूपं तस्य विपर्यये व्यत्यासेऽपि । दिव्यस्त्रीरूपधारणे सत्यपीत्यर्थः । अपि
शब्दस्तथात्वे हंसपातयोग्यतां निराकरोति । हंसानां पातो हंसपातः । पात
उत्पतननिपतनादिरूपो व्यापारः । हंसपातेन सहिते सहंसपाते । इवशब्दो द्र-
ष्टृणां सम्भावनां दर्शयति । लक्ष्यमाणे दृश्यमाने । जनैरिति शेषः । गङ्गायमु-
नयोः समीपे पुनः पुनर्निपततोरुत्पततोश्च सितव्यजनयोः साक्षात्कारे सति
महाजनैः सहंसपातत्वसम्भावनया दृश्यमाने इत्यर्थः ॥ ४२ ॥

तमभ्यगच्छत् प्रथमो विधाता
श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य
संवर्धयन्त्या हविषेव वह्निम् ॥ ४३ ॥

(प्रकाशिका)

तमिति । साक्षादिति मूर्त्यन्तराव्यवहितेनात्मीयरूपेणैवेत्यर्थः[1] ।
भगवान् नारायणो हि सर्वस्मिँल्लोककार्ये स्वांशैः प्रवर्तते[2] । इह[3] तु परमेश्व-
रगौरवान्न तथेति भावः । संवर्धयन्त्येति पाठः । संवर्धयन्ताविति पाठे
अभ्यगच्छादित्येकवचनान्वयो न स्यात् । अस्य महिमानं नैसर्गिकं[4] संव-
र्धयन्त्या स्तुतिवाचा अभ्यगच्छतामित्यर्थः ॥ ४३ ॥

(विवरणम्)

हरिविरिञ्चयोः परमेश्वरविवाहोत्सवप्राप्तिं तत्कृतं सेवाप्रकारं चाह —

तमिति । प्रथमः विधाता जयेति वाचा तम् अभ्यगच्छत् । प्रथमो

---

१. 'येऽपि व्य' च. पाठः. २. 'ञ्चिरू' ङ. पाठः. ३. 'अत्र तु' ङ. पाठः.
४. 'कं व' ङ. पाठः.

विधाता ब्रह्मा । मरीच्यादीनां सर्गशेषविधायित्वाद् ब्रह्मणो विधातृषु प्राथम्यम् । जयेति वाचा जयेत्यादिरूपया स्तुतिवाचा । सहेति शेषः । तमभ्यगच्छद् अभिमुखीकृत्य गतवान् । हरेरपि प्राप्तिमाह —श्रीवत्सलक्ष्मा पुरुषः साक्षात् च इति । श्रीवत्सलक्ष्मा पुरुषः विष्णुः । श्रीवत्स एव लक्ष्म चिह्नं यस्य स तथा । 'उरस्यस्य श्रीवत्सो लाञ्छनं मतमि'त्यमरः । साक्षाद् मूर्त्यन्तराव्यवधानेन । मत्स्यकूर्माद्यंशानामंशिभूतेन[1] स्वेनैव रूपेणेत्यर्थः । नारायणो हि भगवान् सर्वेषु लोककार्येषु निजांशैरेव प्रवृत्त[2] इति पुराणप्रसिद्धम् । अत्र तु परमेश्वरगौरवात् स्वयमेवेति भावः । चशब्दः समुच्चयार्थः । जयेति वाचा तमभ्यगच्छदिति अत्रापि योज्यम् । कीदृशी जयवागित्यत्राह — अस्य महिमानं संवर्धयन्त्या इति । अस्य परमेश्वरस्य महिमानं नैसर्गिकं महत्त्वं । संवर्धयन्त्या सम्यग् वर्धयन्त्या । वाचो महिमसंवर्धकत्वमुपमया स्फुटयति—हविषा वह्निम् इव इति । हविषा आज्येन वह्निमिव । 'घृतमाज्यं हविः सर्पिरि'ति सिंहः । यथा हविषा वह्निं वर्धयति, तथात्मनैवास्य महिमानं संवर्धयन्त्या वाचेत्यर्थः । संवर्धयन्ताविति वा पाठः । हविषा वह्निमिव जयेति वाचास्य महिमानं संवर्धयन्तौ इति च योजना । यत् त्वत्राभ्यगच्छदित्येकवचनप्रयोगविरोधात् संवर्धयन्ताविति द्विवचनप्रयोगो न युक्त इत्युक्तं, तदयुक्तम् । उभयकृतसेवाप्रकारवाचित्वादस्य वाक्यस्य द्विवचनप्रयोगोपपत्तेः । अर्थादभूतामिति क्रियान्तरान्वयस्य सिद्धत्वाच्च । क्रियासामान्यवाचिनः शब्दा हि सार्वत्रिकाः ॥ ४३ ॥

**एकैव मूर्तिर्बिभिदे त्रिधा सा**
**सामान्यमेषां प्रथमावरत्वम् ।**
**विष्णोर्हरस्तस्य हरिः कदाचिद्**
**वेधास्तयोस्तावपि धातुराद्यौ ॥ ४४ ॥**

---

१. 'द्यवस्थानांशि' छ. पाठः. २ 'वर्तत इ' च. छ पाठः.

(प्रकाशिका)

एकैवेति । मूर्तिः समष्टिरूपा । विभिदे व्यस्ताभवत् । त्रिधा ब्रह्मविष्णुशिवात्मना । सेति श्रुत्यादिप्रसिद्धा परामृश्यते । सामान्यं, न तु नियतम् । एषां ब्रह्मादीनाम् । प्रथमावरत्वं जन्मतः । तदेव दर्शयति— विष्णोरिति । अयं श्लोकः प्रक्षिप्त इति मन्वते, नायकप्रभावानङ्गत्वात् ॥ ४४ ॥

(विवरणम्)

इत्थं हरिहरहिरण्यगर्भाणामेकत्र समागमं प्रतिपाद्य तेषामभेदप्रतिपादनमुखेन नायकभूतस्य परमेश्वरस्य परमात्मस्वरूपत्वं दर्शयन्नत्यन्तोत्कृष्टत्वमाह—

एकैवेति । एका एव सा मूर्तिः त्रिधा बिभिदे । एका केवला । सा स्मृतिपुराणप्रसिद्धा मूर्तिः परब्रह्मादिशब्दसिद्धं स्वरूपं त्रिधा ब्रह्मविष्णुहररूपेण बिभिदे भिन्नाभूत् । सृष्टिस्थितिप्रलयकार्यापेक्षयेति शेषः । इदानीं तु यः सेव्यसेवकभावो निर्दिष्टः सोऽपि न स्वाभाविक इत्याह— एषां प्रथमावरत्वं सामान्यम् इति । एषां हरिहरहिरण्यगर्भाणाम् । प्रथमोऽवरश्च प्रथमावरौ तयोर्भावस्तत्त्वम् । जन्मप्रभावादिभिरग्रगण्यत्वं प्रथमत्वम् । तैरनन्तरगण्यत्वमवरत्वम् । तदुभयमप्येषां सामान्यं समानम् । 'सामान्यं तु समानत्वे समानेऽपि क्वचिद् भवेदि'ति कौशिकः । एषां जन्मतः प्रभावतश्च यावुत्कर्षापकर्षौ तौ न क्वचिदेव नियतौ, किन्तु स्वातन्त्र्यमवलम्ब्य स्वयमेव कल्पिताविति भावः । यथा बालकानां राजामात्यभृत्याद्यभिनयपूर्विका क्रीडा, तथेत्यर्थः । एतदेव प्रपञ्चयति— विष्णोरित्यादिना । तत्राद्यावित्ययं शब्दो विभक्तिव्यत्ययेन पूर्ववाक्यत्रये योजनीयः । कदाचिद् विष्णोः हरः आद्यः । कदाचिद् यदा तेषां मनसि स्फुरति तदेत्यर्थः । विष्णोरिति सम्बन्धषष्ठी । हरः परमेश्वरः आद्यः प्रभावादिभिरुत्कृष्टः । कस्मिंश्चित् काले विष्णोः सम्बन्धिनो हर उत्कृष्ट

---

१. 'थं' क. च. पाठः.

इत्यर्थः। तस्यैव विष्णोः कदाचिदुत्कर्षमाह — कदाचित् तस्य हरिः आद्य इति। तस्य हरस्य सम्बन्धिनः हरिः विष्णुराद्यः। ब्रह्मणोऽप्युत्कर्षमाह — कदाचित् तयोः वेधाः आद्य इति। तयोर्हरिहरयोः सम्बन्धिनोः वेधाः ब्रह्मा आद्यः। ब्रह्मापेक्षया हरिहरयोरप्युत्कर्षमाह — कदाचिद् धातुः तौ अपि आद्यौ इति। धातुर्ब्रह्मणः सम्बन्धिनः तौ हरिहरौ आद्यौ। अयं तु श्लोको नायकोत्कर्षप्रतिपादकत्वाभावात् प्रक्षिप्त इति केचिन्मन्यन्ते। तदयुक्तम्। नायकस्य परमोत्कर्षप्रतिपादनपरत्वादस्य श्लोकस्य। जगत्सर्गादिकर्ता परब्रह्मादिशब्दसिद्धः परमात्मैवायं परमेश्वर इति ह्यनेन श्लोकेन प्रतिपादितम्। भक्तिपरवशस्य कवेः सर्वस्तुतिरूपो वायं श्लोकः ॥ ४४ ॥

**तं लोकपालाः पुरुहूतमुख्याः**
**श्रीलक्षणोत्सर्गविनीतवेषाः।**
**दृष्टिप्रदाने कृतनन्दिसंज्ञा-**
**स्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५ ॥**

(प्रकाशिका)

**तमिति।** श्रीलक्षणानि छत्रचामरादीनि वेषग्रहणादुल्बणाङ्गरागशेखरादीनि च, तेषामुत्सर्गेण त्यागेन विनीतः स्वामिसन्दर्शनसमयसमुचितविनयप्रकाशको[2] वेषो[3] येषाम्। दृष्टिप्रदाने देवस्य दृष्टिं दापयितुम्। कृता नन्दिनो देवान्तरङ्गामात्यस्य संज्ञा हस्ताद्यैः सूचना यैः। प्राञ्जलयः अञ्जलिं बद्ध्वेत्यर्थः[4] ॥ ४५ ॥

(विवरणम्)

इन्द्रादिलोकपालानां सेवाप्रकारमाह —

---

१. 'ताः', २. 'का', ३. 'षा' क पाठः. ४. 'कृत्वेत्य' ग. घ. ङ. पाठः.

तमिति । पुरुहूतमुख्याः लोकपालाः प्राञ्जलयः तं प्रणेमुः । पुरुहूतो देवेन्द्रो मुख्यः श्रेष्ठो येषां ते । लोकपालाः लोकान् पालयन्तीति लोकपालाः । एतच्च त्रयस्त्रिंशत्कोटिसङ्ख्यातानामितरेषां देवानामप्युपलक्षणम् । प्राञ्जलयः कृताञ्जलिपुटाः सन्तः तं परमेश्वरं प्रणेमुः प्रकर्षेण नेमुः । भृत्योचितं नमस्कारं चक्रुरित्यर्थः । तेषां स्वामिदर्शनोचितं वेषभूषणादिकं दर्शयति — श्रीलक्षणोत्सर्गविनीतवेषा इति । श्रियो लक्षणानि छत्रचामरवाहनादीनि, तेषामुत्सर्गेण परित्यागेन । विनीतं इति कर्तरि निष्ठा । स्वामिदर्शनोचितविनयद्योतक इत्यर्थः । तादृशो वेषो येषां ते तथा । वेषः आकारः । 'वेषः प्रसाधनाकारपरिवेषप्रवेष्टने' इति भोजः । अत्र वेषग्रहणेनातिबहलाङ्गरागशिरोलङ्कारादिपरित्यागोऽपि प्रतीयते । देवानां देवामात्यं प्रति परमेश्वरानुग्रहार्थनामाह — दृष्टिप्रदाने कृतनन्दिसंज्ञाः इति । दृष्टिप्रदाने इति निमित्तसप्तमी । दृष्टेः प्रदानं दृष्टिप्रदानम् । देवस्य दृष्टिमात्मनि प्रसारयितुमित्यर्थः । कृता विहिता नन्दिविषया संज्ञा हस्ताद्यैः सूचना यैस्ते तथा । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इति सिंहः । एते वयं देवप्रसादार्थिनः संप्राप्ता इति नन्दिनं प्रति कृतप्रार्थना इत्यर्थः । इत्थं स्वामिगौरवादाकारेङ्गितादिभिः प्रार्थितस्य प्रधानामात्यस्य प्रवृत्तिमाह — तद्दर्शिता इति । तेन नन्दिना दर्शिताः दर्शनं नीताः । देवेन्द्रोऽयम् अग्निरयं यमोऽयमित्यादिनामोच्चारणपुरस्सरं नन्दिना दर्शिता इत्यर्थः ॥ ४५ ॥

**कम्पेन मूर्ध्नः शतपत्रयोनिं**
**वाचा हरिं वृत्रहणं स्मितेन ।**
**आलोकमात्रेण सुरानशेषान्**
**सम्भावयामास यथाप्रधानम् ॥ ४६ ॥**

---

१. 'श्रील' क. च. छ. पाठः. २. 'तेति' क. ख. ग. घ. पाठः. ३. 'हप्रार्थ' छ. पाठः.

(प्रकाशिका)

तेषु समागतेषु यथार्हं[1] देवस्य प्रतिपत्तिमाह —

**कम्पेनेति।** मूर्ध्नः कम्पेनेति गौरवं, वाचेति मित्रभावः, स्मितेनेति प्रसादः, आलोकमात्रेणेति प्रतिपत्तिमात्रं च द्योत्यते ॥ ४६ ॥

(विवरणम्)

इत्थमुपस्थितेषु देवेषु देवस्य तत्तज्जनोचितां प्रवृत्तिमाह —

**कम्पेनेति।** सः मूर्ध्नः कम्पेन शतपत्रयोनिं सम्भावयामास। मूर्ध्नः शिरसः कम्पेन चालनेन सम्भावयामास सम्मानितवान्। अनेन ब्रह्मणि गौरवातिशयः सूच्यते। वाचा हरिं सम्भावयामास। अनेन हरौ सख्यं द्योत्यते। वृत्रहणं स्मितेन। वृत्रहणमिन्द्रं[2] स्मितेन मन्दस्मितेन सम्भावयामास। अनेन तं प्रति प्रसादातिशयः सूचितः। अशेषान् सुरान् आलोकमात्रेण। अशेषानखिलान् सुरान् देवान् आलोकमात्रेण तत्तद्विषयेण[3] केवलेनावलोकनेन सम्भावयामास। अनेन भवतामागमनमस्माभिर्विज्ञातमिति प्रकाश्यते। इत्थं सम्भावनायां हेतुमाह — यथाप्रधानमिति। सम्भावनक्रियाविशेषणमिदम्। प्रधानभूताननतिक्रम्येत्यर्थः ॥ ४६ ॥

**तस्मै जयाशीः ससृजे पुरस्तात्**
**सप्तर्षिभिस्तान् स्मितपूर्वमाह।**
**विवाहयज्ञे विततेऽत्र यूय-**
**मध्वर्यवः पूर्ववृता मयेति ॥ ४७ ॥**

(प्रकाशिका)

**तस्मा इति।** जयाशीः जयेत्याशीः। ससृजे प्रयुक्ता। पुरस्तादितरदेवर्षिभ्यः पूर्वम्। आह उवाच। इदमस्त्यादिवत् तिङ-

---

१. 'र्हां' क. ख. ग. ङ. पाठः. २. 'णं देवेन्द्रं' ख. छ. पाठः. ३. 'णावलो' क. पाठः. ४. 'ङ्प्र' ङ. पाठः.

न्तप्रतिरूपकमव्ययम्। विवाहेत्यादिकया विस्रम्भोक्त्या तेषु देवः परं प्रसादं दर्शयति। यज्ञरूपणया विवाहस्य लोकहितार्थत्वं द्योत्यते। अध्वर्युशब्दो लक्षणया ऋत्विक्पर्यायः॥ ४७॥

(विवरणम्)

अथ देवर्षीणां प्राप्तिं तद्विषयां सम्भावनां चाह—

तस्मा इति। सप्तर्षिभिः पुरस्तात् तस्मै जयाशीः ससृजे। सप्तर्षिभिः मरीच्यादिभिः पुरस्ताद् इतरदेवर्षिभ्यः पूर्वम्। जयेत्याशीः आशीर्वादः ससृजे प्रयुक्ता। देवस्य प्रयाणपटहश्रवणानन्तरं सर्वेषु देवर्षिषु सेवार्थं समागतेषु सत्सु तेषां मध्ये सप्तर्षीणामेव प्राधान्यादेते भगवते जयेत्याशीर्वादमुदीरयामासुरित्यर्थः। भगवतस्तेषु प्रतिपत्तिमाह—सः तान् स्मितपूर्वम् आह इति। तान् सप्तर्षीन्। स्मितपूर्वमिति वचनक्रियाविशेषणम्। स्मितं मन्दस्मितं पूर्वं यथा भवति तथा आह उवाच। आहेति लिडर्थे तिङ्प्रतिरूपकमव्ययम्। किमुवाचेत्यत्राह—वितते अत्र विवाहयज्ञे यूयं मया अध्वर्यवः पूर्ववृताः इति इति। वितते विस्तृते। देवगणैरुपदेवगणैर्देवर्षिगणैश्च समाकीर्णे इत्यर्थः। अत्रास्मिन् मयेदानीं करिष्यमाणे विवाहे एव यज्ञे यागे। यज्ञत्वरूपणेन विवाहस्य तारकासुरनिग्रहादिना लोको(त्तर? पकारक)त्वं ध्वन्यते। यज्ञस्य लोकोपकारकत्वं प्रसिद्धम्—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥" (मनु०अ०३. श्लो.७६)

इत्यादिषु। यूयं सदाचारप्रवर्तका भवन्तः। अध्वर्युशब्दो लक्षणया ऋत्विक्पर्यायः। सर्वेषां प्राधान्यसाम्यप्रतीतिः फलम्। पूर्ववृताः पूर्वमेव वृताः। यदा पूर्वं मया 'तत् प्रयातौषधिप्रस्थम्'(स. ६. श्लो. ३३)इति वचनेन युष्मा-

१. 'पम' ड. पाठः. २. 'पुरःप्र' क ग. पाठः. ३. 'प्रकाशय' ग घ. पाठः.

भिरेवायं मम विवाहः साधयितव्य इत्युक्तं, तदैव विवाहपरिसमाप्तिपर्यन्तं क्रियानुष्ठानादिष्वपि युष्माभिरेव श्रमः कर्तव्य इत्ययमर्थोऽप्यर्थादुक्त एवेत्यर्थः । इतिशब्दस्याहेत्यनेनान्वयः । अनेन विस्रम्भभाषितेन देवस्तेषु प्रकृतं प्रसादातिशयं प्रकाशितवानित्यवसेयम् ॥ ४७ ॥

**विश्वावसुप्राग्रसरैः प्रवीणैः**
**संगीयमानत्रिपुरापदानः ।**
**अध्वानमध्वान्तविकारलङ्घ्य-**
**स्ततार ताराधिपखण्डधारी ॥ ४८ ॥**

(प्रकाशिका)

**विश्वावस्विति** । विश्वावसुः प्राग्रसरः पुरस्सरो येषाम् । प्रवीणैर्निपुणैः, अपि च प्रकृष्टवीणैः । त्रिपुरापदानं त्रिपुरविषयमपदानम् । ध्वान्तशब्दो लक्षणयाविद्यावाची ॥ ४८ ॥

(विवरणम्)

अथ गन्धर्वकृतसेवाप्रतिपादनपुरस्सरं भगवतः प्रयाणं वर्णयति —

विश्वावस्विति । ताराधिपखण्डधारी विश्वावसुप्राग्रसरैः सङ्गीयमानत्रिपुरापदानः अध्वानं ततार । ताराधिपश्चन्द्रः तस्य खण्डं शकलं धर्तुं शीलमस्येति तथा । अनेन दूरस्थानामपि जनानां दर्शनसौकर्यं ध्वन्यते । विश्वावसुः प्राग्रसरः पुरस्सरो येषां तैः, विश्वावसुप्रभृतिभिरित्यर्थः । विश्वावसुरिति गन्धर्वाणामधीशितुः संज्ञा । सङ्गीयमानं सम्यग् गीयमानं त्रिपुरविषयमपदानम् अद्भुतपराक्रमो यस्य तथाभूतः सन् । अनेन मार्गे त्रिपुरदहनविषयं गानमुक्तम् । अध्वानं मार्गं ततार तीर्णवान् । 'तॄ प्लवनतरणयोरि'ति

१. 'ष्ठापना' च. छ. पाठः. २. 'ष्ु पूर्वप्र' च छ. पाठः. ३. 'हे', 'व' मुद्रितकोशपाठः. ५. 'थवा प्र' घ. पाठः.

धातुः । गीयमानत्रिपुरदहनादिभगवच्चरितैर्विश्वावसुप्रभृतिभिर्गन्धर्वैः स्तूय-मानो देवो मार्गमतिक्रान्तवानित्यर्थः । तेषां गानचातुर्यमाह — प्रवीणैरिति । निपुणैः । प्रकृष्टा वीणा येषां तैरिति वा । इत्थं देवानामुपदेवानां देवर्षीणां च भगवत्सेवां प्रतिपाद्य किं बहुना महाजनाः सर्वेऽपि तं सिषेविरे इत्याह— अध्वान्तविकारलङ्घ्य इति । 'क्षुब्धस्वान्तध्वान्त —' (७. २. १८)इत्या-दिना तमसि निपातितो ध्वान्तशब्दस्तद्गतज्ञाननिरोधकत्वगुणयोगादविद्यायां गौणो वर्तते ।

"अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥"

इति न्यायात् । तस्य विकारास्तु परमार्थज्ञाननिरोधादयः, तद्रहिता अध्वान्त-विकारास्तैर्लङ्घ्यः प्राप्यः । ये परमार्थज्ञानवन्तस्तैः सर्वैरपि सेव्य इत्यर्थः ॥

**खे खेलगामी तमुवाह वाहः**
**सशब्दचामीकरकिङ्किणीकः ।**
**तटाभिघातादिव लग्नपङ्के**
**धून्वन्[1] मुहुः प्रोतघने विषाणे ॥ ४९ ॥**

(प्रकाशिका)

अथ भगवद्गमनस्यालोकसाधारणशोभाभाजनत्वं भगवतो वृषाकृतेर्धर्मस्य स्वरूपं च श्रोतृजनपापनिर्हरणाय कारुणिकः कविरुपवर्णयति —

**ख इति । खेलं मन्थरम् ॥ ४९ ॥**

(विवरणम्)

अथ भगवतो वाहनभूतस्य वृषाकृतेर्धर्मस्य भगवत्सेवाप्रकारमाह —

ख इति । वाहः खे तम् उवाह । वाहः वाहनभूत उक्षा खे

१. 'धु' मुद्रितकोशपाठः.

आकाशे तं परमेश्वरम् उवाह ऊढवान् । गमनप्रकारमाह — खेलगामीति । खेलं मन्थरं यथा भवति तथा गन्तुं शीलमस्येति तथा । अनेन सर्वेषां दर्शनसौख्यमुक्तम् । लोकोत्तरशोभाभाजनत्वमाह — सशब्दचामीकरकिङ्किणीक इति । सशब्दाः शब्दसहिताः चामीकरमय्यः सुवर्णमय्यः किङ्किण्यो यस्य स तथा । गतिवशान्मेघमार्गप्राप्तौ विशेषमाह — प्रोतघने विषाणे मुहुः धून्वन् इति । प्रोताः गमनवेगवशात् सङ्घट्टिताः घना मेघा ययोः तथाभूते । विषाणे शृङ्गे मुहुः पुनः पुनः धून्वन् कम्पयन् । धूननमत्र मेघापनयनार्थम् । प्रोतघने विषाणे उत्प्रेक्षते — तटाभिघाताद् लग्नपङ्के इव इति । तटेष्वद्रिसानुषु । 'अथ लिङ्गत्रये तटम् । प्राहुर्जलाशयप्रान्ते तीरे त्वन्येऽद्रिसानुनी'ति केशवः । अभिघातादभिहननाद्धेतोः लग्नानि पङ्कानि ययोः तथाभूते इव लक्ष्यमाणे । उक्षाणो हि यथा तटाभिघातलग्नानां पङ्कानामपनयनार्थं विषाणे मुहुर्मुहुः कम्पयन्ति, तथायमपि जनैरुत्प्रेक्ष्यमाण इत्यर्थः । अत्रापि धर्मस्वरूपस्य भगवद्वाहनभूतस्य वृषस्य स्वरूपकथनेन श्रोतृजनपापध्वंसः । कवेरभिप्रायः पूर्ववद् द्रष्टव्यः ॥ ४९ ॥

स प्रापदप्राप्तपराभियोगं
नगेन्द्रगुप्तं नगरं मुहूर्तात् ।
पुरोऽवलग्नैर्हरदृष्टिपातैः
सुवर्णसूत्रैरिव कृष्यमाणम् ॥ ५० ॥

(प्रकाशिका)

**स** इति । तच्छब्दो वाहं परामृशति । अप्राप्तेति हिमवत्प्रताप उक्तः । पुरोऽवलग्नैः पुरस्तादवपतितैः । कपिलैर्हरदृष्टिपातैर्हेतुभूतैः सुवर्णसूत्रैः कृष्यमाणमिव लक्ष्यमाणमित्यर्थः ॥ ५० ॥

---

१. 'नव' क. पाठः. २. 'वि', ३. 'णः ॥' मुद्रितकोशपाठः. ४. 'पा' क. घ. पाठः. ५. 'णम् ॥' घ. ङ. पाठः.

(विवरणम्)

अथ भगवतो हिमवत्पुरप्राप्तिमाह—

स इति। सः मुहूर्ताद् नगेन्द्रगुप्तं नगरं प्रापत्। सः हरवाहनभूतो वृषराजः। मुहूर्तादल्पेन कालेनेत्यर्थः। नगेन्द्रेण हिमवता गुप्तं रक्षितम्। नगरम् ओषधिप्रस्थाभिधानं पुरम्। प्रापत् प्राप्तवान्। 'आप्लृ व्याप्तावि'ति धातोः 'पुषादिद्युताद्यॢदितः परस्मैपदेषु'(३. १. ५५) इत्यङि रूपम्। हिमवतः प्रभावातिशयं दर्शयन् पुरं विशिनष्टि—अप्राप्तपराभियोगमिति। अप्राप्तः कदाचिदपि न प्राप्तः पराभियोगः परैः शत्रुभिः कृतोऽभियोगः अभिभवो येन तत्। कदाचिदप्यननुभूतपराभिभवमित्यर्थः। अनेन पुरस्य निर्भयत्वप्रतिपादनमुखेन नित्यप्रवृत्तोत्सवत्वं ध्वन्यते। क्षणेन प्राप्यमाणं पुरमुत्प्रेक्षते—पुरः अवलग्नैः हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाणम् इव इति। पुरः पुरस्ताद् अवलग्नैरवपतितैः हरस्य दृष्टिपातैर्दृष्टिप्रचारैर्हेतुभिः सुवर्णमयैः सूत्रैः पाशैः[2] कृष्यमाणमिव लक्ष्यमाणम्। हरदृष्टिपातानां कपिलत्वात्सुवर्णसूत्रत्वोत्प्रेक्षा। नेत्राणां कपिलवर्णत्वं च महापुरुषलक्षणम्। देवीनिवासभूतहिमवत्पुरदर्शनोत्सुकस्य भगवतो दृष्टिपातानामग्रभागस्थिते हिमवत्पुरे निबद्धत्वात् सूत्रैः[3] आकृष्य समीपं नीयमानमिव लक्ष्यमाणमित्यर्थः। वेगेन गमने पुरोभागस्थिते वस्तुन्यागमनप्रतीतिरुत्प्रेक्षाहेतुः। वेगातिशयप्रतीतिश्च फलम्॥५०॥

तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः।
स्वबाहचिह्नादवतीर्य मार्गा-
दासन्नभूपृष्ठमियाय देवः॥५१॥

---

१. 'तापाति' च. पाठः. २. 'शैराकृ' क. पाठः. ३. 'त्रैः पाशैरा' क. च. पाठः.
४. 'बाणचि' मुद्रितकोशपाठः.

(प्रकाशिका)

तस्येति । उपकण्ठे उपशल्ये । स्ववाहचिह्नाद् मेघचिह्नान्मार्गाद्, मेघपथादित्यर्थः । मेघवाहनकल्पे भगवान् विष्णुर्मेघो भूत्वा हरमवहदिति पुराणे श्रवणादियमुक्तिः । आसन्नभूपृष्ठत्वं गमनस्य प्रत्युद्गमनसौकर्यार्थम् ॥ ५१ ॥

(विवरणम्)

इत्थं हिमवत्पुरपर्यन्तमुपगतस्य देवस्य हिमवत्प्रत्युद्गमनसौकर्यार्थमवस्थानमाह —

तस्येति । देवः तस्य उपकण्ठे स्ववाहचिह्नाद् मार्गाद् अवतीर्य आसन्नभूपृष्ठम् इयाय । देवः परमेश्वरः तस्य हिमवत्पुरस्य उपकण्ठे समीपे, ग्रामान्त इत्यर्थः । स्ववाहचिह्नात् स्वस्य वाहो वाहनं स्ववाहः, स्ववाह एव चिह्नं लाञ्छनं यस्य तादृशान्मार्गाद्, मेघमार्गादित्यर्थः । हरस्य मेघवाहनत्वं प्रसिद्धं हरिपुराणे — पुरा किल मेघवाहनकल्पे नारायणो मेघो भूत्वा देवासुरयुद्धे युद्धसन्नद्धं हरमुवाहेति । अत एव कपर्दी मेघवाहन इति प्रोक्तम् । अवतीर्य अवरुह्य । आसन्नभूपृष्ठमिति गमनक्रियाविशेषणम् । आसन्नं भूपृष्ठं भूतलं यथा भवति तथा । इयाय जगाम । कैलासशिखरादारभ्य हिमवद्ग्रामान्तपर्यन्तं मेघमार्गेणैव गत्वा तस्मादारभ्य हिमवतः प्रत्युद्गमनसौकर्यार्थं क्षितितलसमीपव्योममार्गेणैव गतवानित्यर्थः । भगवद्रूपस्य दिदृक्षूणां मनोहरत्वमाह — घननीलकण्ठ इति । घनो मेघः तद्वन्नीलः कृष्णवर्णः कण्ठो यस्य स तथा । सजलजलधरश्यामलगलप्रदेश इत्यर्थः । तादृशभगवदागमनवेलायां हिमवत्पुरवासिनां भगवद्दर्शनप्रकारमाह — कुतूहलाद् उन्मुखपौरदृष्ट इति । कुतूहलात् कौतुकात् उन्मुखैरूर्ध्वमुखैः पौरैर्हिमवत्पुरवा-

---

१. 'पा' च. पाठः. २. 'कण्ठप्र' क. च. पाठः.

सिभिः दृष्टः वीक्षितः। मेघमार्गादवतरणसमय एव पुरवासिभिः कौतुकातिशयादीक्ष्यमाण इत्यर्थः ॥ ५१ ॥

तमृद्धिमद्बन्धुजनाधिरूढै-
वृन्दैर्गजानां गिरिचक्रवर्ती ।
प्रत्युज्जगामागमनप्रतीतः
प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥

(प्रकाशिका)

प्रत्युद्गमनमाह —

तामिति। ऋद्धिर्वस्त्राभरणादिः। तत्प्रतिवस्तुतया प्रफुल्लत्वमुपात्तम्। प्रतीतो हृष्टः ॥ ५२ ॥

(विवरणम्)

अथ हिमवतः प्रत्युद्गमनप्रकारमाह —

तमिति। गिरिचक्रवर्ती गजानां वृन्दैः तं प्रत्युज्जगाम। गिरिचक्रवर्ती गिरिराजः। गजानां वृन्दैः समूहैः, प्रत्युद्गमनसाधनैः। तं परमेश्वरम्। प्रत्युज्जगाम प्रत्युद्गतवान्। गजवृन्दानां शोभातिशयजनकत्वमाह — ऋद्धिमद्बन्धुजनाधिरूढैरिति। ऋद्धिर्वस्त्राकल्पादिः तद्वद्भिः बन्धुजनैरधिरूढैः कृतारोहणैः। तादृशे प्रत्युद्गमने हेतुमाह — आगमनप्रतीत इति। आगमनेन निजगृहप्राप्त्या प्रतीतः सन्तुष्टः। तादृशं प्रत्युद्गमनमुत्प्रेक्षते — प्रफुल्लवृक्षैः स्वैः कटकैः इव। प्रफुल्ला विकसितकुसुमाः वृक्षा येषु तैः स्वैः आत्मीयैः कटकैः प्रस्थैरिव। 'कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियामि'त्यमरः। अत्र गजवृन्दप्रतिवस्तुत्वेन कटकानामुपादानं, बन्धुजनप्रतिवस्तुत्वेन वृक्षाणां, वस्त्राकल्पादिप्रतिवस्तुत्वेन प्रफुल्लत्वस्येति विभागः ॥ ५२ ॥

वर्गावुभौ देवमहीधराणां
द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ
भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥

(प्रकाशिका)

वर्गाविति । उद्घटितापिधाने उत्सारितकवाटे । अनेन पूर्वं जनसञ्चारार्थं किञ्चिद्विवृतं पुरद्वारमतिविवृतं कृतमिति[1] प्रतीयते । पुरद्वारप्रतिवस्तुतया सेतुरुपात्तः ॥ ५३ ॥

(विवरणम्)

अथ महेश्वरमहीधरयोः समागमं वर्णयित्वा तत्सैनिकानां समागममाह —

वर्गाविति । पुरस्य द्वारे उद्घटितापिधाने देवमहीधराणाम् उभौ वर्गौ समयितुः । पुरस्य द्वारे गोपुरे 'पुरद्वारं तु गोपुरमि'त्यमरः । उद्घटितं विवृतम् अपिधानं कवाटं यस्य तथाविधे सति देवानामिन्द्रादीनां महीधराणां महामेरुप्रभृतीनां च वर्गौ समूहौ (समयितुः) समागमं प्रापतुः । गोपुरकवाटे जनसञ्चारार्थं किमपि विवृते सति उभावपि सैनिकजनौ परस्परसम्मर्दादेव कवाटमतिविवृतं विधाय परस्परमेकीबभूवतुरित्यर्थः । अत्रोपमां दर्शयति — भिन्नैकसेतू पयसाम् ओघौ इव इति । भिन्नः भग्नः एकः साधारणः सेतुर्ययोः तौ पयसां जलानाम् ओघौ प्रवाहाविव । यथा लवणजलशुद्धजलयोः परस्परं संसर्गभयान्मध्ये विहिते सेतौ येन केनचित् कारणेन किमपि भग्ने सति उभावपि जलप्रवाहौ सेतुमुन्मूल्य परस्परसङ्क्रान्तौ भवतः तथेत्यर्थः[2] । अत्र साधारणं धर्ममाह — दूरविसर्पिघोषाविति । दूरे अतिदूरे विसर्पणं कर्तुं शीलमस्येति दूरविसर्पी तथाविधो घोषः गजतुरगसैनिकादि-

---

१. 'मिति प्र' क. पाठः. २. 'थैवेत्य' ख. पाठः

घोषः जलप्रवाहादिघोषश्च ययोः तौ तथा। अत्र कवाटप्रतिवस्तुत्वेन सेतुरुपात्तः। सैनिकद्वयप्रतिवस्तुत्वेन जलप्रवाहद्वयम्। उपमया वर्गद्वयस्यातिमहत्त्वं सूचितम् ॥ ५३ ॥

**ह्रीमानभूद् भूमिधरो हरेण**
**त्रैलोक्यवन्द्येन कृतप्रणामः।**
**पूर्वं महिम्ना स हि तस्य दूरा-[१]**
**दावर्जितं नात्मशिरो विवेद ॥ ५४ ॥**

(प्रकाशिका)

ह्रीमानिति। अत्यन्तमनुचितं मयैतदङ्गीक्रियत इति ह्रीर्जाता। उचितमेव तु संवृत्तमस्य, तत् त्वसौ न विवेदेत्यर्थः। श्रीमहाभारतेऽपीदृशः प्रयोगोऽस्ति। 'यथार्हं केशवे वृत्तिमवशाः प्रतिपेदिर' इति ॥ ५४ ॥

(विवरणम्)

अथ हरमहीधरयोः समागमप्रकारमाह—

ह्रीमानिति। हरेण कृतप्रणामः भूमिधरः ह्रीमान् अभूत्। हरेण परमेश्वरेण कृतः प्रणामो यस्मै तथाविधः भूमिधरः हिमवान् ह्रीमान् लज्जावानभूत्। श्वशुरत्वेन भाविनो हिमवतो गुरुत्वसम्भवात् तदुचिते नमस्कारे हरेण कृते सति अत्यन्तमनुचितं मयेदमङ्गीक्रियत इति हिमवतो लज्जा सञ्जातेत्यर्थः। लज्जायां हेतुमाह—त्रैलोक्यवन्द्येनेति। त्रैलोक्येन लोकत्रयेण वन्द्यस्त्रैलोक्यवन्द्यः। न केवलं मयैकेन, त्रैलोक्येनापि वन्द्यो मां नमति, मया चेदमिदानीमङ्गीक्रियत इति लज्जा सञ्जातेत्यर्थः। हरदर्शनोचितसमुदाचारस्तु पूर्वमेवावशेन हिमवता कृत इत्याह—सः हि पूर्वं तस्य महिम्ना दूराद् आवर्जितम् आत्मशिरः न विवेद इति। सः हिमवान्

---

१. 'रमाव' मुद्रितकोशपाठः.

तुशब्दार्थे हिशब्दः । पूर्वं हरप्रणामात् पूर्वम् । हरदर्शनसमय एवेत्यर्थः । तस्य हरस्य महिम्ना प्रभावेण दूरादावर्जितम् । अत्यन्तमानमितम् । दूरमावर्जितमिति पाठेऽपि स एवार्थः । आत्मशिरः आत्मनः शिरः न विवेद न ज्ञातवान् । हरदर्शनसमय एव हरप्रभावादात्मशिरः स्वयमेव प्रणतमासीत् । तत् त्वसौ न विवेदेत्यर्थः । ईदृशः प्रयोगो महाभारतेऽपि श्रूयते । यथा भगवतः श्रीकृष्णस्य दौत्यं कर्तुं सुयोधनगृहप्रवेशे 'यथार्हं केशवे वृत्तिमवशाः प्रतिपेदिरे' इति ॥ ५४ ॥

**स प्रीतियोगाद् विकसन्मुखश्री-**
**र्जामातुरग्रेसरतामुपेत्य ।**
**प्रावेशयन्मन्दिरमृद्धमेन-**
**मागुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥**

(प्रकाशिका)

**स** इति । अग्रेसरतामुपेत्य उत्सारणकर्मव्यापृत इत्यर्थः । मन्दिरं पुरम् । ऋद्धं मणिमुक्तादिचित्रितम्[2] । गुल्फौ पादग्रन्थिर्घुटिके ॥ ५५ ॥

(विवरणम्)

अथ भगवतः श्वशुरगृहप्रवेशं वर्णयति—

स इति । सः जामातुः अग्रेसरताम् उपेत्य एनं मन्दिरं प्रावेशयत् । सः हिमवान् जामातुः पुत्र्याः पतेः । 'जामाता दुहितुः पतिरि'त्यमरः । जामातृशब्दोऽयं भाविलक्षणया परमेश्वरमाह । अग्रे सरति गच्छतीत्यग्रेसरः तस्य भावस्तत्ता ताम् । उपेत्य प्राप्य । उत्सारणकर्म कृत्वेत्यर्थः । एनं परमेश्वरं मन्दिरं पुरं प्रावेशयत् प्रवेशयामास । गौरवातिशयात्

---

१. 'कीर्णापणमा' मुद्रितकोशपाठः. २. 'दिविचित्रम्' क. ख. ग. घ. पाठः ३. 'पु' ग. घ ङ. पाठः.

स्नेहातिशयाच्च स्वयमेव जनतामुत्सारयन् गिरिचक्रवर्ती परमेश्वरं निजगृहं प्रवेशयामासेत्यर्थः । परमेश्वराग्रेसरस्य हिमवतः प्रसादातिशयमाह — प्रीतियोगाद् विकसन्मुखश्रीः इति । प्रीत्या प्रसादेन योगः प्रीतियोगः तस्माद्धेतोः । विकसन्मुखश्रीः विकसन्ती वर्धमाना मुखश्रीः मुखशोभा यस्य तथा । हिमवत्पुरस्य परमेश्वरस्यापि विस्मयकरत्वमाह — ऋद्धमिति । मणिमुक्तादिचित्रितमित्यर्थः । भगवदागमनवेलायां पुरन्ध्रीणामादरातिशयमाह — आगुल्फगाढार्पितमार्गपुष्पमिति । गुल्फौ पादजङ्घायाः सन्धिपुटिके । आगुल्फं गुल्फपर्यन्तम् । अभिविधावाङ् । गाढं निबिडं यथा भवति तथार्पितं पुरन्ध्रीजनैर्विकीर्णं मार्गे पुष्पं मार्गविकरणीयं पुष्पं यत्र तत् । अनेन मन्दिरविशेषणद्वयेन हिमवतः समृद्ध्यतिशयः प्रीत्यतिशयश्च ध्वन्यते ॥ ५५ ॥

**तस्मिन् मुहूर्ते पुरसुन्दरीणा-**
**मीशानसन्दर्शनलालसानाम् ।**
**प्रासादमालासु बभूवुरित्थं**
**त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५६ ॥**

(प्रकाशिका)

तत्क्षणे पुरजनवृत्तान्तं सप्तभिः श्लोकैराह —

**तस्मिन्निति**[4] । इत्थमिति वक्ष्यमाणप्रकारपरामर्शः । त्यक्तान्यकार्याणीति लालसत्वमुपपादितम् । अत्र नायकोत्कर्षप्रतिपादनपरे प्रासङ्गिके पुराङ्गनावृत्तान्तोपवर्णने सम्भ्रमकृतमौत्सुक्यं भावः ॥ ५६ ॥

(विवरणम्)

भगवतः समागमनसमये पुरस्त्रीजनवृत्तान्तमाह सप्तभिःश्लोकैः । तत्राद्येन श्लोकेन तमेव सामान्येनाह —

---

१. 'स्त्री' क. ग. घ. ङ. पाठः. २ 'स्त्री' क. ख. ग. घ. च. पाठः. ३. 'त्र ।' क. ख. ग. घ. ङ. च. पाठः. ४. 'ति । एते च रघुवंशप्रकाशिकायां व्याख्यातास्तत एवावगन्तव्याः । तावदिति (श्लो. ६३) ।' ग. घ. ङ. पाठः.

तस्मिन्निति । तस्मिन् मुहूर्ते ईशानसन्दर्शनलालसानां पुरसुन्दरीणां प्रासादमालासु इत्थं विचेष्टितानि बभूवुः । तस्मिन् मुहूर्ते भगवतः पुरप्रवेश-समये । मुहूर्तशब्देन कालस्याल्पत्वं सूचयता क्षणान्तरे तद्दर्शनस्य दुर्लभत्व-प्रतिपादनमुखेन वक्ष्यमाणस्य सम्भ्रमस्योपपत्तिर्दर्शिता । ईशानः परमेश्वरः, तस्य सन्दर्शने सम्यग्दर्शने लालसा औत्सुक्यं यासां तासाम् । 'लालसे प्रार्थ-नौत्सुक्ये' इत्यमरः । पुरसुन्दरीणां पुरस्त्रीणाम् । प्रासादानां सौधानां मालासु समूहेषु । इत्थं वक्ष्यमाणप्रकारेण विचेष्टितानि विविधानि चेष्टितानि व्या-पाराः बभूवुः । ईशानसन्दर्शनलालसत्वमेव स्फुटयति—त्यक्तान्यकार्याणीति। त्यक्तानि उपेक्षितानि अन्यानि ईशानसन्दर्शनव्यतिरिक्तानि प्रकृतान्यतिप्रि-याण्यलङ्कारकार्याण्यपि यैः तादृशानि विचेष्टितानि बभूवुरित्यर्थः । पर-मेश्वरे साक्षादेव दर्शनपदवीमागते सति पुरवधूजनाः प्रकृतं प्रसाधनकार्य-मपहाय सत्वरं तद्दर्शनयोग्यं प्रासादजालमारुरुहुरित्यर्थः । अत्र पुरवधूवृत्तान्त-प्रकरणे सम्भ्रमोपकृतमौत्सुक्यं प्रतिपाद्यते ॥ ५६ ॥

**आलोकमार्गं सहसा व्रजन्त्या**
**कयाचिदुद्वेष्टनवान्तमाल्यः[1] ।**
**बन्धुं न सम्भावित एव तावत्**
**करेण रुद्धोऽपि च केशहस्तः[2] ॥ ५७ ॥**

(प्रकाशिका)

आलोकेति । आलोकमार्गं जालमार्गम् । सहसा अवि-चारितम् । उद्वेष्टनेन गमनरभसगलितबन्धत्वेन वान्तं निर्गतं माल्यं यस्य । न सम्भावितो नाकलितः स्मृतः । तावदालोकमार्गावधीत्यर्थः ।

---

१. 'मुपग' छ. पाठः. २. 'पाशः ॥' मुद्रितकोशपाठः.

केशहस्तः केशचयः। करेण रुद्धोऽपि न केशहस्त इति पाठे तावच्छब्देन क्रम उक्तः। केशहस्तस्तावद् बन्धुं न सम्भावित एव। स्वाधीनेन करतलेन रोधोऽप्यस्य न कृत इत्यर्थः ॥ ५७ ॥

(विवरणम्)

इत्थंशब्दोक्तान् प्रकारानेव प्रपञ्चयति पञ्चभिः श्लोकैः। तत्र कस्याश्चिदवस्थां दर्शयति[1] —

आलोकेति। सहसा आलोकमार्गे व्रजन्त्या कयाचित् करेण रुद्धः अपि च केशहस्तः तावद् बन्धुं न सम्भावितः एव। सहसा अविचारितम्। आलोकाय भगवदालोकनाय मार्गः[2] आलोकमार्गः तम्। गवाक्षमार्गमित्यर्थः। व्रजन्त्या गच्छन्त्या कयाचिन्नार्या करेण हस्तेन रुद्धोऽपि च निरुद्धः सन्नपि च। निरोधार्थं केशहस्तेषु हस्तव्यापारे कृतेऽपि च बन्धुं न सम्भावित इति विरोधं वक्तुमपिचेत्येवं शब्दद्वयम्। केशहस्तः केशचयः, प्रशस्तः केशो वा। 'हस्तयष्टिलतादयः प्रशंसावचना' इति वचनात्। अनेनात्यन्तमादरास्पदत्वेऽप्यनादरः सूच्यते। तावत् तदवधि। आलोकमार्गावधीत्यर्थः। बन्धुं बन्धनं विधातुं न सम्भावितः न ज्ञातः। न स्मृत इत्यर्थः। एवशब्दः स्मरणलेशमपि व्यावर्तयति। बन्धनाभावजातं दोषमाह — उद्वेष्टनवान्तमाल्य इति। उद्गतं वेष्टनं यस्य स तथा, अत एव वान्तमाल्यश्च। वान्तानि उद्गीर्णानि माल्यानि पुष्पाणि येन स तथा। अयमभिप्रायः — केशे कुसुमानि[3] निधाय केशाग्रैरेव किञ्चित् परिवेष्ट्य यावद् दाम्ना बन्धुमारभ्यते, तावद् भगवदागमनकोलाहलमाकर्ण्य प्रकृतं केशबन्धनं परित्यज्य सत्वरमुत्थाय प्रस्थितायाः कस्याश्चित् केशहस्ते गमनवेगवशाद् विगलितपरिवेष्टने सति केशकुसुमानि मार्गकुसुमतां प्रपेदिर इति ॥ ५७ ॥

१. 'वर्णय' छ. पाठः. २. 'गैः तम्। भगवदक्षिमार्गमि' क. च. पाठः. ३. 'दि' च. छ. पाठः.

प्रसाधिकालम्बितमग्रपाद-
माक्षिप्य काचिद् द्रवरागमेव ।
उत्सृष्टलीलागतिरा गवाक्षा-
दलक्तकाङ्कां पदवीं ततान ॥ ५८ ॥

(प्रकाशिका)

प्रसाधिकेति । अग्रपादमिति । 'राजदन्तादिषु परम्' (२. २. ३१) इत्युपसर्जनस्य पादपदस्य परनिपातः। तदपाठे 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्'(अधि. ५. अ. २. सू. २०) इति वामनोक्तदिशा परनिपातः । तेन 'पादाग्रं प्रपदमि'त्यमरसिंहवचनमपि संगतम् । द्रवरागमशुष्कलाक्षारसम् । लीला विलासः ॥ ५८ ॥

(विवरणम्)

अन्यस्याः समवस्थामाह —

प्रसाधिकेति । काचित् प्रसाधिकालम्बितम् अग्रपादम् आक्षिप्य गवाक्षाद् आ पदवीम् अलक्तकाङ्कां ततान । काचित् पुरवधूः प्रसाधिकयालङ्कर्त्र्यालम्बितं प्रसाधनार्थं गृहीतमग्रपादं पादाग्रम् । राजदन्तादिषु पाठादुपसर्जनभूतस्य पादपदस्य परनिपातः । अमरसिंहस्तु तस्मिन्ननन्तर्भावमभ्युपगम्य 'पादाग्रं प्रपद'मित्येवोक्तवान् । तन्मतेन तदपाठपक्षे 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदादि'ति वामनोक्तक्रमेण परनिपातः । आक्षिप्य बलादाकृष्य । प्रसाधिकाकरादिति शेषः । गवाक्षाद् वातायनाद् आ । मर्यादायामाङ् । पदवीं मार्गम् वातायनावधिभूतं मार्गमित्यर्थः । अलक्तकाङ्काम् अलक्तको लाक्षारस एवाङ्कः चिह्नं यस्याः तादृशीम् । ततान चकार । पदव्या अलक्तकाङ्कत्वकरणे हेतुं पादविशेषणेनाह — द्रव-

रागमेव इति । द्रवः अशुष्कः रागः लाक्षारसो यस्मिन् तादृशमेव । स्वाभाविकं सविलासयानमपि तदानीं सम्भ्रमात् परित्यक्तमित्याह — उत्सृष्टलीलागतिरिति । उत्सृष्टा त्यक्ता लीलया विलासेन गतिर्यया सा तथा ॥ ५८ ॥

विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ५९ ॥

(प्रकाशिका)

विलोचनमिति । दक्षिणमिति सम्भ्रमानुभावः । प्रसिद्धवामोपक्रमलङ्घनमुक्तम् । क्रमे तु किल प्रमाणं श्रुतिः । तेनाञ्जनेन वञ्चितं वामनेत्रं यया । प्रतिश्रुत्यादानं चात्र वञ्चनम् । यथाह भोजराजः —

"अदानं च प्रतिश्रुत्य विसंवादनमेव च ।
कालस्य हरणं चाहुः प्रत्यादानं च वञ्चनम् ॥"

इति । प्रतिश्रवश्च नेत्रयोरविशेषेणाञ्जनदानाध्यवसायः ॥ ५९ ॥

(विवरणम्)

अथापरस्याः सम्भ्रमातिशयमाह —

विलोचनमिति । अपरा दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य तथा एव वातायनसन्निकर्षं ययौ । अपरा पुरवधूः । आदौ दक्षिणं नेत्रम् अञ्जनेन सम्भाव्य मानयित्वा । सम्भ्रमस्यानुभावोऽयम्, अञ्जनविलेपने श्रुतिप्रसिद्धस्य वामोपक्रमस्यातिक्रमात् । तथैव, वामनयने किञ्चिदप्यञ्जनमनर्पयित्वेत्यर्थः । अनेन पुनरपि सम्भ्रमातिशय उक्तः । वातायनस्य गवाक्षस्य सन्निकर्षं समीपं ययौ । न केवलं तस्यास्तदानीं लोकवेदविरोधो दोषो

जातः, अपि तु वञ्चनादोषोऽपीत्याह — तद्वञ्चितवामनेत्रेति । तेनाञ्जनेन करणेन वञ्चितं वामनेत्रं यया सा तथा । प्रतिश्रुत्यादानमिह वञ्चनमुच्यते । यदाह भोजराजः —

"अदानं च प्रतिश्रुत्य विसंवादनमेव च ।
कालस्य हरणं चाहुः प्रत्यादानं च वञ्चनम् ॥"

इति । उभयोरपि नेत्रयोरविशेषेणाञ्जनार्पणस्य सङ्कल्पितत्वात् प्रतिश्रुत्यादानमिह सञ्जातम् । अञ्जनार्पणार्थमुद्धृतायाः शलाकायाः समर्पणमपि सम्भ्रमान्न कृतमित्याह — शलाकां वहन्तीति । शलाकामञ्जनार्पणसाधनं वहन्ती दधाना ॥ ५९ ॥

**जालान्तरप्रेषितदृष्टिरन्या**
**प्रस्थानभिन्नानवबद्धनीविः ।**
**नाभिप्रविष्टाभरणप्रभेण**
**हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥**

(प्रकाशिका)

जालेति । प्रस्थानेन भिन्ना स्रस्ता अनवबद्धा च नीविर्यस्याः । 'नीविराग्रन्थनं नार्या जघनस्थस्य वासस' इति नाममाला ॥ ६० ॥

(विवरणम्)

कस्याश्चिदौत्सुक्यातिशयमाह —

जालेति । अन्या प्रस्थानभिन्नानवबद्धनीविः हस्तेन वासः अवलम्ब्य तस्थौ । अन्या पुरसुन्दरी प्रस्थानेन भिन्ना स्रस्ता अनवबद्धा अकृतबन्धना च नीविर्यस्याः तथाभूता सती । 'नीविराग्रथनं नार्या जघनस्थस्य वाससः'

---

१. 'ना न बबन्ध नीवीम् ।' मुद्रितकोशपाठः.

इति नाममाला। हस्तेन करेण वासः वसनम् अवलम्ब्य गृहीत्वा तस्थौ। परमेश्वरदर्शनौत्सुक्यवशाद् गमनवेगगलितबन्धनाया नीव्या बन्धनमप्यकुर्वाणा हस्तेन वस्त्रमवलम्ब्यैव स्थितवतीत्यर्थः। तत्र हेतुमाह — जालान्तरप्रेषितदृष्टिरिति। जालस्य गवाक्षस्य। 'वातद्वारं गवाक्षः स्याज्जालं वातायनं तथे'ति भोजः। तस्यान्तरेण मध्येन प्रेषिता प्रेरिता दृष्टिर्यया सा तथा। औत्सुक्यातिशयकृतं हस्तस्यापि निश्चलत्वमाह — नाभिप्रविष्टाभरणप्रभेणेति। नाभौ प्रविष्टा प्राप्ता आभरणस्य पर्युप्तरत्नस्य कटकस्य प्रभा यस्य तादृशेन हस्तेन। नहि हस्तस्य किञ्चिच्चलने सति कटकरत्नप्रभा नाभिकुहरं प्रविशति ॥ ६० ॥

**अर्धाचिता सत्वरमुत्थिताया:**
**पदे पदे दुर्निमिते गलन्ती।**
**कस्याश्चिदासीद् रशना तदानी-**
**मङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥**

(प्रकाशिका)

अर्धेति। आचयनं गुम्फनम्। दुर्निमिते दुःखेन न्यस्ते। 'डुमिञ् प्रक्षेप' इति धातुः। गलन्ती गलन्मणिरित्यर्थः। उपविश्य प्रसारितपदाङ्गुष्ठमूलसंयमितैकदेशे सूत्रे रशनामणीन् ग्रथ्नत्यास्तदागमनश्रवणरभसोत्थिताया गच्छन्त्या योषितः तदनुबन्धवशेन दुःखन्यस्तेषु पदेषु क्रमशो गलन्मणे रशनायाः सूत्रमेवावशिष्टमासीदित्यर्थः ॥ ६१ ॥

(विवरणम्)

अन्यस्याः सम्भ्रमवशाद् रशनापरित्यागोऽपि जात इत्याह —

अर्धेति। तदानीं कस्याश्चिद् रशना अङ्गुष्ठमूलार्पितसूत्रशेषा

आसीत्। रशना काञ्ची अङ्गुष्ठस्य पादाङ्गुष्ठस्य मूले अर्पितं बद्धं सूत्रमेव शेषमवशिष्टं यस्याः सा तथा। सूत्रमात्रावशेषत्वप्राप्तौ हेतुमाह — अर्धाचितेत्यादिना। अर्धाचिता अर्धमाचिता गुम्फिता। कुत्राप्युपविश्य रशनामणिगुम्फनार्थं पादाङ्गुष्ठे सूत्रैकदेशमुपनिबध्य पादं प्रसार्य रशनामणीनामर्धगुम्फनमनेनोक्तम्। पुनश्च हरगमनकोलाहलश्रवणात् सत्वरमुत्थितायाः। सत्वरमित्युत्थानक्रियाविशेषणम्। त्वरासहितं यथा भवति तथा कृतोत्थानायाः। अत एव पदे पदे गलन्ती। पदे पदे सर्वेष्वपि पदावस्थानेषु। गलन्ती गलन्मणिरित्यर्थः। रशनानुबन्धवशात् पादावस्थानस्यापि सौकर्याभावमाह— दुर्निमित इति। दुःखेन निमिते न्यस्ते। 'डुमिञ् प्रक्षेपण' इति धातुः। अत्र बहुमणिगणाकीर्णाया रशनायाः परित्यागस्य रशनानुबन्धवशात् पदानां दुर्निमितत्वस्य चाज्ञानमौत्सुक्यस्यानुभावः, सत्वरोत्थानं तु सम्भ्रमस्येति विभागः॥ ६१॥

**तासां मुखैरासवगन्धगर्भै-**
**र्व्याप्तान्तराः सान्द्रकुतूहलानाम्।**
**विलोलनेत्रभ्रमरैर्गवाक्षाः**
**सहस्रपत्राभरणा[2] इवासन्॥ ६२॥**

(प्रकाशिका)

**तासामिति।** व्याप्तान्तराः निरवकाशीकृता इत्यर्थः। सान्द्रकुतूहलानामिति व्याप्तान्तरालत्वे हेतुः। मुखस्य विशेषणद्वयेन कमलसादृश्यं द्योत्यते। तच्चोत्प्रेक्षाया हेतुः। सहस्रपत्रमयमावरणं कपाटं येषाम्। तद्भावस्य चोत्प्रेक्षा। मुखानां च निश्चलत्वप्रतीतिः॥ ६२॥

(विवरणम्)

इत्थमुपगतानां पुरसुन्दरीणां परमेश्वरदर्शनप्रकारं भङ्ग्यन्तरेणाह —

---

१. 'षप्रा' क. च. पाठः. २. 'भ' मुद्रितकोशपाठः.

तासामिति । तासां मुखैः व्याप्तान्तराः गवाक्षाः सहस्रपत्रावरणाः इव आसन् । तासां पुरसुन्दरीणां मुखैर्वदनैः । व्याप्तान्तराः[3] व्याप्तं निरवकाशीकृतमन्तरं मध्यं येषां ते तथा । गवाक्षाः वातायनानि । सहस्रं पत्राणि दलानि सन्त्यस्येति सहस्रपत्रं कमलम् । सहस्रशब्दश्चायं बहुसङ्ख्यापरः, न सहस्रसङ्ख्यापरः । सहस्रपत्रमयमावरणं कवाटं येषां तथाविधा इवासन् । अत्र गवाक्षाणां सहस्रपत्रावरणत्वमुत्प्रेक्ष्यते । मुखानां मनोहरत्वमुत्प्रेक्षाहेतुः । निश्चलत्वप्रतीतिः फलम् । तेन च दर्शनौत्सुक्यं ध्वन्यते । मुखस्य कमलसाम्यमेव विशेषणद्वयेन दर्शयन्नुत्प्रेक्षायां हेतुमेव प्रकटयति — आसवगन्धगर्भैरित्यादिना[2] । आसवस्य मधुनः गन्धः गर्भे अन्तर्भागे येषां तैः । तथा विलोलनेत्रभ्रमरैः विलोलानि चञ्चलानि नेत्राणि नयनान्येव भ्रमराः भृङ्गाः येषु तैः । गवाक्षाणां[3] तन्मुखव्याप्तान्तरालत्वे हेतुमाह — सान्द्रकुतूहलानामिति । सान्द्रं निबिडं कुतूहलं कौतुकं यासां तासाम् ॥ ६२ ॥

**तावत् पताकाकुलमिन्दुमौलि-**
**रुत्तोरणं राजपथं प्रपेदे ।**
**प्रासादशृङ्गाणि दिवापि कुर्व-**
**ञ्ज्योत्स्नाभिषेकद्विगुणच्छवीनि[4] ॥ ६३ ॥**

(प्रकाशिका)

**तावदिति** । द्विगुणच्छवीकरणं प्रागेव सुधाधवलत्वात् । अत्रोपपादकमिन्दुमौलित्वम् ॥ ६३ ॥

(विवरणम्)

इत्थं पुरवधूवृत्तान्तमुपसंहृत्य प्रकृतं भगवद्वृत्तान्तमेव प्रस्तौति —

तावदिति । इन्दुमौलिः तावद् राजपथं प्रपेदे । इन्दुमौलिश्चन्द्रशे-

---

१. 'व्याप्त' छ. पाठः. २. 'रिति । आ' क. पाठः. ३. 'णामन्तर्मुख' क. पाठः.
४. 'द्युतीनि' मुद्रितकोशपाठः.

खरः । तावद् यावदेवं[1] पुरवधूवृत्तान्तः प्रस्तुतः तावदित्यर्थः । राजपथं राजमार्गं प्रपेदे प्राप्तवान् । राजपथस्य मङ्गलोपकरणरमणीयत्वमाह — पताकाकुलम् इति । पताकाभिराकुलं संकुलम् । तथा उत्क्षिप्ततोरणमित्यर्थः । भगवदागमनप्रत्युत्पन्नं शोभाधिक्यमाह — दिवापि प्रासादशृङ्गाणि ज्योत्स्नाभिषेकद्विगुणच्छवीनि कुर्वन् इति । दिवेत्यह्नो वाचकमव्ययम् । अह्न्यपीत्यर्थः । प्रासादानां सौधानां शृङ्गाणि शिखराणि । ज्योत्स्नया[2] चन्द्रिकया योऽभिषेकः सङ्क्षालनं तेन द्विगुणा वर्धिता छविः शोभा येषां तथाविधानि कुर्वन् सम्पादयन् । भगवत इन्दुमौलित्वमत्र हेतुः । अत एवेन्दुमौलिरित्युक्तम्[3] । भगवत्कोटीरगतस्य तस्य तत्प्रभावादेव दिवापि ज्योत्स्नाप्रसारणोपपत्तिः । प्रागेव सुधाधवलानि प्रासादशृङ्गाणि शिरश्चन्द्रचन्द्रिकया द्विगुणितधावल्यानि कुर्वन् परमेश्वरो राजमार्गमाससादेत्यर्थः ॥ ६३ ॥

तमेकदृश्यं नयनैः पिबन्त्यो
नार्यो न जग्मुर्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां
विनोपघातेन[4] जडीबभूव ॥ ६४ ॥

(प्रकाशिका)

तमिति । एकदृश्यं दर्शनीयेषु प्रधानम् । पानोपचारेण तृष्णातिशयो ध्वन्यते । विषयान्तराणि शब्दादीनि । एतदुपपादयति — तथाहीति । वृत्तिः श्रवणादिरूपो व्यापारः । विनोपघातेन शक्तिनिरोधमन्तरेण । जडीबभूव कुण्ठिताभवत् । देवदर्शनसमये लोचनकिङ्करीभावमुपगते मनसि ततश्च कुण्ठेषु शेषेन्द्रियव्यापारेषु सन्निहितान्यपि विषयान्तराणि पुराङ्गना नाजानन्नित्यर्थः ॥ ६४ ॥

---

१. 'तू पु' क. च पाठः. २. 'या भगवतः च' छ. पाठः. ३. 'क्तः ।' क. च. पाठः. ४. 'सर्वात्मना चक्षुरिव प्रविष्टा ॥' मुद्रितकोशपाठः.

(विवरणम्)

अथ पुरवधूनां भगवद्दर्शनौत्सुक्यं वर्णयति —

तमिति । एकदृश्यं तं नयनैः पिबन्त्यः नार्यः विषयान्तराणि न जग्मुः । एकं प्रधानभूतं दृश्यं दर्शनीयम् । दर्शनीयेषु प्रधानभूतमित्यर्थः । तं परमेश्वरं नयनैः नेत्रैः । पिबन्त्यः सतृष्णमवलोकयन्त्य इत्यर्थः । यथा पिपासार्दिता जनाः सलिलं सतृष्णं पिबन्ति, तथावलोकयन्त्य इति दर्शने पानोपचारस्याभिप्रायः । एकदृश्यत्वमत्र हेतुः । नार्यः पुरसुन्दर्यः विषयान्तराणि शब्दादीनि । भगवद्रूपव्यतिरिक्तं रूपमिन्द्रियान्तरविषयभूतं शब्दस्पर्शगन्धरसंप्रपञ्चेष्वित्यर्थः । न जग्मुः नाधिगतवत्यः । तत्तदिन्द्रियैस्तत्तद्विषयं न जगृहुरित्यर्थः । एतदेवोपपादयति — तथाहीत्यादिना । तथाहि आसां शेषेन्द्रियवृत्तिः उपघातेन विना जडीबभूव । तथाहि तेन प्रकारेण वर्तमानत्वादित्यर्थः । आसां पुरसुन्दरीणां शेषाणाम् अवशिष्टानामिन्द्रियाणां नेत्रव्यरिक्तानां श्रोत्रादीनां वृत्तिः श्रवणादिरूपा प्रवृत्तिः । उपघातेन विना शक्तिव्याघातमन्तरेण जडीबभूव । अभूततद्भावे च्विः । अकुण्ठितापि कुण्ठिताभवदित्यर्थः । परमेश्वरदर्शनोपक्षीणे चक्षुषि चित्ते च तत्सहायताप्राप्तिमात्रकृतार्थे मनःसहायवैधुर्यात् परिक्षीणशक्तिषु श्रोत्रा(द?द्य)न्येन्द्रियेषु पुरवधूजनाः सन्निहितमपि विषयान्तरं नाधिजग्मुरित्यर्थः ॥ ६४ ॥

**स्थाने तपो दुश्चरमेतदर्थ-**
**मपर्णया पेलवयापि तप्तम् ।**
**या दास्यमप्यस्य लभेत नारी**
**सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥ ६५ ॥**

(प्रकाशिका)

अथ तासामुक्तीराह —

---

१. 'सरूपप्र' क. पाठः. २. 'न ग' क. च. पाठः.

**स्थान** इति । एतच्छब्दः साक्षात्क्रियमाणविश्वोत्तरसकलगुणविशिष्टतया वस्तु परामृशति । अङ्कमुरः[1] । परमेश्वरदास्यमुपगतः पुरुषः स्त्री वा परमपुरुषार्थभाजनं भवेदिति कवेरभिप्रायः ॥ ६५ ॥

( विवरणम् )

इत्थं परमेश्वरदर्शनव्यापृतानां पुरसुन्दरीणामुक्तिप्रकारः श्लोकत्रयेणोच्यते । तत्रादौ सुकुमाराया देव्यास्तत्तादृशतपश्चरणानुसन्धानजनितस्य निजहृदये शल्यवदवस्थितस्य दुःखस्य निवृत्तिं भङ्ग्यन्तरेणाहुः[3] :—

**स्थान** इति । अपर्णया एतदर्थं दुश्चरं तपः अभितप्तं स्थाने । अपर्णाशब्देनात्र पूर्वोक्तं महत्तरं तपश्चरणमनूद्यते । एतदर्थम्, अत्रैतच्छब्देन लोकोत्तरगुणविशिष्टतया साक्षात्क्रियमाणं भगवत्स्वरूपं परामृश्यते । एतादृशपरमेश्वरप्राप्त्यर्थमित्यर्थः । दुश्चरम् अत्यन्तदुष्करमित्यर्थः । अभितप्तं कृतं, तपतिः सकर्मकः करोत्यर्थे वर्तते इति न्यायात् । स्थाने इत्यव्ययं युक्तमित्येतस्मिन्नर्थे । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । एतत्प्राप्तये पार्वत्या स्वयं विशीर्णानि पर्णान्यपास्य दुश्चरं तपस्तप्तमिति यत्, तद् युक्तमेवेत्यर्थः । तादृशतपश्चरणे देव्याः शरीरपाटवाभावमाहुः[6] :— पेलवयेति । प्रकृत्या मृद्वङ्ग्येत्यर्थः । अत्रार्थादपिशब्दो द्रष्टव्यः । 'तदानपेक्ष्य स्वशरीरमार्दवं तपो महत् सा चरितुं प्रचक्रमे' (स. ५. श्लो. १) इत्यत्रोक्तोऽर्थोऽनेन दर्शितः । युक्तत्वमेवोपपादयति— येत्यादिना । या नारी अस्य दास्यमपि लभेत सा कृतार्था स्याद्, अङ्कशय्यां किमुत । या नारी अस्य परमेश्वरस्य दास्यं दासीभावमपि लभेत प्राप्नुयात् सा नारी कृतार्था कृतकृत्या भवेत् । या पुनः अङ्कश्याम् अङ्के उरसि । 'अङ्कश्चिह्नेऽन्तिकोरसो'रिति यादवः । शय्यां शयनं लभेत, सा

---

१. 'रः यः प' क. ग. पाठः. २. 'ा स प' क. ग. पाठः. ३. 'हु' क. च. पाठः. ४. 'ति यु', ५. 'र्थेऽव्ययम् ।' छ. पाठः. ६. 'हु' क. च. पाठः.

किमुत किमुच्यते इत्यर्थः। एतादृशस्यास्य दास्यमपि या नारी लभेत[1], सा कृतार्थैव भवति। या पुनरस्य सुरतपरिश्रमादुरसि शयनमेव लभेत[2], सा कृतार्थेति किं वक्तव्यमित्यर्थः। अत्र परमेश्वरदास्यमुपगतो जनः परमपुरुषार्थभाजनं भवतीति कवेर्निगूढोऽभिप्रायः ॥ ६५ ॥

$ न नूनमारूढरुषा शरीर-
मनेन दग्धं कुसुमायुधस्य।
व्रीलादमुं देवमुदीक्ष्य मन्ये
सन्न्यस्तदेहः स्वयमेव कामः ॥ ६६ ॥

(प्रकाशिका)

नेति। आरूढरुषा अनेन कुसुमायुधस्य शरीरं दग्धमिति प्रसिद्धि[3]मनूद्य नेति निषिध्यते। किन्तर्हीत्याह— व्रीलादिति। अत्र वामनसूत्रम्— 'अविधौ गुरोः स्त्रियां बहुलं विवक्षा' (अधि० ५. अ० २. सू० ४२) इति। तस्य चायं वृत्तिग्रन्थः अविधावकारविधाने 'गुरोश्च हलः' (३.३.१०३) इति स्त्रियां बहुलं विवक्षा क्वचिदविवक्षा क्वचिद्विवक्षा क्वचिदुभयमिति। विवक्षा यथा ईहा लज्जेति। अविवक्षा यथा आतङ्क इति। विवक्षाविवक्षे यथा बाधा बाधः, ऊहा ऊहः, व्रीला व्रील इति ॥ ६६ ॥

---

१, २. 'भते, सा' छ. पाठः. ३. 'द्ध' ङ. पाठः. ४. 'रै' ग. पाठः. ५. 'ज्ञा।' ङ. पाठः.

---

$ इतः पूर्वं मुद्रितपुस्तके—

"परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥"

इत्यर्थं श्लोकोऽधिको दृश्यते।

(विवरणम्)

उक्तमर्थमुपपादयितुं परमेश्वरस्य लावण्यातिशयमाहुः—

नेति । अनेन आरूढरुषा कुसुमायुधस्य शरीरं न दग्धं नूनम् । अनेन एतादृशशृङ्गारात्मकेन । अनेन शृङ्गाररौद्रयोरत्यन्तविरुद्धत्वात् कामदहनानुपपत्तिरुक्ता । आरूढा अधिष्ठिता रुट् कोपो येन तथाविधेन सता । कुसुममेव आयुधं यस्य तस्य कामदेवस्य । अनेन तस्याशक्तत्वात् कोपाविषयत्वमुक्तम् । शरीरं न दग्धम् । नूनंशब्दो निश्चये । असौ कोपमधिष्ठाय कुसुमायुधस्य शरीरं भस्मसादकरोदिति हि लोकप्रसिद्धिः । तत्तु शृङ्गाररौद्रयोरत्यन्तविरुद्धत्वादत्यन्ताशक्ते कुसुमायुधेऽस्य कोपानुपपत्तेश्च नेति वयं निश्चिनुम इत्यर्थः । कथं तर्हि कामदेवो विनष्टोऽभूदत आहुः—कामः अमुं देवम् उदीक्ष्य व्रीलात् स्वयम् एव सन्न्यस्तदेहः मन्ये इति । कामः कामदेवः अमुं कामदेवशरीरलावण्यपरिभाविशरीरलावण्यतया दृश्यमानं देवं दीप्यमानम् उदीक्ष्य अवलोक्य व्रीलात् लज्जाया हेतोः । ननु व्रीलाशब्दः स्त्रीलिङ्गतयैव लोके प्रसिद्धः । अतः कथं व्रीलादित्युक्तम् । उच्यते । 'अविधौ गुरोः स्त्रियां बहुलं विवक्षा' इति वामनसूत्रम् । तद्वृत्तिकारेण चैतत् सूत्रमेवं व्याख्यातम्— अविधावकारविधाने 'गुरोश्च हल' इति स्त्रियां बहुलं विवक्षा, क्वचिद् विवक्षा क्वचिदविवक्षा क्वचिदुभयमिति । तत्रोदाहरणानि चैवमुक्तवान्— विवक्षा यथा ईहा लज्जेति । अविवक्षा यथा आतङ्क इति । विवक्षाविवक्षे यथा बाधा बाधः, ऊहा ऊहः, व्रीला व्रील इति । स्वयमेव न त्वस्य तस्मिन् कर्मणि व्यापारलेशोऽपीति भावः । सन्न्यस्तः सम्यङ् न्यस्तः उपेक्षितो देहो येन स तथा । अत्र पुरसुन्दरीणां बहुत्वेऽपि मन्य इत्येकवचनप्रयोगः प्रत्येकमेकत्वविवक्षयेत्यवगन्तव्यम् । अत्यन्तसुन्दरमस्य शरीरमवेक्ष्य सञ्जातलज्जः कामदेवः स्वयमेव स्वशरीरं योगाग्निना भस्मसादकरोदिति मन्यामह इत्यर्थः । अनेन श्लोकेन पुरसुन्दरीणां स्वपक्षभूतस्य मन्मथस्य मारणेन जनिताया भगवद्विषयायां असूयायाः प्रशमो दर्शितः ॥ ६६ ॥

अनेन सम्बन्धमवाप्य दिष्ट्या
मनोरथप्रार्थितमीश्वरेण ।
मूर्धानमालि! क्षितिधारणोच्च-
मुच्चैस्तरां वक्ष्यति शैलराजः ॥ ६७ ॥

(प्रकाशिका)

अनेनेति। दिष्ट्येति हर्षद्योतकमव्ययम्। मनोरथैः सङ्कल्पैः प्रार्थितं विषयीकृतम्। चिराभिलषितमित्यर्थः। ईश्वरेणेति तत्सम्बन्धस्य महार्घता दुरवापता च ध्वन्यते। उच्चमभिमानोदग्रम्। वक्ष्यतीति वहेर्लृटि रूपम्। अत्र प्रथमेन श्लोकेन प्रथमं यद् देव्यास्तादृशतपश्चरणानुसन्धानजं दुःखं तत्सा[1]कुमार्यवेदिनीनां पुराङ्गनानां हृदि शल्यायमानमासीत्, तत् तदानीं देवदर्शनेनापनीतमिति प्रतीयते। द्वितीयेन तासां स्वपक्षभूतमन्मथमारण-समुत्थभगवद्विषयासूयाप्रशमः, तृतीयेन स्वाम्यभ्युदयाभिनन्दनद्वारेण तद्विषयोऽनुरागः ॥ ६७ ॥

(विवरणम्)

अथैतादृशेन भगवता सञ्जातसम्बन्धस्य स्वामिनो हिमवतः प्रकृष्टतरमभ्युदयमभि-नन्दमानाः* स्वामिभक्तिं प्रदर्शयन्ति—

अनेनेति। आलि! शैलराजः ईश्वरेण अनेन सम्बन्धम् अवाप्य क्षि-तिधारणोच्चं मूर्धानम् उच्चैस्तरां वक्ष्यति दिष्ट्या। आलि! हे सखि! शैलराजः हिमवान् ईश्वरेण त्रैलोक्यनाथेन। अनेन तत्सम्बन्धस्यात्यन्तमहत्त्वं दुरवापत्वं च द्योत्यते। तेन च मूर्धानमुच्चैस्तरां वक्ष्यतीत्यत्र हेतुः प्रदर्शितः। अनेन पुर-तो दृश्यमानेन। सम्बन्धप्राप्तेरासन्नत्वमनेन द्योत्यते। क्षितेर्भूमेर्धारणेन उद्ध-रणेन उच्चमभिमानोदग्रं मूर्धानं शिरः उच्चैस्तराम् अत्युन्नतत्वेन वक्ष्यति वहनं करिष्यति। 'वह प्रापण' इति धातोर्लृटि रूपम्। शैलराजोऽयम-

१. 'मुपेत्य दि' मुद्रितकोशपाठः.

* ताच्छील्ये चानश्।

न्यैरत्यन्तदुष्करस्य क्षितिमण्डलधारणस्यानायासेन क्रियमाणत्वादिदानीमेवा-भिमानोन्नतमात्मशिरः परमेश्वरसम्बन्धलाभानन्तरमत्युन्नतत्वेन वक्ष्यतीत्यर्थः । दिष्ट्येति हर्षद्योतकमव्ययम् । अहो वयमिदानीं भाग्यवत्यो जाता इति भावः । निजसुताया यौवनोद्भेदकालादारभ्यैतावन्तं कालमस्मत्स्वामिना प्रा-र्थितोऽयं सम्बन्ध इत्याह — मनोरथप्रार्थितमिति । मनोरथैः सङ्कल्पैः प्रार्थितं विषयीकृतम् । चिराभिलषितमित्यर्थः । 'तस्थौ निवृत्तान्यवराभिलाषः' (स. १. श्लो. ५१) 'अथानुरूपाभिनिवेशतोषिणा' (स. ५. श्लो. ७) इत्यादिषु स्फुटतरोऽयमर्थः ॥ ६७ ॥

**इत्योषधिप्रस्थविलासिनीनां**
**शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।**
**केयूरचूर्णीकृतलाजमुष्टि-[1]**
**र्हिमालयस्यालयमाससाद ॥ ६८ ॥**

(प्रकाशिका)

उपसंहरति —

इतीति । इतिः प्रकारे, एवंप्रकारा अन्या अपीत्यर्थः । श्रोत्रसुखत्वं रमणीयनानाभावप्रकाशकत्वात् । केयूरेति जनसंबाध उक्तः । अंसैरंसावघट्टने हि केयूरचूर्णीकृतत्वमाचारलाजानां भवति । मुष्टिपरिमिता लाजा लाजमुष्टिः ॥ ६८ ॥

(विवरणम्)

पुरवधूवृत्तान्तमुपसंहृत्य भगवतो हिमवत्पुरप्राप्तिप्रकारमाह —

---

१. 'ष्टिं हि' मुद्रितकोशपाठः.

इतीति । त्रिनेत्रः ओषधिप्रस्थविलासिनीनाम् इति कथाः शृण्वन् हिमालयस्य आलयम् आससाद । त्रिनेत्रः परमेश्वरः ओषधिप्रस्थे हिमवत्पुरे या विलासिन्यः स्त्रियः तासाम् । इतिशब्दः प्रकारवाची । एवम्प्रकारा अन्याश्चेत्यर्थः । कथाः वाचः शृण्वन् आकर्णयन् सन् हिमवतः भवनम् आससाद प्राप्तवान् । कथानां मनोहरत्वमाह — श्रोत्रसुखाः । श्रोत्रयोः कर्णयोः सुखकराः । सुखकरत्वं च स्तुतिरूपत्वाद् रमणीयनानाभावप्रकाशकत्वाच्च । पुरप्रवेशसमये जनसम्बाधं स्वभावोक्त्या प्रकाशयति — केयूरचूर्णीकृतलाजमुष्टिरिति । केयूरेण अङ्गदेन चूर्णीकृता[1] चूर्णत्वं प्रापिता लाजमुष्टिः मुष्टिपरिमिता लाजा येन स तथा । अनेन सम्मर्द उक्तः । भगवतः पुरप्रवेशसमये[2] पुरवधूजनैरवकीर्णानां लाजानां केयूरसङ्घट्टनेन चूर्णीभावो यथा भवति, तथा तत्र जनसम्मर्दवशात् परस्परमंसेनांसावघट्टनं जातमित्यर्थः ॥ ६८ ॥

ततोऽवतीर्याच्युतदत्तहस्तः
शरद्घनाद् दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन
कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ६९ ॥

(प्रकाशिका)

तत[3] इति । अत्राप्यच्युते सख्यं कमलासने मान्यत्वं प्रतीयते । अवतीर्येत्यनेन पूर्वं वाहनादनवतीर्ण एव देवः श्वशुरप्रणामं कृतवानिति प्रतीयते ॥ ६९ ॥

(विवरणम्)

अथ भगवतो वाहनावतारं प्रदर्शयन् भवनान्तःप्रवेशमाह —

तत इति । ततः सः दीधितिमान् शरद्घनादिव उक्ष्णः अवतीर्य अद्रि-

---

१. 'तां' च. छ. पाठः. २. 'ये व' क. पाठः. ३. 'त्रेति' छ. पाठः.

पतेः कक्ष्यान्तराणि विवेश । ततः हिमालयभवनप्राप्त्यनन्तरं दीधितिमाना-दित्यः शरत्कालमेघादिव उक्ष्णः स्ववाहनभूताद् वृषाद् अवतीर्य कृता-वतारः सन् अद्रिपतेः हिमवतः कक्ष्यान्तराणि कक्ष्याविशेषान् विवेश प्रविष्टवान् । अत्रावतरणमात्र एवोपमा । शरद्घनवृषयोर्गौरत्वं महा-प्रमाणत्वं च साधारणो धर्मः, तेजस्वित्वं परमेश्वरदीधितिमतोः । यथा शर-द्घनाद् दीधितिमानवतरति, तथा वृषादवतीर्येत्यर्थः । परमेश्वरस्य वाहनादव-तारे भगवतो नारायणस्य सख्योचितां प्रवृत्तिमाह — अच्युतदत्तहस्त इति । अच्युतेन नारायणेन दत्तो हस्तो यस्मै । अच्युतेन दत्तं हस्तमवलम्ब्यावतीर्ये-त्यर्थः । भगवतः पुरप्रवेशे कमलासनस्य माननीयत्वोचितां प्रवृत्तिमाह — कमलासनेन पूर्वं क्रान्तानि इति । कमलासनेन ब्रह्मणा । पूर्वम्, अग्रेगच्छ-तेत्यर्थः । क्रान्तानि । 'क्रमु पादविक्षेपे' इत्यस्माद् धातोर्निष्ठान्तमिदं रूपम् । कृतपदविन्यासानीत्यर्थः । भगवता सबहुमानमग्रेसरतां प्रापितेन परमेष्ठिना पूर्वमुपगतानि कक्ष्यान्तराणि हरः[2] स्वयमेव पश्चादाविवेशेत्यभिप्रायः ॥ ६९ ॥

तमन्वगिन्द्रप्रमुखाश्च देवाः
सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्यालयमन्वगच्छन्[3]
प्रशस्तमारम्भमिवोत्तमार्थाः[4] ॥ ७० ॥

(प्रकाशिका)

तमिति । अन्वगनुपदम् । आसन्नमित्यर्थः । अनेनानुगमने[5] तेषा-महमहमिका द्योत्यते । सप्तर्षयः पूर्वे पुरस्सरा येषाम् । आरम्भमनुष्ठा-

---

१. 'रवत्वं' क. पाठः. २. 'णि परमेश्वरः' ख. छ. पाठः. ३. 'भ्यग', ४ 'प्रश-स्तमा' मुद्रितकोशपाठः. ५. 'न्वगम' क. ख. ग. पाठः.

नम् । उत्तमोऽर्थः प्रयोजनं येषाम् । महेच्छा इत्यर्थः । अत्रोपमानेनानुग-मने तेषां सादरत्वं द्योत्यते ॥ ७० ॥

(विवरणम्)

इन्द्रादीनां हिमवद्भवनप्राप्तिमाह—

तमिति । इन्द्रप्रमुखाः देवाः च सप्तर्षिमुख्याः परमर्षयः (च) गणाः च तम् अन्वग् गिर्यालयम् अन्वगच्छन् । इन्द्रो महेन्द्रः प्रमुखः प्रधानं येषां ते देवाश्च । सप्तर्षिमुख्याः सप्तर्षिप्रमुखाः । सप्तर्षिपूर्वा इति पाठे सप्तर्षयः पूर्वे पुरस्सरा येषामिति विग्रहः । परमा उत्कृष्टा ऋषयश्च गणा भूतगणाश्च तं परमेश्वरम् । अन्वग् अनुपदम् । प्रत्यासन्नमित्यर्थः । अनुगमनक्रियाविशेषणं चेदम् । अनेन तेषामहमहमिकयानुगमनं द्योत्यते । गिरेः हिमवतः आलयं गृहम् अन्वगच्छन् अनुगमनं कृतवन्तः । तत्रादौ प्राधान्यादिन्द्रस्य, तद-नन्तरमन्येषां देवानां, पुनश्च सप्तर्षीणाम्, अनन्तरमितरेषाम् ऋषीणां, पश्चात् तु भूतगणानामनुगमनमिति प्राधान्यक्रमोऽत्र विवक्षितः । परमेष्ठी पुनरतिप्राधान्यादग्रेसरतामुपगतः । नारायणस्तु सख्यातिशयेन हस्तग्रहणमेव गत इति 'अच्युतदत्तहस्तः' (श्लो. ७०) इत्यनेन द्योत्यते । एतेषां भगवदनुग-मनमुपमिनोति—उत्तमार्थाः यशस्यम् आरम्भम् इव इति । उत्तमोऽर्थः प्रयो-जनं येषां ते तथा । महेच्छाः, महान्त इति यावत् । नहि महतां क्षुद्रेषु प्रयोजनेष्वाकाङ्क्षा भवति । यशसे हितं यशस्यम् आरम्भं व्यापारमिव । यथा महान्तो यशस्करं कर्मानुवर्तन्ते, तथेत्यर्थः । अनेनोपमानेन तेषामनु-गमनादरो द्योत्यते ॥ ७० ॥

तत्रेश्वरो विष्टरभाग् यथावत्
सरत्नमर्घ्यं मधुमच्च गव्यम् ।

---

१. 'प्राहमे' छ. पाठः. २. 'व । उ' छ. पाठः.

नवे दुकूले च नगोपनीतं
प्रत्यग्रहीत् सर्वममन्त्रवर्जम् ॥ ७१ ॥

(प्रकाशिका)

तत्रेति । तच्छब्देनात्र व्यवहितोऽप्यौचित्यादालयः परामृश्यते । विष्टरभाग् मधुपर्कप्रदानार्थं दत्ते विष्टरे निषण्णः । अर्घ्यम् अर्घार्थं जलम् । गव्यमत्र दधि विवक्षितम् । यथा(हा)श्वलायनः— 'दधि मध्वानीय सर्पिर्वा मध्वलाभे' इति । नगोपनीतमिति युक्तः पाठः । अमन्त्रवर्जं मन्त्रसहितम् ॥ ७१ ॥

(विवरणम्)

इत्थमुपगतभवनस्य भगवतो मधुपर्का[1]द्युपायनमाह —

तत्रेति । ईश्वरः तत्र विष्टरभाक् सरत्नम् अर्घ्यं मधुमद् गव्यं नवे दुकूले च सर्वं नगोपनीतम् अमन्त्रवर्जं यथावत् प्रत्यग्रहीत् । ईश्वरः परमेश्वरः तत्र गिर्यालये । विष्टरमासनविशे[2]षः, तद् भजतीति विष्टरभाक् । मधुपर्कप्रदानार्थं दत्ते विष्टरे उपविश्येत्यर्थः । सरत्नं रत्नसहितम् । नवरत्नादिभिः पवित्रितमित्यर्थः । अर्घः पूजा, तदर्थं जलमर्घ्यम् । मधुमद् मधु माक्षिकं तत्सहितम् । गव्यमत्र दधि विवक्षितम् । तदुक्तमाश्वलायनगृह्ये— 'दधि मध्वानीय सर्पिर्वा मध्वलाभे' इति । दधिमिश्रं मधु मधुपर्कमित्युच्यते । नवे अभिनवे दुकूले परिधानीयोत्तरीयवसने । चशब्दः समुच्चयार्थः । सर्वशब्देन पूर्वोक्तमर्घ्यादिवस्तुजातं परामृश्यते । नगेन हिमवतोपनीतं समीपं प्रापि[3]तं सत् । अमन्त्रवर्जमिति प्रतिग्रहक्रियाविशेषणम् । मन्त्रसहितमित्यर्थः । यथावद् यथाविधि प्रत्यग्रहीत् प्रतिगृहीतवान् । परमेश्वरो हिमवतः कक्ष्याविशे[4]षे विष्टर उपविष्टो हिमवता कृतामर्घ्यपाद्यादिकां पूजां परिगृहीतवानित्यर्थः ॥ ७१ ॥

---

१. 'दा' छ. पाठः. २. 'षं भ' क. पाठः. ३. 'तम् । सर्वमम' क. च. पाठः. ४. 'ष उ' क च. पाठः.

दुकूलवान् सोऽथ वधूसमीपं
निन्ये विनीतैरवरोधरक्षैः[1]।
वेलासकाशं[2] स्फुटफेनराशि-[3]
र्नवैरुदन्वानिव चन्द्रपादैः॥ ७२॥

(प्रकाशिका)

दुकूलवानिति। परिहिततद्दत्तदुकूलः। विनीतैः प्रश्रितैर्वेषभाषादिकैः। रक्षन्तीति रक्षाः। वेला अब्धिकूलम्। उपमानेन तदानीमप्यगाधत्वादयो धर्मा देवे स्फुटा इति ध्वन्यते॥ ७२॥

(विवरणम्)

अथ भगवतः पार्वतीपरिसरप्राप्तिमाह —

दुकूलवानिति। अथ दुकूलवान् सः अवरोधरक्षैः वधूसमीपं निन्ये। अथ मधुपर्कादिदानानन्तरम्। दुकूलवान् परिहितनगोपनीतदुकूल इत्यर्थः। सः परमेश्वरः। अवरोधमन्तःपुरं रक्षन्तीति अवरोधरक्षाः तैः। वृद्धकाञ्चुकीयैरित्यर्थः। अन्येषां वधूसमीपप्राप्तावनधिकारादिति भावः। वध्वाः पार्वत्याः समीपं निन्ये प्रापितोऽभूत्। अवरोधरक्षाणां भगवदग्रेसरत्वप्राप्तिसमुचितं भावविशेषमाह— विनीतैरिति। प्रवणैः वेषभाषादिभिरित्यर्थः। अत्रोपमामाह— स्फुटफेनराशिः उदन्वान् नवैः चन्द्रपादैः वेलासकाशम् इव इति। स्फुटः प्रकटः फेनानां राशिः समूहो यस्य तादृशः उदन्वान् समुद्रः नवैरभिनवैः चन्द्रपादैश्चन्द्रस्य रश्मिभिः। 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः। वेलायाः कूलस्य सकाशं समीपमिव। अत्र दुकूलस्य फेनोपमानेन धावल्यं प्रतिपादितम्। तच्च मङ्गलदुकूलाङ्गम्। देवस्योदन्वदुपमानेन 'चन्द्रोदयारम्भ इवाम्बुराशिः' (स. ३. श्लो. ६७) इत्यत्रोक्ता धर्माः प्रतिपाद्यन्ते। अवरोधरक्षाणां

---

१. 'साः स व'. २. 'द', ३. 'मीप स्फु', ४. 'जि' मुद्रितकोशपाठः. ५. 'तभा' ङ. पाठः.

चन्द्रपादोपमानेन जराधवलशरीरत्वादयो धर्माः प्रतिपादिताः । विनीतप्रनिवस्तुतया चन्द्रपादानां नवत्वमुपात्तम् । वृद्धा हि चन्द्रपादा अतिप्रकटा भवन्ति । समीपप्राप्तेरारम्भदशैवेयमित्यप्यनेन द्योत्यते । देव्या वेलोपमानेन लज्जापारतन्त्र्यान्निर्व्यापारत्वं भगवत्प्राप्तियोग्यत्वं च ध्वन्यते ॥ ७२ ॥

तया विवृ[1]द्धाननचन्द्रकान्त्या
प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतस्सलिलः शिवोऽभूत्
संसृज्यमानः शरदेव लोकः ॥ ७३ ॥

(प्रकाशिका)

तयेति । आननसदृशश्चन्द्र आननचन्द्र इत्यादेः समासस्याङ्गीकाराद् विशेषणानामुपमानान्वयित्वमपि द्रष्टव्यम् । प्रसादश्चेतसि हर्षः । सलिलेऽनाविलत्वम् । तया संसृज्यमान इत्यन्वयः ॥ ७३ ॥

(विवरणम्)

देवीसङ्गमे देवस्य प्रसादातिशयं वर्णयति—

तयेति । तया कुमार्या संसृज्यमानः शिवः प्रसन्नचेतस्सलिलः अभूत् । तया लोकोत्तरगुणविशिष्टया कुमार्या बालया संसृज्यमानः पदे पदे क्रमेण संसर्गमुपगच्छन् शिवः परमेश्वरः प्रसन्नं हृष्टं चेतस्सलिलं सलिलमिव चेतो यस्य । 'उपमितं व्याघ्रादिभिः—' (२. १. ५६) इति समासः । तथाभूतोऽभूत् । स्वच्छत्वादिना चेतसः सलिलसादृश्यं द्रष्टव्यम् । अत्रोपमामाह—शरदा लोकः इवेति । संसृज्यमान इत्यत्राप्यनुषज्यते । यथा शरदा संसृज्यमानो लोकः प्रसन्नचेतस्सलिलो भवति, तथासावपीत्यर्थः । प्रसन्नमनाविलं चेतस्सलिलं[2] चेतस्सदृशं सलिलं यस्येत्यत्रापि योज्यम् । उपमानोपमेययोः

---

१. 'प्र' मुद्रितकोशपाठः. २. 'लं य' क. च. पाठः.

साधारणं धर्मं दर्शयिष्यन्नादौ देवीशरदोः साधारणं धर्ममाह—विवृद्धाननच-न्द्रकान्त्या इति। विवृद्धा विशेषेण वर्धनं प्राप्ता चन्द्रसदृशस्याननस्य आनन-सदृशस्य चन्द्रस्य च कान्तिर्यस्यास्तया। शिवलोकयोः साधारणं धर्ममाह—प्रफुल्तचक्षुःकुमुद इति। प्रफुल्तं विकसितं कुमुदसदृशं चक्षुः चक्षुःसदृशं कुमुदं च यस्य स तथा। चन्द्रकान्तिविवृद्धौ कुमुदस्यैव विकास इति चक्षुषः कुमु-दसादृश्यं, न तु कमलसादृश्यम्॥ ७३॥

**तयोः समापत्तिषु कातराणि**
**किञ्चिद्व्यवस्थापितसंहृतानि।**
**ह्रीयन्त्रणां तत्क्षणमन्वभूव-**
**न्नन्योन्यलोलानि विलोचनानि॥ ७४॥**

(प्रकाशिका)

**तयोरिति।** समापत्तिषु यदृच्छासमागमेषु। कातराण्यधृष्टानि। किञ्चिद्व्यवस्थापितानि अर्थादन्योन्योपरि। ह्रीयन्त्रणां लज्जायन्त्रितत्वम्। अन्योन्यं प्रति लोलानि सतृष्णानि चलानि च। अत्राद्याभ्यां विशेष-णाभ्यां ह्रीयन्त्रणाप्रकार[1] उक्तः, तृतीयेन हेतुः॥ ७४॥

(विवरणम्)

चिराभिलषितदर्शनयोस्तयोः परस्परदर्शने शृङ्गारचेष्टां वर्णयति—

तयोरिति। तयोः विलोचनानि तत्क्षणं ह्रीयन्त्रणाम् अन्वभूवन्। तयोः पार्वतीपरमेश्वरयोः विलोचनानि कटाक्षविक्षेपाः तत्क्षणं तस्मिन् क्षणे ह्रिया लज्जया यन्त्रणां प्रतिबन्धम् अन्वभूवन् अनुबभूवुः। चिराभि-लषितदर्शनयोः पार्वतीपरमेश्वरयोः परस्परकटाक्षविक्षेपास्तदानीं लज्जया पर-स्परदर्शनाक्षमा बभूवुरित्यर्थः। ह्रीयन्त्रणायाः प्रकारमेव विशेषणद्वयेनाह—

१. 'णायाः प्र' क. ख. ग. पाठः.

समापत्तिष्वित्यादिना । समापत्तिषु कातराणि । समापत्तिर्यदृच्छया समागमः । तेषु कातराणि अधृष्टानि । यदा कटाक्षाणां यदृच्छया परस्परसमागमः, तदा शालीनतासहितानीत्यर्थः । अत एव किञ्चिद्व्यवस्थापितसंहृतानि । अन्योन्योपरि किञ्चिद्व्यवस्थापितानि स्थिरीकृतानि पुनस्तदानीमेव लज्जया संहृतानि व्यावर्तितानि च । किञ्चिद्व्यवस्थापितानि संहृतानि चेति समासः । दर्शनौत्सुक्यमाह—अन्योन्यलोलानीति । अन्योन्यं प्रति लोलानि सतृष्णानि । 'लोलश्चलसतृष्णयोरि'त्यमरः ॥ ७४ ॥

तस्याः करं शैलगुरूपनीतं
जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
उमा[1]त्मना गूढतनोः स्मरस्य
तच्छङ्किनः पूर्वमिव प्ररोहम् ॥ ७५ ॥

(प्रकाशिका)

तस्या इति । गुरुः पुरोधाः । उमात्मना उमाशरीरेण । तच्छङ्किन इति गूहने हेतुः । अत्र ता[2]म्राङ्गुलिप्रतिवस्तुनो नवप्र[3]वालस्य प्ररोहविशेषणत्वेनानुपादानमव्यभिचारेण प्रतीतेः । उत्प्रेक्षया च मनोविकारहेतुत्वं ध्वनितम् ॥ ७५ ॥

(विवरणम्)

पाणिग्रहणमेव वर्णयति—

तस्या इति । अष्टमूर्तिः तस्याः करं जग्राह । अष्टमूर्तिः परमेश्वरः तस्याः करं जग्राह समन्त्रं गृहीतवान् । कथं जग्राहेत्यत्राह—शैलगुरूपनीतमिति । शैलस्य हिमवतो गुरुः पुरोहितः, तेनोपनीतं प्रसारितम् । हिम-

---

१. 'मातनौ' मुद्रितकोशपाठः. २. 'कम्रा' ङ. पाठः. ३. 'दल' क. ख. ग. पाठः.

त्पुरोहितवचनेन हरान्तिकं नीतमिति यावत् । करस्य दर्शनसमय एव मनोहारित्वमाह — ताम्राङ्गुलिमिति । ताम्राः रक्तवर्णाः अङ्गुलयो यस्य तम् । तादृशं करमुत्प्रेक्षते — तच्छङ्किनः उमात्मना गूढतनोः स्मरस्य पूर्वं प्ररोहमिव । तस्मादष्टमूर्तेः शङ्कितुं शीलमस्येति तथा । स्वानुभूतो देहदाहोऽत्र शङ्काहेतुः । शङ्काया अनुभावमाह — उमात्मना गूढतनोरिति । उमात्मना उमाशरीरेण गूढा छन्ना तनुः शरीरं यस्य तस्य स्मरस्य कामदेवस्य । पूर्वं प्रथमोद्गतं प्ररोहम् अङ्कुरमिव । उत्प्रेक्षया दर्शनमात्रेणैव मनोविकारहेतुत्वं ध्वन्यते । अत्र ताम्राङ्गुलिप्रतिवस्तुत्वेन नवप्रवालमिति प्ररोहस्यापि विशेषणमर्थाद् द्रष्टव्यम् । तच्चानुक्तमपि प्ररोहस्य नवप्रवालाव्यभिचारात् प्रतीयत इति महाकविनैवमुक्तम् ॥ ७५ ॥

**रोमोद्गमः प्रादुरभूदुमायाः**
**स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।**
**वृत्तिस्तयोः पाणिसमागमेन**
**समं विभक्तेव मनोभवस्य ॥ ७६ ॥**

(प्रकाशिका)

**रोमोद्गम इति ।** अस्यार्थस्य 'कन्या तु प्रथमसमागम' इत्यादिवात्स्यायनवचनविरोधा[2]शङ्का रघुवंशप्रकाशिकायाम् 'आसीद् वरः कण्टकितप्रकोष्ठः' (स. ७. श्लो० २२) इत्यादिश्लोकप्रस[3]ङ्गे निराकृता । मनोभवस्य व्यापारस्तदानीं पाणिसमागमेन[4] कर्त्रा[5] तयोर्द्वयोरन्यूनानतिरिक्तत्वेन विभक्त इवेत्यर्थः ॥ ७६ ॥

(विवरणम्)

प्रवृद्धरागयोस्तयोः पाणिसमागमस्यापि सम्भोगतुल्यकक्ष्यतामाह —

---

१. 'ना नोक्तम् ।' च., 'ना नोपात्तम्' छ. पाठः. २. 'धश' ङ. पाठः. ३. 'ङ्गेन नि' ङ. पाठः. ४. 'न त' क. पाठः. ५. 'त्री द्व' ग. घ. ङ. पाठः.

रोमोद्गम इति । उमायाः रोमोद्गमः प्रादुरभूत् । रोमोद्गमः रोमाञ्चः प्रादुरभूत् प्रकाशोऽभूत् । 'प्रकाशे प्रादुराविः स्यादि'त्यमरः । हरस्यापि तादात्विकं वृत्तमाह — पुङ्गवकेतुः स्विन्नाङ्गुलिः आसीदिति । पुङ्गवो वृषः केतुर्ध्वजचिह्नं यस्य सः । परमेश्वर इत्यर्थः । स्विन्नाः स्वेदयुक्ताः अङ्गुलयो यस्य स तथा । ननु वात्स्यायने 'कन्या तु प्रथमसमागमे स्विन्नकरचरणाङ्गुलिः सन्नतमूर्तिश्च भवति । पुरुषस्तु रोमाञ्चितो भवति । एभिरनयोर्भावं परीक्षेते'त्युक्तम् । अतः कामशास्त्रविरुद्धमिदं वचनमिति चेत् । मैवम् । सात्त्विकविकाराणां स्त्रीपुरुषसाधारणत्वात्[1] तद् वात्स्यायनवचनमुपलक्षणमेव । अत एव रघुवंशे 'आसीद् वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी' इत्युक्तम् ।

"तस्य स्फुरत्फणगणप्रति(पा[2]फा)लनोत्थं
कम्पं च वीक्ष्य पुलकं च ततो नु तस्याः ।
सञ्जातसात्त्विकविकारधियः स्वभृत्यान्
नृत्यान्न्यषेधदुरगाधिपतिर्विलक्षैः ॥"(स. ११. श्लो० २९)

इति नैषधकाव्येऽपि । उभयोरप्येवंविधसात्त्विकविकारप्रतिपादने फलितमर्थमुत्प्रेक्षामुखेन दर्शयति— मनोभवस्य वृत्तिः पाणिसमागमेन तयोः समं विभक्ता इव इति । वृत्तिर्व्यापारः । पाण्योः करयोः समागमेन परस्परसङ्गेन कर्त्रा । तयोरित्यधिकरणसप्तमी । पार्वतीपरमेश्वराभिधाने मिथुन इत्यर्थः । समम् अन्यूनातिरिक्तत्वेन विभक्ता कृतविभागाभूदिव । कामदेवव्यापाराः पाणिग्रहणसमये पाणिसमागमेनैव तस्मिन् मिथुने समविभागाः कृता इवेत्यर्थः ॥ ७६ ॥

**प्रयुक्तपाणिग्रहणं यदन्यद्**
**वधूवरं पुष्यति कान्तिमग्र्याम् ।**
**सान्निध्ययोगादनयोस्तदानीं**
**किं कथ्यते श्रीरुभयस्य तस्य ॥ ७७ ॥**

---

१. 'त् । तस्माद्' छ. पाठः. २. 'ज्जः' क. पाठः.

(प्रकाशिका)

प्रयुक्तेति। अन्यल्लौकिकम्। वधूवरं 'सर्वो द्वन्द्वो विभाषैकवद्भवती'ति। प्रयुक्तविवाहं यल्लौकिकं वधूवरं, तदप्यनयोर्देवीदेवयोः सान्निध्ययोगादग्र्यां कान्तिं पुष्यति। तस्मिन् काले तस्य मिथुनस्य कान्तिः किं कथ्यत इत्यर्थः॥ ७७॥

(विवरणम्)

पाणिग्रहणानन्तरं कृतकृत्ययोस्तयोः कान्तिविशेषं वर्णयति—

प्रयुक्तेति। प्रयुक्तपाणिग्रहणम् अन्यद् यद् वधूवरं, तद् अनयोः सान्निध्ययोगाद् अग्र्यां कान्तिं पुष्यति। प्रयुक्तं कृतं पाणिग्रहणं विवाहो यस्य तादृशं सद् अन्यत् लौकिकम्। वधूर्वरश्च वधूवरम्। 'सर्वो द्वन्द्वो विभाषैकवद् भवती'त्येकवद्भावादेव नपुंसकत्वमपि। अनयोः पार्वतीपरमेश्वरयोः सान्निध्यस्य सन्निधानस्य योगाद् अग्र्यां लोकोत्तरां कान्तिं द्युतिं पुष्यति प्राप्नोति। कृतविवाहं सदन्यद् यल्लौकिकं वधूवरं, तत् पार्वतीपरमेश्वरसान्निध्यवशादेव लोकोत्तरकान्तियुक्तं भवतीत्यर्थः। 'वधूरुमात्मिका भर्ता विवाहे शङ्करात्मकः' इति वचनादिति भावः। नन्वनेन वाक्येन प्रकृते किमायातमित्यत्राह— तदानीं तस्य उभयस्य श्रीः किं कथ्यते इति। तदानीं पाणिग्रहणावसानसमये तस्योभयस्य पार्वतीपरमेश्वराभिधानस्य मिथुनस्य श्रीः शोभा किं कथ्यते। अवाङ्मनसगोच(रै?र ए)वेत्यर्थः। यत्सान्निध्यमात्रेणैव लौकिकमिथुनं लोकोत्तरां कान्तिमनुभवति विवाहसमये, तस्यैव मिथुनस्य कान्तिः किं कथ्यते इत्यर्थः॥ ७७॥

---

१. 'योगादे' क. पाठः. २. 'द्युतिम' छ. पाठः.

प्रदक्षिणप्रक्रमणात् कृशानो-
रुदर्चिषस्तन्मिथुनं बभासे[1] ।
मेरोरिवान्ते[2] परिवर्तमान-
मन्योन्यसंसक्तमहस्त्रियामम् ॥ ७८ ॥

(प्रकाशिका)

प्रदक्षिणेति[3] । उदर्चिष इति मेरुसाम्यसिद्ध्यर्थम् । अन्योन्य-संसक्तं निर्व्यवधानम् । अनेन गृहीतपाणिकमिथुनसाम्यं साध्यते ॥ ७८ ॥

(विवरणम्)

पाणिग्रहणानन्तरं विहितमग्निप्रदक्षिणं वर्णयति —

प्रदक्षिणेति । उदर्चिषः कृशानोः प्रदक्षिणप्रक्रमणात् तद् मिथुनं बभासे । उदर्चिषः उद्गतार्चिषः । इन्धनादिभिरिद्धस्येत्यर्थः । एतच्च विशेषणं मेरुसाम्यसिद्ध्यर्थम् । मेरुरपि सुवर्णरत्नादिभिरुज्ज्वलो भवति । कृशानोरग्नेः प्रदक्षिणेन प्रक्रमणाद् गमनाद्धेतोः तद् मिथुनं पार्वतीपरमेश्वराभिधानं द्वन्द्वं बभासे शुशुभे। अत्रोपमामाह — मेरोः अन्ते परिवर्तमानम् अन्योन्यसंसक्तम् अहस्त्रियामम् इव इति । मेरोः महामेरोः अन्ते उपान्ते परिवर्तमानं परितः प्रादक्षिण्येन वर्तमानम् । अन्योन्यसंसक्तं परस्परं संसक्तम् । निर्व्यवधानमित्यर्थः । अहश्च त्रियामा च अहस्त्रियामम् । अत्रापि पूर्ववदेकवद्भावनपुंसकत्वे । अत्रान्योन्यसंसक्तमिति विशेषणं परस्परगृहीतहस्तमिथुनसाम्यसिद्ध्यर्थम् । यथा महामेरोरुपान्ते परस्परमविश्लेषेण वर्तमानमहस्त्रियामं शोभते, तथाग्निप्रदक्षिणसमये तन्मिथुनमपि शुशुभेतरामित्यर्थः । तत्र पार्व-

---

१. 'चकाशे', २. 'रुपान्तेष्विव व' मुद्रितकोशपाठः. ३. 'त्यादि रघुवंशप्रकाशिकायां व्याख्यातम् । तौ' ग. ग. ङ. पाठः.

तीपरमेश्वरात्मकस्य मिथुनस्य संसक्ताहस्त्रियामसाम्यप्रतिपादनेन तत्संयोग-स्यापि नित्यत्वमुक्तम् ॥ ७८ ॥

**तौ दम्पती त्रिः परिणीय वह्नि-**
**मन्योन्यसंस्पर्शनिमीलिताक्षौ ।**
**स कारयामास वधूं पुरोधा-**
**स्तस्मिन् समिद्धार्चिषि लाजमोक्षम् ॥ ७९ ॥**

(प्रकाशिका)

**ताविति** । परिणीय परितो नीत्वा । प्रदक्षिणं कारयित्वेत्यर्थः । अन्योन्येत्यादिना प्रदक्षिणकरणस्य प्रयोजकव्यापारसापेक्षत्वमुक्तम् ॥

(विवरणम्)

लाजहोमं वर्णयति —

ताविति । सः पुरोधाः तौ दम्पती वह्निं त्रिः परिणीय समिद्धार्चिषि तस्मिन् वधूं लाजमोक्षं कारयामास । स पुरोधाः हिमवत्पुरोहितः । तौ दम्पती भार्यापती 'दम्पती जम्पती भार्यापती' इत्यमरः । वह्निं विवाहसाक्षिभूतमग्निं त्रिः परिणीय त्रिवारं परितो नीत्वा । प्रदक्षिणत्रयं कारयित्वेत्यर्थः । समिद्धं सम्यगिद्धमर्चिः ज्वाला यस्य तस्मिन् । तच्छब्देनाग्निः परामृश्यते । वधूं पार्वतीं लाजानां मोक्षं होमं कारयामास कारितवान् । अत्र प्रदक्षिणे प्रयोज्यत्वं दम्पत्योः, लाजमोक्षे वध्वाः । उभयोरपि प्रदक्षिणकरणे प्रयोजकव्यापारसापेक्षत्वमाह — अन्योन्यसंस्पर्शनिमीलिताक्षाविति । अन्योन्यस्य परस्परस्य संस्पर्शेन । करग्रहणजनितेन सुखेनेत्यर्थः । निमीलिते नितरां मीलिते अक्षिणी[२] नयने याभ्याम् । तेन उभयोरपि नेत्रव्यापारवैधुर्यात् पुरोहितोपदिष्टमार्गेणैव प्रदक्षिणमिति भावः । अत्र निमीलिताक्षत्वं स्पर्शसुखस्यानुभावः ॥ ७९ ॥

१. 'मा' क. पाठः. २ 'णी या' क. च. पाठः.

सा लाजधूमाञ्जलिमिष्टगन्धं
गुरूपदेशाद् वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या
मुहूर्तकर्णोत्पलतां प्रपेदे ॥ ८० ॥

(प्रकाशिका)

सेति । गुरूपदेशाद् धूमाग्रमञ्जलिनादाय पिबेत्येवंरूपात् । तथाविधस्य धूमस्य कर्णोत्पलत्वमसम्भवदुपमां कल्पयतीति निदर्शनात्रालङ्कारः ॥ ८० ॥

(विवरणम्)

सदाचारप्राप्तं लाजधूमग्रहणं वर्णयति—

सेति । सा गुरूपदेशात् लाजधूमाञ्जलिं वदनं निनाय । गुरोः पुरोहितस्योपदेशाद् धूमाग्रमञ्जलिना गृहीत्वा वदनं नयेत्येवंरूपात् । लाजहोमजनितो धूमो लाजधूमः । अञ्जलिपरिमितो लाजधूमो लाजधूमाञ्जलिः तम् । वदनं मुखं निनाय प्रापितवती । लाजहोमजनितं धूमं पार्वती कराञ्जलिना निजवदनमानीयाघ्रातवतीत्यर्थः । 'लाजाञ्जलिं विसृज्य धूमाग्रं समाजिघ्रेदि'ति प्रयोगवृत्तिकारवचनमत्र प्रमाणम् । गुरुनियोगविहितस्यास्य कर्मणस्तात्कालिकं सुखकरत्वं चास्तीत्याह— इष्टगन्धमिति । इष्टः अभीष्टो गन्धो यस्य तम् । सुरभिमित्यर्थः । तात्कालिकं शोभाजनकत्वं चाह— कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे इति । कपोलयोर्गण्डयोः सम्यग् व्या(पितुं?प्तुं) शीलमस्या इति कपोलसंसर्पिणी । तादृशी शिखा अग्रं यस्य स तथा । स लाजधूमाञ्जलिः मुहूर्तं क्षणमात्रं कर्णोत्पलतां कर्णालङ्कारभूतनीलोत्पलत्वं प्रपेदे प्राप्तोऽभूत् । यावदसौ धूमाञ्जलिर्गण्डप्रदेशाद्-

र्ध्वभागं न जगाम, तावदेवासावस्याः कर्णोत्पलसाम्यं प्राप्तोऽभूदित्यर्थः । निदर्शनात्रालङ्कारः ॥ ८० ॥

तदीषदार्द्रारुणगण्डरेख-
मुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंस-
माचारधूमग्रहणाद् बभूव ॥ ८१ ॥

(प्रकाशिका)

तदिति । आर्द्रं स्विन्नम् । उच्छ्वासिकालाञ्जनरागं बाष्पक्लिन्न-त्वादुद्रिक्तकालाञ्जनवर्णम् । मुखस्य तदेककालभाविभिरेभिर्धर्मैरपूर्वशो-भाभाजनत्वं ध्वन्यते ॥ ८१ ॥

( विवरणम् )

देवीमुखस्य तदानीमन्यादृशी काचिदपूर्वा शोभा संजातेत्याह—

तदिति । तद् वधूमुखम् आचारधूमग्रहणाद् ईषदार्द्रारुणगण्डरेखम् अक्ष्णोः उच्छ्वासिकालाञ्जनरागं क्लान्तयवावतंसं बभूव । वध्वा नवोढायाः मुखं वदनम् आचारधूमग्रहणात् सदाचारप्राप्ताद् धूमग्रहणाद् धूमस्य ग्रहणादा-दानाद् ईषदार्द्रा धूमोष्मणा किञ्चित् स्विन्ना अरुणा रक्तवर्णा च गण्डरेखा गण्डप्रदेशो यस्य तत् तथा । अक्ष्णोरिति सप्तमी । नयनयुगले उच्छ्वासी उच्छ्वसनशीलः किञ्चिदुच्छूनतां प्राप्तः कालाञ्जनस्य रागो वर्णो यस्य तत् तथा । बाष्पक्लिन्नत्वमत्र हेतुः । क्लान्तो धूमोष्मणा किमपि म्लानिं प्राप्तः यवा-वतंसो यवाङ्कुरमयः कर्णालङ्कारो यस्य तत् तथा । चशब्दोऽत्रार्थाद् द्रष्ट-व्यः । ईषदुष्णस्य तस्य धूमस्य ग्रहणात् तदानीं देव्या वदनं स्विन्नारुणगण्डम्

---

१. 'ग्रोत्वसे' क. ख. ग. पाठः.

ईषदुच्छूनाञ्जननयनं परिम्लानयवाङ्कुरावतंसं च बभूव । अनेन कान्त्यतिशयो ध्वन्यते ॥ ८१ ॥

वधूं[1] गिरिः प्राह तवैष वत्से !
वह्निर्विवाहं प्रति पूर्व[2]साक्षी ।
शिवेन भर्त्रा सह धर्मचर्या
कार्या त्वया मुक्तविचारयेति ॥ ८२ ॥

(प्रकाशिका)

वधूमिति । पूर्वः प्रथमः । अनेन साक्ष्यन्तराणाम्[3]आदित्यादीनां[4]मपि सद्भावः सूचितः । मुक्तविचारयेति एतच्चरितेषु सदसच्चिन्तां विहायेत्यर्थः । अयं च प्राजापत्यो विवाहः । 'सह धर्मं चरतम् इति प्राजापत्य' (गृ० १.६.१) इत्याश्वलायन[5]वचनात् ॥ ८२ ॥

(विवरणम्)

सहधर्मचरणविधानमाह—

वधूमिति । गिरिः वधूं प्राह । गिरिर्हिमवान् वधूं नवोढां पार्वतीं प्राह उवाच । तिङ्प्रतिरूपकमव्ययमेतत् ।

"पञ्चानां ब्रुव आद्यानामाहादेशः स्मृतो लटि ।
आहेत्येतदतीते तिङ्प्रतिरूपकमव्ययम् ॥"

इति भोजः । वचनप्रकारमाह—वत्से ! एष वह्निः तव विवाहं प्रति पूर्वसाक्षी । एष विवाहार्थं पुरोभागे संभृतो वाह्निरग्निः पूर्वसाक्षी प्रथम[6]ः साक्षी । 'आदित्यचन्द्रावनिल' इत्यादिस्मृतावादित्यादीनां यद्यपि सर्वकर्मसु सा-

---

१. 'द्विजः प्रा', २ 'कर्मसा' मुद्रितकोशपाठः. ३. 'मपि आदि' क. पाठः.
४. 'नां स' क. पाठः. ५. 'नः ॥' ङ. पाठः. ६. 'मसा' च. पाठः

क्षित्वं प्रसिद्धं, तथापि[1] विवाहे वह्निरेवं प्रथमः साक्षीति[3] च प्रसिद्धमेवेति द्योतयितुं पूर्वशब्दः। अस्तु साक्षी। मया तु किं कर्तव्यमित्यत्राह—त्वया मुक्तविचारया शिवेन भर्त्रा सह धर्मचर्या कार्या[4] इति। मुक्तः परित्यक्तो विचारो यया तथाभूतया सत्या। शिवचरितेषु सदसच्चिन्तामपहायेत्यर्थः। धर्मचर्या धर्मानुष्ठानम्। अनेन प्राजापत्यो[5] विवाहोऽत्र निर्व्यूढ इति दर्शितम्। 'सह धर्मं चरतम् इति प्राजापत्य' इत्याश्वलायनवचनात्॥ ८२॥

**आलोचनान्तं श्रवणे वितृत्य[6]**
**पीतं गुरोस्तद् वचनं भवान्या।**
**निदाघकालोल्बणभेदयेव[7]**
**माहेन्द्रमम्भः प्रथमं पृथिव्या॥ ८३॥**

(प्रकाशिका)

आलोचनेति। आलोचनान्तं लोचनसमीपावधि। अनेन श्रवणलोचनयोरल्पान्तरत्वमपि द्योत्यते। पीतमित्यादरातिशयद्योतकम्। उल्बणो भेदो विदारणं यस्याः॥ ८३॥

( विवरणम् )

देव्यास्तद्वचनानुष्ठानोपादानप्रकारमाह—

आलोचनेति। भवान्या गुरोः तद् वचनं श्रवणे आलोचनान्तं विवृत्य पीतम्। भवान्या भवपत्न्या। इदानीं भवानीति संज्ञापि जातेत्यनेन द्योत्यते। गुरोः पितुर्हिमवतः तत् सहधर्मचर्याविधायकं वचनं श्रवणे[8] श्रोत्रे आलोचनान्तं[9] लोचनसमीपावधि विवृत्य[10] विदार्य। देव्याः श्रवणलोचनयोर्य-

---

१. 'पि व' च. पाठः. २. 'व विवाहप्रथमसा' च. पाठः. ३. 'त्यपि प्र' छ. पाठः. ४. 'र्या। मु' च. पाठः. ५. 'त्योऽत्र' च. पाठः. ६. 'त', ७. 'तापये' मुद्रितकोशपाठः. ८. 'णे आ' च. पाठः. ९. 'न्तं वि' च. पाठः. १०. 'त्य श्रोत्रे लोचनान्तसमीपावधि वि' च. पाठः.

दैल्पान्तरत्वं स्वाभाविकं, तद् गुरुवचनश्रवणकौतुकेन श्रोत्रयोस्तदानीमत्यन्त-विवृतत्वादेवेत्युत्प्रेक्षागर्भेयमुक्तिः । अत्र श्रवणे पानोपचारेण सतृष्णश्रवणे-त्वमुक्तम् । तेन चादरातिशयो द्योत्यते । अत्रोपमामाह — निदाघकालोल्ब-णभेदया पृथिव्या माहेन्द्रं प्रथमम् अम्भ इवं इति । निदाघकाले घर्मकाले उल्बण उद्रिक्तो भेदो विदारणं यस्यास्तया पृथिव्या भूम्या । माहेन्द्रं महे-न्द्रस्येदम् । वर्षजमित्यर्थः । प्रथमम् आद्यम् अम्भो जलमिव । यथा पृथिव्या प्रथमं जलं पीयते, तथा (न?) द्वितीयादि नाद्रियत इति प्रथमशब्दोपादा-नम् । अयं च प्रथमशब्दो वचनस्य सहधर्मचर्याविधायकत्वविशेषणप्रतिवस्तु-तयोपात्तः, अम्भःशब्दो वचनप्रतिवस्तुतया, माहेन्द्रशब्दो गुरुप्रतिवस्तुतया च । विदारणस्य श्रोत्रप्रतिवस्तुत्वं पृथिव्या भवानीप्रतिवस्तुत्वं च स्पष्टम् ॥

ध्रुवेण भर्त्रा ध्रुवदर्शनाय
प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य
ह्रीसन्नकण्ठी कथमप्युवाच ॥ ८४ ॥

(प्रकाशिका)

ध्रुवेणेति । ध्रुवेण भर्त्रा शाश्वतेन पत्या । अनेन वर्ण्यमानेषु शिव-चेष्टितेषु लीलासिद्धत्वं कविरनुसन्धत्त इति द्योत्यते । ध्रुवो नक्षत्रविशेषः । प्रियदर्शनेनेति अन्यत्र द्रष्टव्यबुद्धिरेव नास्या इति द्योतयति ॥ ८४ ॥

(विवरणम्)

ध्रुवदर्शनमाह—

ध्रुवेणेति । ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना सा आननम् उन्नमय्य

---

१. 'दन्त' च. पाठः. २. 'त्वं सम्भावितं त' च पाठः. ३. 'णमु' च. पाठः. ४. 'व ।' च. पाठः.

दृष्ट[1] इति कथमपि उवाच। ध्रुवेण शाश्वतेन। जननविनाशशून्येनेत्यर्थः। अनेन विशेषणेन कविरुक्तेषु वक्ष्यमाणेषु च पार्वतीपरमेश्वरयोश्चरितेषु केवललीलासिद्धत्वमनुसन्दधाति। भर्त्रा पत्या ध्रुवदर्शनाय ध्रुवस्योत्तराशास्थितस्य नक्षत्रविशेषस्य दर्शनायावलोकनाय। इदं तु ध्रुवदर्शनमरुन्धतीसप्तर्षीणामप्युपलक्षणम्। 'ध्रुवमरुन्धतीं सप्तर्षीनिति दृष्ट्वा वाचं विसृजेद्' (गृ० १. ७. २२) इत्याश्वलायनवचनात्। प्रयुज्यमाना प्रेर्यमाणा। ध्रुवोऽयमत्र तिष्ठति, तं पश्येति सहस्ताभिनयमुच्यमानेत्यर्थः। आननं वदनमुन्नमय्योत्क्षिप्य। ध्रुवस्योर्ध्वदेशवर्तित्वात् तद्दर्शनार्थमत्र वदनोन्नमनम्। दृष्टः अवलोकितो ध्रुव इति लज्जया कथमप्युवाच उक्तवती। प्रियशरीरव्यतिरिक्तानामर्थानां दर्शनं तन्नियोगादेवास्या इत्याह—प्रियदर्शनेनेति। प्रियं लोकोत्तरसौन्दर्यत्वादिष्टं दर्शनं यस्य तेन। देवस्य यो योऽवयवो दृष्टः, तत्र तत्र नेत्रद्वयं[2] निमज्जति। अतः कथमन्यदर्शनाकाङ्क्षेति भावः। कथमप्युवाचेति यदुक्तं, तत्र हेतुमाह—ह्रीसन्नकण्ठीति। ह्रिया लज्जया सन्नो निरुद्धः कण्ठः स्वरो यस्याः सा तथा॥ ८४॥

**इत्थं विधिज्ञेन पुरोहितेन**
**प्रयुक्तपाणिग्रहणोपचारौ।**
**प्रणेमतुस्तौ पितरौ प्रजानां**
**पद्मासनस्थाय पितामहाय॥ ८५॥**

(प्रकाशिका)

इत्थमिति। प्रकृतमर्थं पुरोहितप्रयोगप्रकारत्वेन परामृशतेत्थंपदेन ध्रुवदर्शनस्यापि तत्प्रयुक्तत्वमवधार्यते। पाणिग्रहणोपचाराः अग्निप्रद-

१. 'ष्टम् इ' च. पाठः. २. 'य म' च. पाठः.

क्षिणादयः। प्रजानां पितरावित्यनेन विश्वकारणभूतयोस्तयोः कुलवृद्धस्य ब्रह्मणः प्रणामो लौकिकाचारानुसरणमात्रमिति द्योतयति। प्रथमं लोकमान्यत्वाद् ब्रह्मा देवेन शिरःकम्पेन सम्भावितः, इदानीं तु वधूकुलकूटस्थत्वात् प्रणामेनेति विशेषः॥ ८५॥

(विवरणम्)

शास्त्रसिद्धं कर्म समाप्य लोकसिद्धं कर्म वर्णयति इत्थमित्यादिना। तत्र जगत्पूज्यस्य ब्रह्मणः प्रणामं वर्णयत्यनेन—

इत्थमिति। विधिज्ञेन पुरोहितेन इत्थं प्रयुक्तपाणिग्रहणोपचारौ तौ पद्मासनस्थाय पितामहाय प्रणेमतुः। विधिं जानातीति विधिज्ञः। शास्त्रज्ञेनेत्यर्थः। अनेनानुष्ठापनप्रावीण्यमुक्तम्। पुरोहितेनोपाध्यायेन इत्थं पूर्वोक्तप्रकारेण। अनेन पूर्वोक्तस्य सर्वस्याप्यर्थजातस्य पुरोहितप्रयुक्तत्वं द्योतयता भगवत्कृतस्य[1] ध्रुवदर्शनप्रेरणस्यापि तस्यैव प्रयोजककर्तृत्वमिति ध्वन्यते। प्रयुक्ताः कारिताः पाणिग्रहणे विवाहे उपचारा अग्निप्रदक्षिणादयो ययोस्तौ पार्वतीपरमेश्वरौ। पद्ममेवासनं पद्मासनं, तत्र स्थिताय। नारायणनाभिकमलाधिष्ठितायेत्यर्थः। अनेन जगत्पूज्यत्वं ध्वन्यते। पितामहाय ब्रह्मणे प्रणेमतुर्नमश्चक्रतुः। पार्वतीपरमेश्वरकर्तृकोऽयं पितामहप्रणामो लौकिकाचारानुसरणमात्रेणैवेत्याह—प्रजानां पितराविति। ब्रह्मादिस्तम्बपर्यन्तानां[2] जीवानां पितरौ मातापितरौ। लोकानुसरणादेव देवः पूर्वमपि शिरःकम्पेन तं सम्भावितवान्, इदानीं तु वधूसनाथः प्रणामेनेति भावः॥ ८५॥

**वधूर्विधात्रा प्रतिनन्द्यते स्म**
**कल्याणि! वीरप्रसवा भवेति।**

---

१. 'त्प्रयुक्तस्य कृत' च. पाठः. २. 'नां पि' च. पाठः.

वाचस्पतिः सन्नपि सोऽष्टमूर्ते-[1]
राशास्यचिन्तास्तिमितो बभूव ॥ ८६ ॥

(प्रकाशिका)

वधूरिति । प्रतिनन्दनमाशीः । वाचस्पतिर्वाण्याः पतिः । अष्टमूर्तिपदेन परमपरिपूर्णत्वं द्योत्यते । देव्या अपि वस्तुतः परिपूर्णत्वेऽपि आशीःपात्रत्वमपह्नुतेवैभवत्वात्[2] ॥ ८६ ॥

(विवरणम्)

परमेष्ठिन आशीर्वादप्रकारमाह —

वधूरिति । विधात्रा वधूः प्रतिनन्द्यते स्म । विधात्रा ब्रह्मणा वधूः नवोढा पार्वती प्रतिनन्द्यते स्म । प्रतिनन्दनमत्रार्थादाशीर्वादः । आशीर्भिरनुगृहीताभूदिति भावः । आशीर्वादमेव प्रदर्शयति — कल्याणीत्यादिना । कल्याणि! त्वं वीरप्रसवा भव[3] इति । कल्याणि! हे मङ्गलशीले! । वीरो लोकोत्तरप्रतापः प्रसवः पुत्रो यस्याः सा वीरप्रसवा । वीरपुत्रा भवेत्यर्थः । इतिशब्दः प्रकारवाची । तारकाद्यसुरनिग्रहादिकार्यलाभत्वरया[4] विस्मृतदेवीवैभवो विधाता तस्यै तदनुगुणमाशीर्वादं कृत्वा चतुर्दशभुवननायकस्य परमेश्वरस्याशीर्वादे मूकोऽभूदित्याह — सः वाचस्पतिः सन् अपि अष्टमूर्तेः आशास्याचिन्तास्तिमितः बभूव । सः विधाता वाण्याः पतिः सन्नपि भवन्नपि । अपिशब्दो विरोधवाची । अष्टमूर्तिशब्देनात्र परिपूर्णत्वं द्योत्यते, तेन चाशिषामविषयत्वम् । आशिषा[5] प्रतिपाद्यमाशास्यं, तद्विषयया चिन्तया विचारेण स्तिमितो निश्चलो बभूव । परिपूर्णस्यास्य किमल्पैरस्माभिराशास्यमिति चिन्तया तूष्णीमेवावस्थितोऽभूदित्यर्थः ॥ ८६ ॥

१. 'तौ त्वाशा' मुद्रितकोशपाठः. २. 'तनिजवै' घ. पाठः. ३. 'व । क' च. पाठः. ४. 'कासु' च. पाठः. ५. 'षः' च. पाठः.

**क्लृप्तोपचारां चतुरन्तवेदिं**[1]
**तावेत्य पश्चात् कनकासनस्थौ ।**
**जायापती लौकिकमेषितव्य-**[2]
**मार्द्राक्षतारोपणमन्वभूताम् ॥ ८७ ॥**

(प्रकाशिका)

क्लृप्तेति । उपचारः पूर्णकुम्भादिः । लौकिकं लोकाचारसिद्धम् । एषितव्यं बन्धुभिरभिलषणीयमित्यर्थः ॥ ८७ ॥

(विवरणम्)

लोकाचारसिद्धमक्षतधारणमाह—

क्लृप्तेति । तौ जायापती पश्चात् चतुरन्तवेदिमेत्य कनकासनस्थौ लौकिकम् एषितव्यम् आर्द्राक्षतारोपणम् अन्वभूताम् । (दम्पती? जायापती) भार्यापती । पश्चाद् वृद्धजनाभिवादनप्रत्यभिवादनयोरनन्तरम्[3] । चत्वारोऽन्ताः कोणा यस्यास्तादृशीं वेदिं मण्डपविशेषम् । चतुरश्रमण्डपमित्यर्थः । एत्य संप्राप्य कनकमये सुवर्णमये आसने स्थितौ भूत्वा लौकिकं लोकाचारसिद्धम् । अत एव एषितव्यं बन्धुजनैरित्यर्थात् । बन्धुभिरभिलषणीयमित्यर्थः । शिवयोस्तु परिपूर्णत्वान्न किञ्चिदप्यभिलषणीयमस्तीति भावः । आर्द्राणामक्षतानाम् । 'सहरिद्रजलेनाक्तो मङ्गल्यस्तण्डुलाक्षत' इति भोजः । आरोपणं स्वाङ्गेषु विकिरणम् अन्वभूतामनुभूतवन्तौ । मण्डपस्यापि लोकाचारसिद्धमितिकर्तव्यमाह—क्लृप्तोपचारामिति । क्लृप्ता रचिता उपचाराः पूर्णकुम्भादयो यस्यां तथाभूताम्[4] । गन्धोदकप्रोक्षणपुष्पमालालम्बनपूर्णकलशादिभिरलङ्कृते चतुष्कोणमण्डपे प्राङ्मुखमुपविश्य पार्वतीपरमेश्वरौ बन्धुजनैर्विकीर्यमाणस्याक्षतस्य धारणमनुबभूवतुरित्यर्थः ॥ ८७ ॥

---

१. 'त्रवेदीं ता', २. 'षणीयमा' मुद्रितकोशपाठः. ३. 'दयो' च. पाठः. ४. 'ताम्' च. पाठः.

†पत्रान्तलम्बैर्जलबिन्दुवर्षै-[1][2]
राक्रुष्टमुक्ताफलजालशोभम् ।
तयोरुपर्यायतनालदण्ड-[5]
माधत्त लक्ष्मीः कमलातपत्रम् ॥ ८८ ॥

(विवरणम्)

अथ तदवसरे देवैः क्रियमाणः शिवयोः सेवाप्रकारश्चतुर्भिः श्लोकैर्वर्ण्यते । तत्रादौ लक्ष्म्याः सेवाप्रकारमाह —

पत्रान्तेति । लक्ष्मीः तयोरुपरि कमलातपत्रम् आधत्त । लक्ष्मीः[3] श्रीः तयोः पार्वतीपरमेश्वरयोः उपरि[4] उपरिभागे कमलातपत्रं कमलमेवातपत्रं श्वेतच्छत्रम् आधत्त धृतवती । लक्ष्मीः स्वयमेव मूर्तिमती सती पार्वतीपरमेश्वरयोरुपरि कमलमयं श्वेतच्छत्रमाधत्तेत्यर्थः । कमलस्यातपत्रत्वरूपणे हेतुमेव स्फुटयति — पत्रान्तेत्यादिना विशेषणद्वयेन । पत्रान्तलम्बैः जलबिन्दुवर्षैः आक्रुष्टमुक्ताफलजालशोभम् । पत्राणां दलानामन्तेऽग्रे लम्बन्त इति पत्रान्तलम्बाः तैः । जलानां बिन्दवो जलबिन्दवः तेषां वर्षैः । आक्रुष्टा निन्दिता मुक्ताफलजालानां मौक्तिकनिकुरुम्बाणां शोभा येन तत् । श्वेतच्छत्रं हि लम्बमानहारपटलपर्यन्तभागं भवति । अत्र तु पत्रान्तलम्बमानैर्जलबिन्दुभिर्मौक्तिकानां शोभाप्यभिभूयत इति भावः । अत्र जलबिन्दुवर्षेणाभिनवत्वमुक्तम् । तेन च शोभाधिक्यं ध्वन्यते । तथा आयत[6]नालदण्डम् । आयतं दीर्घं नालमेव दण्डो यस्य तत् ॥ ८८ ॥

---

१. 'र्भै', २. 'जालैराक्रुष्ट' मुद्रितकोशपाठः. ३. 'क्ष्मीः त' च. पाठः. ४. 'रिभा' च. पाठः. ५. 'रपर्य' च. पाठः. ६. 'तदण्डनालम्' च. पाठः.

---

† अस्य पद्यस्य प्रकाशिका न दृश्यते ।

द्विधा प्रयुक्तेन च वाङ्मयेन
सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्यं
वधूं सुखग्राह्यनिबन्धनेन ॥ ८९ ॥

(प्रकाशिका)

द्विधेति । सरस्वती मूर्तिमती भगवती वाग्देवता । तदित्यतिलोकतया परामृशति । नुनाव तुष्टाव । द्वैविध्यं प्रति नियमं च दर्शयति— संस्कारेति । संस्कारो व्याकरणानुसरणम् । वरेण्यं श्रेष्ठम् । अनेनोत्तमनायकत्वात् संस्कृतयोग्यत्वमुक्तम् । सुखग्राह्यनिबन्धनेन देशभाषयेत्यर्थः, 'स्त्रीषु नाप्राकृतं वदेदि'ति वचनात् ॥ ८९ ॥

( विवरणम् )

सरस्वत्याः सेवाप्रकारमाह —

द्विधेति । सरस्वती च तद् मिथुनं द्विधा प्रयुक्तेन वाङ्मयेन नुनाव । सरस्वती वाग्देवता । चकारः पूर्वोक्तलक्ष्मीसेवासमुच्चयार्थः । तत् लोकोत्तरम् । अनेन स्तवनयोग्यत्वमुक्तम् । मिथुनं स्त्रीपुरुषयुग्मम् । द्विधा प्रयुक्तेन वक्ष्यमाणविधद्वयमनुसृत्य प्रयुक्तेन वाङ्मयेन वाग्जालेन नुनाव तुष्टाव । 'णू स्तवन' इति धातुः । शिवयोर्विवाहावसानसमये सरस्वती साक्षादेव मूर्तिमती समागत्य तुष्टावेत्यर्थः । द्विधा प्रयुक्तेन वाङ्मयेनेति यदुक्तं, तत्र स्त्रीपुरुषविभागकृतं नियमं दर्शयति— वरेण्यं वरं संस्कारपूतेन, वधूं सुखग्राह्यनिबन्धनेने[1]ति । वरेण्यं श्रेष्ठम् । अनेनोत्तमनायकत्वमुक्तम् । तेन च संस्कृतयोग्यत्वं ध्वन्यते । वरं भर्तारम् । संस्कारो व्याकरणा[2]नुसरणम् । तेन पूतेन

---

१. 'न ।' च पाठः. २ 'णसंस्कारस्तेन' च. पाठः.

शुद्धेन । वधूं भार्याम् । सुखग्राह्यनिबन्धनेन सुखेन ग्राह्यं निबन्धनं प्रबन्धो यस्य तेन । नहि प्रबन्धेन विना स्तुतिरुपपद्यत इति निबन्धनपदोपादानम् । अत्र सुखग्राह्यपदेन देशभाषारूपत्वं निबन्धनस्योक्तम् । देशभाषा चात्र प्राकृतभाषा, 'स्त्रीषु नाप्राकृतं वदेद्' इति वचनात् । उत्तमनायकं भगवन्तं संस्कृतभाषया, देवीं तु प्राकृतभाषया च वाग्देवता तुष्टावेत्यर्थः ॥ ८९ ॥

तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं
प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९० ॥

(प्रकाशिका)

ताविति । सन्धिषु मुखप्रतिमुखगर्भावमर्शनिर्वहणेषु । वृत्तीनां कैशिक्यारभटीसात्त्वतीभारतीनां भेदो व्यत्यासः । रसान्तरेषु शृङ्गारादिरसविशेषेषु । प्रतिबद्धः प्रतिनियतः रागो यत्र । प्रयोगं नाट्यम्[1] । आद्यम् । अत्र भरतस्था काचित्[2] कथा लिख्यते — ब्रह्मणः सकाशाद् भरतस्ताण्डवं शिक्षयामास । ततः परं लास्यशिक्षां प्रार्थितवान् । ब्रह्मा त्वेवमाह — लास्यप्रयोगस्य कैशिकीभूयिष्ठत्वात्, कैशिक्याश्च पुरुषैः प्रयोक्तुमशक्यत्वात् लास्यं तव न शिक्षणीयमिति । अत्र ब्रह्मणोक्तौ श्लोकौ—

"कैशिकी श्लक्ष्णनैपथ्या शृङ्गाररससम्भवा ।
अशक्या पुरुषैः साधु प्रयोक्तुं स्त्रीजनादृते ॥
इत्युक्त्वा तत्प्रयोगार्थं सृष्ट्वैवाप्सरसां गणम् ।
शिक्षयामास ललितं लास्यं तस्मात् तदादिकम् ॥"

---

१, 'व्यम् । अ' क. पाठः. २. 'पि क' घ. ङ पाठः.

इति । तदादिकमप्सरोजनोपक्रमम् । तस्मात् प्रयोगस्याद्यत्वम् । अनेन प्रयोगस्य प्रथमसंप्रदायत्वेन परिशुद्धत्वमुक्तम् । ललिताङ्गहारं सुकुमाराङ्गविक्षेपम् । अनेन लास्यात्मकत्वमुक्तम् ॥ ९० ॥

(विवरणम्)

अप्सरसां सेवाप्रकारमाह

ताविति । तौ मुहूर्तम् अप्सरसां प्रयोगम् अपश्यताम् । तौ पार्वतीपरमेश्वरौ । मुहूर्तं क्षणकालमित्यर्थः । अप्सरसाम् अप्सरःस्त्रीणां प्रयोगं नाट्यम् अपश्यतां दृष्टवन्तौ । प्रयोगस्य नाटकलक्षणानुसारित्वमाह — सन्धिषु व्यञ्जितवृत्तिभेदम् इति । सन्धिषु मुखप्रतिमुखादिषु । यथोक्तं —

"मुखं प्रतिमुखं गर्भोऽथावमर्शश्चतुर्थकः ।
तथा निर्वहणं चैव प्रबन्धे पञ्च सन्धयः ॥"

इति । व्यञ्जितः प्रकाशितः वृत्तीनां कैशिक्यादीनां भेदो व्यत्यासो यस्मिन् तम् । वृत्तीनामपि चतुर्विधत्वमुक्तं —

"कैशिक्यारभटी चैव सात्त्वती भारतीत्यमूः ।
चतस्रो वृत्तयो ज्ञेया नाटकेषु पृथग्विधाः ॥"

इति । 'अवान्तरैककार्यस्य सम्बन्धः सन्धिरुच्यते' इति सन्धिलक्षणं चोक्तम् । मुखप्रतिमुखादिषु सन्धिषु तत्तदुचिताभिः कैशिक्यारभट्यादिभिर्वृत्तिभिर्भिन्नप्रयोगमित्यर्थः । तत्तद्रसविशेषेषु तत्तद्रागविशेषनियमं चाह — रसान्तरेषु प्रतिबद्धरागमिति । रसान्तरेषु शृङ्गारादिरसविशेषेषु प्रतिबद्धः प्रतिनियतो रागो मतरीगुञ्जरीत्यादिरागो यत्र तम् । शृङ्गारवीरकरुणादिषु रसविशेषेषु तत्तदुचितेन रागेण प्रतिनियतमित्यर्थः । प्रयोगस्य प्रथमसम्प्रदायत्वेन परिशुद्धत्व-

माह — आद्यमिति । आद्यशब्देनात्र भरतशास्त्रप्रसिद्धा काचन कथा प्रतिपादिता । सा यथा —

"पद्मयोनेः सकाशात् प्राग् भरतः किल ताण्डवम् ।
शिक्षयामास सकलं लास्यशिक्षां ततः परम् ॥

भरतः प्रार्थयामास प्रोवाचैनमथात्मभूः ।
लास्यप्रयोगो भवता नैव शक्यः कथञ्चन ॥

लास्ये हि कैशिकी वृत्तिरधिका सा न पूरुषैः ।
प्रयोक्तव्या ततो लास्ये नारीणामेव नैपुणम् ॥

कैशिकी श्लक्ष्णनैपथ्या शृङ्गाररससम्भवा ।
अशक्या पुरुषैः साधु प्रयोक्तुं स्त्रीजनादृते ॥

इत्युक्त्वा तत्प्रयोगार्थं सृष्ट्वैवाप्सरसां गणम् ।
शिक्षयामास ललितं लास्यं तस्मात् तदादिकम् ॥"

इति । अत्र तदादिकमित्यनेनाप्सरोजनोपक्रमत्वमुक्तम् । तत एव प्रयोगस्याद्यत्वम् । तेन च प्रथमसंप्रदायत्वात् प्रयोगस्य विशुद्धत्वम् । शिष्यप्रशिष्यादिपरम्परया दूरान्तरिते हि संप्रदाये प्रयोगस्याप्यशुद्धिः सम्भाव्येत । यथोक्तं —

"शिष्यस्य बुद्धिमान्द्यादाचार्यस्योपदेशसंवरणात् ।
परिमुषितसंप्रदायानहह परे दूषयन्ति शास्त्रार्थान् ॥"

इति । प्रयोगस्य लास्यात्मकत्वमाह — ललिताङ्गहारम् इति । ललितः सुकुमारोऽङ्गहारोऽङ्गविक्षेपो यस्मिंस्तत् । 'अङ्गहारोऽङ्गविक्षेप' इत्यमरः ॥ ९० ॥

देवास्तदन्ते हरमूढभार्यं
किरीटबद्धाञ्जलयो निपत्य।
शापावसानेप्रतिलब्धमूर्ते-
र्ययाचिरे पञ्चशरस्य सेवाम्॥ ९१॥

(प्रकाशिका)

देवा इति। तदन्ते प्रयोगावसाने। अनेन शृङ्गारोद्दीपनसम्पदुक्ता। ऊढभार्यमित्यालम्बनसम्पत्। आभ्यां विज्ञापनाया उचितावसरत्वं द्योत्यते। अत एव वक्ष्यति—'काले प्रयुक्ता' (श्लो. ९३) इति। किरीटदष्टाञ्जलयो निपत्येति विज्ञापनायां समुदाचारः। शापावसानं[3] प्राक् 'परिणेष्यति पार्वतीं यदा' (स० ४. श्लो. ४२) इत्यादिनोक्तं[4] यत्, तत्र प्रतिलब्धमूर्तेर्देवप्रसादात् प्रत्यापन्नशरीरस्य॥ ९१॥

(विवरणम्)

इन्द्रादिदेवानां सेवायां[5] विशेषमप्याह[6]—

देवा इति। देवाः तदन्ते ऊढभार्यं हरं किरीटदष्टाञ्जलयः निपत्य पञ्चशरस्य सेवां ययाचिरे। देवाः इन्द्रादयः। येषामज्ञानविलसितात् कामो दग्धः, त एवेत्यर्थः। अनेन याचनयोग्यत्वमुक्तम्। तस्य प्रयोगस्यान्तेऽवसाने। अनेन शृङ्गारोद्दीपनविभावातिशयो दर्शितः। आलम्बनविभावातिशयमप्याह— ऊढभार्यमिति। ऊढा परिणीता भार्या येन तम्। अनेनोद्दीपनालम्बनविभावातिशयप्रतिपादनेन विज्ञापनोचितमवसरं दर्शयति। अत एव उत्तरश्लोके वक्ष्यति— 'काले प्रयुक्ते'त्यादि। हरं परमेश्वरम्। किरीटेषु मकुटेषु दष्टाः श्लिष्टा अञ्जलयो येषां तथाभूताः सन्तो निपत्य प्रणिपत्य। सेवावसानकाल इत्यर्थः। अनेन विज्ञापनस्य समुदाचारो दर्शितः। अयमपि

---

१. 'बद्धाञ्ज', २. 'ने प्रतिपन्नमू' मुद्रितकोशपाठः. ३. 'नं प' ङ. पाठः. ४. 'क्तम्। त' ङ. पाठः. ५. 'वावि' च. पाठः. ६. 'माह' च. पाठः.

फलप्राप्तौ हेतुः । पञ्चशरस्य कामस्य सेवां सम्भोगारम्भे तदुचितशरप्रयोगरूपां शुश्रूषां ययाचिरे याचितवन्तः । निजनियोगमात्रेण परित्यक्तशरीरस्य मदनस्यानुग्रहस्तदानीं सुकर इत्यवधार्य विबुधाः प्रार्थयामासुरित्यर्थः । शरीरयोगस्तु तस्य सुरजनाभ्यर्थनात् पूर्वमेव देवप्रसादाज्जात इत्याह — शापावसानप्रतिलब्धमूर्तेरिति । शापस्य 'अभिलाषमुदीरितेन्द्रियः' (स. ४. श्लो. ४१) इत्यत्रोक्तस्य निग्रहवचनस्यान्ते 'परिणेष्यति पार्वतीं यदा' इत्यादिनोक्ते शापावसानसमये प्रतिलब्धा प्रत्यापत्तिं प्राप्ता मूर्तिः शरीरं यस्य तस्य । पितामहशापावसानसमये भगवदनुग्रहादेव प्रत्यापन्नशरीरस्येत्यर्थः ॥ ९१ ॥

तस्यानुमेने भगवान् विमन्यु-
र्व्यापारमात्मन्यपि सायकानाम् ।
काले प्रयुक्ता खलु कार्यविद्भि-
र्विज्ञापना भर्तृषु सिद्धिमेति ॥ ९२ ॥

(प्रकाशिका)

तस्येति । विमन्युः, न तु तदनुरोधमात्रात् । अत्रात्मन्यपि सायकव्यापाराभ्युपगमेनान्यत् तस्य शरीरयोगादिकं देवेनानुमतमित्यवसातव्यम् ॥ ९२ ॥

(विवरणम्)

इत्थमभ्यर्थितस्य भगवतः प्रवृत्तिमाह —

तस्येति । भगवान् विमन्युः तस्य सायकानां व्यापारम् आत्मनि अपि

---

१. 'प्तेर्हेतुः' च. पाठः. २. 'मदेवस्य' छ. पाठः. ३. 'जयो' च. पाठः. ४. 'धाः पञ्चशरानुग्रहं प्रा' छ. पाठः. ५. 'लप्र'. ६. 'र्ये' मुद्रितकोशपाठः. ७. 'नि सा' क. पाठः. ८. 'वानु' ङ. पाठः.

अनुमेने । विगतो मन्युः कोपो यस्मात् तथाभूतः सन् । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । पार्वतीपरिणयनानन्तरं भगवान् मन्मथं प्रति स्वयमेव विगतकोपः सञ्जातः । न केवलमिन्द्रादिप्रार्थनामात्रमत्र हेतुरिति भावः । तस्य कामदेवस्य सायकानां शराणां व्यापारं प्रहाररूपां प्रवृत्तिम् आत्मनि स्वस्मिन्नपि । अपिशब्देनात्मनि सायकव्यापाराभ्यनुज्ञाया असम्भाव्यत्वं दर्शितम् । तेन च भक्तानुग्रहशीलत्वं भगवतो द्योत्यते । अनुमेने अभ्यनुज्ञातवान्। उक्तमर्थमर्थान्तरन्यासेन समर्थयते — कालविद्भिः काले भर्तृषु प्रयुक्ता विज्ञापना सिद्धिम् एति खलु इति । कालविद्भिः 'न तु कार्यान्तरासक्ते नापि रोषकषायिते' इत्यादिविज्ञापनकालवेदिभिरित्यर्थः । काले अवसरे भर्तृषु स्वामिषु प्रयुक्ता विज्ञापनाभ्यर्थना सिद्धिं फलप्राप्तिम् एति प्राप्नोति । खलुशब्दः प्रसिद्धौ । स च समर्थनाद्योतकः । अवसरज्ञानकुशलैर्भृत्यैस्तत्तदवसरे प्रार्थितमर्थं स्वामिनोऽनुमन्यन्त इति लोकप्रसिद्धमेवेत्यर्थः ॥ ९२ ॥

**अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य**
**क्षितिधरपतिकन्यामाददानः करेण ।**
**कनककलशरक्षाशक्तिशोभासनाथं**
**क्षितिविरचितशय्यं कौतुकागारमागात् ॥ ९३ ॥**

(प्रकाशिका)

अथेति । कलशः पूर्णकुम्भः । रक्षाशक्तिः रक्षार्थायुधविशेषः । क्षितिविरचितशय्यम्, 'अत ऊर्ध्वमक्षारालवणाशिनावधश्शायिनौ ब्रह्मचारिणौ स्याताम्' (गृ० १. ८. १०) इत्याश्वलायनवचनात् । अत ऊर्ध्वं विवाहादूर्ध्वमित्यर्थः । तत एव कौतुकागारं मङ्गलगृहं मन्तव्यं, न तु कामगृहं, यथा दक्षिणावर्तव्याख्याने ॥ ९३ ॥

---

१. 'लु । का' च. पाठः. २. 'तु' च. पाठः. ३. 'युक्तं भक्ति' मुद्रितकोशपाठः. ४. 'र्ध्वम् । त' घ. ङ. पाठः.

( विवरणम् )

इत्थं प्रतिपादितं विवाहोत्सवमुपसंहरति —

अथेति । अथ इन्दुमौलिः तान् विबुधगणान् विसृज्य क्षितिधरपति-कन्यां करेण आददानः कौतुकागारम् आगात् । अथ कामदेवानुग्रहानन्तरम् इन्दुमौलिश्चन्द्रशेखरः विबुधानां देवानां गणान् समूहान् विसृज्य । तेषां स्वपुरप्रवेशायाज्ञां कृत्वेत्यर्थः । क्षितिधराणां पर्वतानां पत्युः कन्यां पुत्रीं पार्वतीम् । करेणाददानः हस्तेन हस्ते गृहीत्वेत्यर्थः । कौतुकागारं मङ्गलगृहम् आगात् प्राप्तवान् । विवाहानन्तरं देवो देव्या सह दीक्षागृहमागादित्यर्थः । कौतुकागारस्य लौकिकाचारसिद्धं विशेषमाह — कनककलशरक्षाशक्तिशोभा-सनाथमिति । कनकमयः कलशः पूर्णकुम्भः । रक्षार्था शक्ती रक्षाशक्तिः । शक्तिरायुधविशेषः । दीक्षागृहे शक्तिनिक्षेपो दुर्देवतापरिहारार्थः । स च देशाचारसिद्धः । पूर्णकुम्भशक्तिभ्यां मङ्गलालङ्कारान्तराणि प्रदीपदर्पणादीन्यप्युपलक्ष्यन्ते । कनककलशरक्षाशक्तीनां शोभया सनाथं सहितमित्यर्थः । शास्त्रसिद्धं विशेषमाह — क्षितिविरचितशय्यमिति । क्षितौ भूप्रदेशे विरचिता शय्या शयनीयं यस्मिन् । 'अत ऊर्ध्वमक्षारालवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्याताम्' इत्याश्वलायनगृह्यानुसारेणेयमुक्तिः । अत ऊर्ध्वं विवाहादूर्ध्वम् । दिवसत्रयमित्यर्थः ॥ ९३ ॥

**नवपरिणयलज्जाभूषणां तत्र गौरीं**
**वदनमपहरन्तीं तत्कृतोत्क्षेपमीशः ।**
**अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्**
**प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९४ ॥**

---

१. 'म' छ. पाठः. २. 'लोका' छ. पाठः. ३. 'र' छ. पाठः.
४. 'श' छ. पाठः ५. 'ताक्षेप' मुद्रितकोशपाठः.

(प्रकाशिका)

नवेति । नवोऽचिरनिर्वृत्तः । उत्क्षेप उदञ्चनम् । शयनसख्यो विस्रब्धसख्य इत्यर्थः । प्रमथाः पारिषदा भिङ्गिरिटिप्रभृतयो हास्याधिदेवताः । 'शृङ्गारो विष्णुदेवत्यो हास्यः प्रमथदैवत' इति भरतः । मुखविकारो हास्यप्रयोगात्मकः । स च लज्जामपहरति । यथा गोनर्दीयः—

"हास्येन नर्मवचसा नवोढां लज्जितां प्रियाम् ।
विमुक्तलज्जां कुर्वीत निपुणैश्च सखीजनैः ॥"

इति । अत्र वदनापहरणं कृच्छ्राद् वाग्दानं गूढहासश्च लज्जानुभावैः । वदनोत्क्षेपणं सखीभिरालापनं हास्यप्रयोगश्च नववधूविषयाः नायकोपक्रमाः । एतच्छायायोनिरर्थो बालरामायणे—

"स्नायुन्यासनिबद्धकीकसतनुं नृत्यन्तमालोक्य मां
चामुण्डाकरतालकुट्टितलयं वृत्ते विवाहोत्सवे ।
ह्रीमुद्रामपनुद्य यद् विहसितं देव्या समं शम्भुना
तेनाद्यापि मयि प्रभुः स जगतामास्ते प्रसादोन्मुखः ॥"

इति । इयं च भिङ्गिरिटेरुक्तिः ॥ ९४ ॥

इत्यरुणगिरिनाथविरचितायां कुमारसम्भवप्रकाशिकायां

सप्तमः सर्गः ।

---

१. 'परिषदः भिङ्गिरि' ङ. पाठः. २. 'मधुना नर्मवचसावर्जितां' ङ. पाठः. ३. 'वाः' क. ङ. पाठः. ४. 'ङ्गि' घ. पाठः.

(विवरणम्)

अथ सम्भोगवर्णनरूपस्योत्तरसर्गस्य बिन्दुमुपक्षिपति —

नवेति। ईशः तत्र नवपरिणयलज्जाभूषणां गौरीं प्रमथमुखविकारैः गूढं हासयामास। ईशः परमेश्वरः तत्र कौतुकागारे। दीक्षादिषु क्रियाकलापेष्वतीतेष्वित्यर्थात् सिध्यति। नवेन नूतनेन परिणयेन विवाहेन हेतुना या लज्जा सैव भूषणं यस्यास्ताम्। नवोढानां हि वधूनां लज्जा भूषणमेव। लज्जाया मनोहारित्वाद् भूषणत्वरूपणम्। गौरीं पार्वतीम्। प्रमथा भिङ्गिरिटिप्रभृतयो रुद्रपारिषदाः। 'प्रमथाः स्युः पारिषदाः' इत्यमरः। 'प्रमथाः स्युर्भूतगण' रुद्रपारिषदा गणाः' इति भोजेश्च। तेषां मुखविकारैर्हास्यप्रयोगरूपैर्वदनव्यापारविशेषैः गूढमत्यन्तप्रच्छन्नं यथा भवति तथा हासयामास हासं कारितवान्। अत्र गूढत्वं लज्जाया अनुभावः, हासस्तु हास्यप्रयोगस्य। हास्यप्रयोगो हि लज्जामपहरति। यथाह गोनर्दीयः —

"हास्येन मधुना नर्मवचसावर्जितां प्रियाम्।
विमुक्तलज्जां कुर्वीत निपुणैश्च सखीजनैः॥"

इति। हास्यप्रयोग एव केवलं लज्जामपहरति, किमुत हास्यरसदेवताभूतानां भिङ्गिरिटिप्रभृतीनां तत्प्रयोग इति भावः। हास्यरसस्य भृङ्गिरिटिप्रभृतयो देवताः। यदाह भरतः — 'शृङ्गारो विष्णुदेवत्यो हास्यः प्रमथदैवतः' इति। प्रयोगान्तराणां निष्फलत्वमाह — तदित्यादिना विशेषणद्वयेन। तत्रादौ देवप्रवृत्तेरेव लज्जापरतन्त्रायां देव्यां वैफल्यमाह — तत्कृतोत्क्षेपं वदनम् अपहरन्तीम् इति। तेनेशेन कृतो विहित उत्क्षेप उदञ्चनं यस्य तत्। ईशस्यात्र कर्तृभूतस्यापि परोक्षवाचिना तच्छब्देन परामर्शः 'वृषेव सीतां तदवग्रहक्षताम्' (स. ५. श्लो. ६१) इत्यादिवद् द्रष्टव्यः। तद् वदनमिति पृथक्कृत्य वा

---

१. 'स्युर्भू' च. पाठः. २. 'जः।' च. पाठः. ३. 'न्तच्छ' च. पाठः.

योजनीयम् । तत्र तच्छब्देन लोकप्रसिद्धमाधुर्यादिगुणशालित्वमुक्तम् । मनोहारित्वेन सततं दिदृक्षितत्वात् परिचयेन शनैः शनैर्लज्जापनोदार्थं च देवेनैवोदञ्चितं मुखमित्यर्थः । अपहरन्तीं नमयन्तीम् ।

"मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लबाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु[1] ॥"

इति शाकुन्तलोक्तप्रकारोऽनेन दर्शितः । देवनियुक्तानां निपुणानां सखीजना-नां[2] प्रवृत्तेरप्य[3]सम्पूर्णफलत्वमाह — शयनसखीभ्यः अपि कथञ्चिद् दत्तवाचम् इति । शयनसखीभ्यो विस्रब्धसखीभ्य इत्यर्थः । याः सख्यः पूर्वं शयनसमयेऽपि देवीं न विमुञ्चन्ति, ताभ्योऽपीति भावः । किं पुनरन्याभ्य इत्यपिशब्दार्थः । कथञ्चित् कथमपि दत्ता वाग् यया ताम् । सखीभिर्बहुषु वाक्येषु भाषितेषु यस्य कस्यचिदेवोत्तरं ददाति । तदपि न देवसन्निधौ , नापि देवानुबद्धासु कथास्विति कथञ्चिदित्यस्यार्थः । अत्र गूढहासो वदनापहरणं कथञ्चिद् वाग्दानं च लज्जाया अनुभावः । लज्जापनोदनार्थमात्मना कृते वदनोत्क्षेपे निष्फले देवनियुक्तानां सखीनामालापेऽपि विफलप्राये प्रमथैः कारितो हास्यप्रयोग एव सफलो जात इत्याभिप्रायः । उक्तश्चायमेवार्थो बालरामायणे भिङ्गिरिटिवाक्यप्रकरणे —

"स्नायुन्यासनिबद्धकीकसतनुं नृत्यन्तमालोक्य मां
चामुण्डाकरतालकुट्टितलयं वृत्ते विवाहोत्सवे ।
ह्रीमुद्रामपनुद्य यद् विहसितं देव्या समं शम्भुना
तेनाद्यापि मयि प्रभुः स जगतामास्ते प्रसादोन्मुखः ॥"

॥ ९४ ॥

---

१. 'तत् ॥' च. पाठः. २. 'नामपि प्र' च. पाठः. ३. 'रस' च. पाठः.

सर्गः सप्तम उत्तमोऽयममितैः पद्यैरवद्येतरै-
रुद्यत्स्वादुरसैर्गभीरमधुरैराद्योतितार्थोदयः ।
हन्तेमा मम निर्गुणा भणितयो बुद्धिस्तु मन्दोद्यमा-
प्यस्मिन् मद्गुरुगौरवादकरवं निर्विक्रियां व्याक्रियाम् ॥

इति श्रीकृष्णशिष्यस्य नारायणस्य कृतौ

कुमारसम्भवविवरणे

सप्तमः सर्गः ।

## अथाष्टमः सर्गः ।

पाणिपीडनविधेरनन्तरं
शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभूत्
कामदौहृदसुखं मनोहरम् ॥ १ ॥

(प्रकाशिका)

अथोपक्षिप्तं नववधूविषयं देवस्य प्रथमानुरागानन्तरसम्भोगं वर्णयति—

पाणीति । 'तथा परिणयोद्वाहौ विवाहः पाणिपीडनमि' ति सिंहः । कामविषये यद् दौहृदम् इच्छा, तत् कामदौहृदम् । तेन च तद्विषयभूत आलिङ्गनादिर्लक्ष्यते । तज्जनितं सुखं कामदौहृदसुखम् । सम्भोगसुखमित्यर्थः । तस्य च विवाहानन्तरत्ववचनेन प्रथमानुरागानन्तरत्वमुक्तम् । तदानन्तर्याच्च देव्या देवं प्रति भावस्याभिलाषस्य साध्वसस्याधाष्ट्यस्य च परिग्रहः । अथवा भावमिश्रं साध्वसं भावसाध्वसम् । साध्वसस्यैव प्राधान्येन सम्भोगस्वादुत्वजनकत्वेनोत्तरश्लोकेषु वर्णयिष्यमाणत्वात् समासेऽपि तस्यैव प्राधान्यमङ्गीकार्यम् । तच्च भावमिश्रत्वाद् रमणीयम् । तस्य परिग्रहाद् देवं प्रति तत् सुखं मनोहरमभूत् । नायिकाभावदर्शनप्रवृद्धभावस्य नायकस्य तस्याः साध्वसपरतन्त्रत्वात् कथञ्चिदसमग्रलभ्यमानानि मनोरथगुणितान्यालिङ्गनादीनि मनो जहुरित्यर्थः ॥ १ ॥

(विवरणम्)

अथ पूर्वसर्गोपक्षिप्तं देवस्य नववधूविषयं प्रथमानुरागानन्तरसम्भूतं सम्भोगं वर्णयितुमष्टमः सर्गोऽयमारभ्यते । तत्र माधवेनोक्तम् — अत्राष्टमः सर्गो गौरीसम्भोगवर्ण(नत्वा ? ना)द् वाचयितुं श्रोतुं व्याख्यातुं च न युक्तः, एतच्छीलानां देवताशापादायुषः क्षयो भविष्यतीति । दक्षिणावर्तेन पुनः—अस्य प्रकरणस्य शिवयोः सम्भोगविषयत्वाद् रसभावार्थान्[4]

१. 'दोहृदमनोहरं वपुः ॥' मुद्रितकोशपाठः. २. 'गान्तरं स' घ. पाठः. ३. 'काद क. ग. पाठः. ४. 'वान्' छ. पाठः.

विविच्य वक्तुं बिभेमि। तस्मादन्वयमात्रमत्राधिक्रियत इत्युक्तम्। अरुणाचलनाथेन तु तदुभयमपि दूषितम्। अयं किल तस्याभिप्रायः—पार्वतीपरमेश्वरयोः शरीरग्रहणमात्रमपि लोकानुग्रहार्थमेव। यथोक्तं भगवता 'विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः' (स. ६. श्लो. २६) इति। देव्या अपि शरीरग्रहणादिकं लोकानुग्रहार्थमेवेति देवीमाहात्म्यादिषु तत्र तत्र प्रतिपादितम्। त्रिविधा हि लोके जनाः मुक्ता मुमुक्षवः सक्ताश्चेति। तत्र मुक्तानां कृतकृत्यत्वादेतयोर्लीलायितानां सञ्चिन्तनश्रवणादिभिः परब्रह्मानुभवतुल्यकुल्यः परमाह्लादो भवतीत्यनुग्रहो भूयानेव। मुमुक्षूणां तु लीलायितश्रवणानुसन्धानादिभिरन्तःकरणशुद्धिरूपो महानुग्रहः स्पष्ट एव। किञ्च महत्तरैरपि तपश्चरणैरुभाभ्यामपि तदनुग्रह एव कृतः, इत्थं कर्तव्यमित्युपदेशमात्रपरत्वात् तयोस्तपश्चरणानाम्। कामिनां तु चित्तावर्जनं सम्भोगशृङ्गारानुगृहीतकथाश्रवणेनैव[1] सुकरमिति लीलागृहीतशरीरौ भगवन्ताविमं प्रकारमारब्धवन्तौ। येन केनापि प्रकारेण भगवति मनःप्रणिधानमेव मुक्तिकारणमित्युक्तं भागवते—

> "कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा।
> नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते॥"

इति। महाकविरपि कामिनां चित्तं पार्वतीपरमेश्वरपादारविन्दासक्तं[2] विधातुमेवाष्टमेऽस्मिन् सर्गे वात्स्यायनशास्त्रानुसारिणीं पदवीमुररीचकार। तस्माल्लोकोत्तरलौकिकनायकव्यवहारमखिलजनानुग्रहार्थमनुकुर्वतोरेतयोर्महानटयोस्तदनुगुणानां प्रबन्धानां निर्माणतद्व्याख्यानश्रवणादिभिरनुग्रह एव भूयानाविर्भवति। तदनुबद्धानि वचनानि तु स्तुतावेव पर्यवस्यन्तीत्यलमतिप्रसङ्गेन। प्रकृतमेवा[3]नुसरामः। वक्ष्यमाणमेवार्थं[4] संक्षेपतः प्रतिपादयति—

पाणीति। पाणिपीडनविधेः अनन्तरं शैलराजदुहितुः हरं प्रति भावसाध्वसपरिग्रहात् कामदोहदसुखं मनोहरम् अभूत्। पाणिपीडनं विवाहः। 'विवाहोपयमौ समौ। तथा परिणयोद्वाहोपयमाः पाणिपीडनमि'त्यमरः। पाणिपीडनस्य विधिः पाणिपीडनविधिः। विधिर्विधानम्। तस्यानन्तरम्। शैलराजस्य दुहितुः पुत्र्याः पार्वत्याः हरं प्रति परमेश्वरमुद्दिश्य भावस्याभिलाषस्य साध्वसस्य अधार्ष्ट्यस्य च परिग्रहात् स्वीकारात्। भावमिश्रस्य साध्वसस्य स्वीकारादिति मध्यमपदलोपी वा समासः। तथात्वे[5] साध्वसस्यैव प्राधान्यं प्रतिपादितं भवति। साध्वसं हि[6] सम्भोगे स्वादुतां जनयति। अत

---

१. 'देवावि' छ. पाठः. २. 'रयोः पादारविन्दावस' छ. पाठः. ३. 'मनु' छ. पाठः. ४. 'मर्थमेव सं' छ. पाठः. ५. 'त्वेन सा' क. पाठः. ६. 'हिभोगस्वा' क. पाठः.

एवोत्तरश्लोकेषु तथैव प्रतिपाद्यते । कामविषयं दौहृदं कामदौहृदम् । दौहृद-मिच्छा । तया च तद्विषयभूतमालिङ्गनचुम्बनादिकं लक्ष्यते । तज्जनितं सुखं कामदौहृदसुखम् । सम्भोगसुखमित्यर्थः । मनोहरमभूत्, हरं प्रतीत्यत्राप्यनुष-ज्यते । अत्र सम्भोगसुखस्य पाणिपीडनानन्तरत्वकथनेन प्रथमानुरागानन्तरंभव-त्वमुक्तं, तेन च देव्या देवं प्रति भावसाध्वसपरिग्रहस्योपपत्तिः, तेन च कामसु-खानां देवमनोहरत्वम् । साध्वसपरतन्त्रायां देव्यामसमग्रलभ्यानि मनोरथश-तगुणितान्यालिङ्गनादीनि देवस्य मनो जहुरित्यर्थः ॥ १ ॥

व्याहृता प्रतिवचो न सन्दधे
गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी
सा तथापि रतये पिनाकिनः ॥ २ ॥

(प्रकाशिका)

तदेव वर्णयति—

व्याहृतेति । प्रियावचनश्रवणकौतुकिना देवेन तत्प्रसङ्गार्थं व्याहृता सा प्रतिवचो दातुं नारभतैव । गमननिवारणार्थं गृहीतांशुकापि गन्तुमेवैच्छत् । आलिङ्ग्यमानापि पराङ्मुखी शयनमसेवत । एवं परस्पर-सँल्लापादिषु साध्वसादसमग्रेष्वपि 'दुर्लभाभिनिवेशी काम' इति न्या-यात् स तस्य प्रीतये बभूवेत्यर्थः । अत्र दक्षिणावर्त आह—"अस्य प्र-करणस्य शिवयोः सम्भोगविषयत्वाद् रसभावान् विविच्य वक्तुं बिभेमि, तस्मादन्वयमात्रादि क्रियत" इति । एतदल्पज्ञताविलसितं, यतः प्र-सिद्धलौकिकोत्तमनायकव्यवहारमनुकुर्वतोरनयोर्महानटयोर्लीलामात्रात्मि-कासु प्रवृत्तिषु परमार्थबुद्धिर्यस्यास्ति तस्यैवायं दोषः । यस्य तु सा नास्ति तस्य तद्विवेचनमपि शिवयोः स्तुतिः पर्यवस्यति ॥ २ ॥

---

१. 'वचनं' छ. पाठः. २. 'रत्व' क. पाठः. ३. 'ल्पता' ङ. पाठः.
४. 'नायिकानायकोत्तमयोर्व्यव' क. पाठः.

(विवरणम्)

उक्तमर्थमेव विस्तरतः प्रतिपादयति — व्याहृतेत्यादिना —

व्याहृतेति । सा व्याहृता प्रतिवचः न सन्दधे । सा पार्वती व्याहृता मञ्जुलतरवल्लभासल्लापश्रवणकौतुकाद् देवेन प्रसङ्गार्थं किमप्युक्ता सती प्रतिवचः उत्तरवाक्यं न सन्दधे नोपाददे । पुनश्च सम्मुखावस्थानमात्रेऽपि लज्जिताया देव्याः प्रियवचनश्रवणानन्तरभवां[2] प्रवृत्तिमाह[3]—अवलम्बितांशुका गन्तुम् ऐच्छद् इति । गमननिवारणार्थं देवेनावलम्बितं गृहीतमंशुकं वस्त्रं[4] यस्याः तथाभूतापि । गन्तुमैच्छत् ततो गमनं कर्तुं केवलमारेभे । शयनेऽपि साध्वसपारतन्त्र्यमाह — पराङ्मुखी शयनं सेवते स्म इति । पराङ्मुखी सादरमालिङ्ग्यमानाप्यनभिमुखी सती शयनं शय्यां सेवते स्म असेवत । इत्थं परस्परसल्लापादिषु दुर्लभेष्वपि देवस्य तद्विषयं रागोत्कर्षमाह — सा तथा अपि पिनाकिनः रतये इति । सा पार्वती । तथापि सल्लापादिषु दुर्लभेष्वपीत्यर्थः । पिनाकिनः परमेश्वरस्य रतये प्रीतये । बभूवेति शेषः । 'दुर्लभाभिनिवेशी काम' इति न्यायोऽनेन दर्शितः ॥ २ ॥

**कैतवेन शयिते कुतूलात्**
**पार्वती प्रतिमुखं निपातितम् ।**
**चक्षुरुन्मिषति सस्मितं प्रिये**
**विद्युदाहतमिव न्यमीलयत् ॥ ३ ॥**

(प्रकाशिका)

अथ षड्भिः श्लोकैः साध्वसस्य क्रमाच्छैथिल्यं दर्शयति—

**कैतवेनेति । मयि सुप्ते किमियं करिष्यतीति ज्ञातुं व्याजसुप्ते देवे तत्स्वापपरीक्षाकुतूहलेन तन्मुखाभिमुखं चक्षुः पुनस्तस्मिन् सनर्मस्मितमुन्मिषितलोचने सति विद्युता प्रतिहतमिव ससाध्वसं[5] निमीलयामासेत्यर्थः ।**

---

१. 'तां दे' छ. पाठः. २. 'प्रतिश्रय' ङ. पाठः. ३. 'प्रतिवृ' छ. पाठः. ४. 'सनंय' छ. पाठः. ५. 'साध्वसान्निमी' ङ. पाठः.

अत्र सुप्तस्यापि कमितुर्मुखानिरीक्षणात् साध्वसस्य किञ्चिच्छैथिल्य-मुक्तम् । इत उत्तरेष्वपि यथोत्तरं शैथिल्यमवसेयम् ॥ ३ ॥

(विवरणम्)

अथ परिचयवशात् क्रमेण साध्वस[1]शैथिल्यं दर्शयति षड्भिः श्लोकैः । तत्रादौ सुप्ते भर्तरि तन्मुखनिरीक्षणं शक्यमासीदिति साध्वसस्य पूर्वावस्थातः किञ्चिच्छैथिल्यमाह —

कैतवेनेति । प्रिये कैतवेन शयिते पार्वती कुतूहलात् प्रतिमुखं निपातितं चक्षुः प्रिये सस्मितम् उन्मिषति विद्युदाहतम् इव न्यमीलयत् । प्रिये कान्ते कैतवेन व्याजेन शयिते सुप्ते । स्वापमुपगते मयि किमियं करिष्यतीत्यवधारयितुं स्वापव्याजमुपगते सतीत्यर्थः । कुतूहलात् तन्मुखारविन्द[2]विलोकनकौतुकात् । प्रतिमुखं तन्मुखाभिमुखं निपातितं नितरां पातितम् । सुखावलोकनं यथा भवति तथा निवेशितमित्यर्थः । चक्षुः लोचनम् । सस्मितं सनर्मस्मितमित्यर्थः । उन्मिषति उन्मीलितवति सति । चक्षुरिति अत्राप्यनुषज्यते । विद्युता सौदामन्या आहतं प्रतिहतामिव न्यमीलयद् निमीलितवती । उत्प्रेक्षया चक्षुर्निमीलनस्य साध्वसादस्वतन्त्रता द्योत्यते ॥ ३ ॥

नाभिदेशनिहितः सकम्पया
शङ्करस्य रुरुधे तया करः ।
तद्दुकूलमथ चाभवत् स्वयं
दूरमुच्छ्वसितनीविबन्धनम् ॥ ४ ॥

(प्रकाशिका)

नाभीति । नीवीविस्रंसनाय नाभिदेशन्यस्तो देवस्य करो वेपथुमत्या तया सलज्जया रुद्धः, तथापि प्रियतमसन्निधानवशात् तस्या दुकूलं स्वयमेव दूर[3]विस्र[4]स्तनी[5]विकमासीदित्यर्थः । यथाह रासिकचूडामणि-

१. 'सस्य शै' छ. पाठः. २. 'न्दावलो' छ. पाठः. ३. 'रं वि' क. पाठः. ४. 'न्य' ङ. पाठः. ५. 'वी' छ. पाठः.

रमरुकः—'कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनाद्' इति । अत्र नीवीस्पर्शस्य रोधात् तत्प्राग्भावी स्तनमर्दनादिः करव्यापारस्तया सोढ इति प्रतीयते ॥ ४ ॥

(विवरणम्)

पुनरपि क्रमेण साध्वसस्य पूर्वावस्थातः शैथिल्यमाह—

नाभीति । नाभिदेशनिहितः शङ्करस्य करः सकम्पया तया रुरुधे । नीवीविस्रंसनकाङ्क्षया नाभिदेशे नाभिप्रदेशे निहितः न्यस्तः शङ्करस्य परमेश्वरस्य करः हस्तः सकम्पया लज्जापारतन्त्र्याद् वेपथुमत्या तया पार्वत्या रुरुधे रुद्धोऽभूत् । इत्थं लज्जाया अनुभावमुक्त्वा रागस्याप्यनुभावं[1] दर्शयति—अथ च तद्दुकूलं स्वयं दूरम् उच्छ्वसितनीविबन्धनम् अभवद् इति । अथ च तथापीत्यर्थः । तद्दुकूलं तस्याः पार्वत्याः दुकूलं वसनम् । स्वयं देवस्य करव्यापारेण विनैवेत्यर्थः । दूरमत्यन्तमुच्छ्वसितं विस्रस्तं नीव्या बन्धनं यस्य तथाविधमभूत् । यद्यपि देवेन नीवीविस्रंसनाय नाभिदेशे निहितः करो देव्या रुद्धः, तथापि प्रियतमसन्निधानवशाद् देव्या दुकूलं स्वयमेव विस्रस्तनीवीबन्धनमभूदि[2]त्यर्थः । प्रियतमसान्निधाने स्त्रीणां नीवी स्वयमेव विगलतीति कामशास्त्रप्रसिद्धम् । अमरुकेण चोक्तं—'कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनादि'ति । अत्र नीवीविस्रंसनिरोधवचनेन तत्पूर्वभाविनः स्तनविमर्दनचुम्बनादिव्यापारा देव्या कथमपि सोढा इति प्रतीयते । तेन च भावसाध्वसयोर्मध्ये साध्वसस्य पराजयारम्भो व्यज्यते ॥ ४ ॥

**एवमालि! निगृहीतसाध्वसं**
**शङ्करो रहसि सेव्यतामिति ।**
**सा सखीभिरुपदिष्टमाकुला**
**नास्मरत् प्रमुखवर्तिनि प्रिये ॥ ५ ॥**

१. 'स्यानु' क. पाठः. २. 'मासीदि' छ. पाठः.

(प्रकाशिका)

एवमिति । एवंशब्देन सामान्यवाचिनापि कश्चिदेव समुचितः प्रियसेवाप्रकारोऽभिधीयते । शङ्करः सर्वाकारमधुर इत्यर्थः । तेन तत्सेवायाः परमस्वादुत्वमुक्तम् । अत्र प्रियाभिमुखवर्तित्वलक्षणकारणबलात् प्रबलेनाकुलत्वहेतुना साध्वसेन साध्वसनिग्रहात्मकोपायोपदेशपूर्वके प्रियसेवाप्रकारोपदेशे स्मृतिजनकः संस्कार एव प्रमोषं नीतः । अत्र चातुष्षष्टिकविषये सख्युपदेशश्रवणग्रहणव्यवसायः साध्वसशैथिल्यं द्योतयति ॥ ८ ॥

(विवरणम्)

अथ सखीजनकृतस्य कामशास्त्रानुसारिणः प्रियतमसेवाप्रकारोपदेशस्य श्रवणं तत्त्वतस्तदर्थावधारणं च क्रमेण शक्यमासीदिति भङ्ग्यन्तरेणाह —

एवमिति । आलि! त्वया शङ्करः निगृहीतसाध्वसं रहसि एवं सेव्यताम् इति सखीभिः उपदिष्टं प्रिये प्रमुखवर्तिनि सा न अस्मरत् । आलि! हे सखि! । अस्मान् प्रति साध्वसमवलम्ब्यालम् । अस्मदुक्तमर्थं सम्यगवधारयेत्यनया सम्बुद्ध्या व्यज्यते । शं सुखं करोतीति शङ्करः । अनेन रूपतः शीलतोऽपि माधुर्यमुक्तम् । तेन तत्सेवायाः[1] परमानन्दकरत्वं प्रतिपादितम् । निगृहीतसाध्वसमिति क्रियाविशेषणम् । निगृहीतं परित्यक्तं साध्वसं यथा भवति तथा सेव्यतामित्यर्थः । रहसि विजने । अनेन साध्वसनिग्रहस्य[3] सुकरत्वमुक्तम् । एवमित्यनेन कामशास्त्रप्रसिद्धः प्रियतमसेवाप्रकारोऽभिधीयते । सेव्यताम् आराध्यताम् । इतिशब्दः उपदेशप्रकारवाची । सखीभिः आत्मनः प्रियवयस्याभिः । अनेन विस्रम्भास्पदत्वमुक्तम् । तेन च उपदेशयोग्यत्वं प्रतिपादितम् । 'विमुक्तलज्जां कुर्वीत निपुणैश्च सखीजनैरि'ति न्यायोऽनेन दर्शितः । उपादिष्टम् अर्थमित्यर्थात् सिध्यति । प्रिये कान्ते प्रमुखवर्तिनि अभिमुखावस्थानशीले सति सा पार्वती नास्मरत् । स्मरणाभावे हेतुमाह — आकुलेति । प्रियाभिमुखवर्तित्व-

१. 'सादिशै' क. ख. ग. पाठः. २. 'या आन' क. पाठः. ३. 'सस्य निग्रहसु' छ. पाठः.

लक्षणेन कारणेनानुगृहीतात् साध्वसादुत्पन्नेन मनोविकारेणाकुलेत्यर्थः । अत एव प्रियतमसेवाप्रकारोपदेशस्मृतिजनकस्य संस्कारस्यापि प्रमोषोपपत्तिः । पूर्वं हि 'अपि शयनसखीभ्यः' (स०७. श्लो०९४) इत्यत्र सखीजनेष्वपि कथञ्चिद् वाग्दानमुक्तम् । इदानीं तु सखीजनोपदेशश्रवणं तदर्थग्रहणं च शक्यमासीदिति साध्वसस्य शैथिल्यं प्रतिपादितम् ॥ ५ ॥

अप्यवस्तुनि कथाप्रवृत्तये
प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिगृह्य पार्वती
मूर्धकम्पमयमुत्तरं ददौ ॥ ६ ॥

(प्रकाशिका)

अपीति । अवस्तुनि त्वयात्र गगने[2] किं गन्धर्वनगराकारं दृष्टं न वेत्येवमादितुच्छे वस्तुन्यपि प्रश्नः कथाप्रवृत्तये वाङ्मिश्रणाय । अनङ्गशासनमित्यनेन परमधूर्तोऽपि स तद्गुणजालाकृष्टस्तथा तदनुवर्तने प्रायतिष्ठेति द्योत्यते । वीक्षितेन परिगृह्य तदाकारविलोकितेन धूर्तोऽयमिति परिचिन्त्य । अत्र मूर्धेत्यादिना यद्यपि कथाप्रवृत्ते[3]र्निवृत्तिरुक्ता, तथाप्युत्तरप्रवृत्तेः वीक्षणाच्च लज्जाया गलितप्रायता द्योत्यते ॥ ६ ॥

(विवरणम्)

अथ क्रमेण प्रियतमावलोकनतद्वचनश्रवणावधारणादिकं शक्यमासीदित्याह —

अपीति । पार्वती कथाप्रवृत्तये अवस्तुनि अपि प्रश्नतत्परम् अनङ्गशासनं वीक्षितेन परिगृह्य मूर्धकम्पमयम् उत्तरं ददौ । कथायाः परस्परसंलाँ-

---

१. 'वीक्ष्य पा' मुद्रितकोशपाठः. २. 'ने ग' क. पाठः. ३. 'त्तेरनिवृ' ग. घ. ङ., 'त्तये निवृ' क. पाठः. ४. 'तिपत्तेः' क. ग. पाठः ५. 'त्वं' घ. ङ. पाठः.

पस्य प्रवृत्तये उत्पत्तये । वाङ्मिश्रणायेत्यर्थः । अवस्तुनीति विषयसप्तमी । अत्यन्तशून्ये वस्तुनि विषयेऽपीत्यर्थः । प्रश्ने अनुयोगे तत्परं तात्पर्यवन्तम् । अद्य प्रभाते गगनमण्डले गन्धर्वाणां नगरमाविर्भूतम् । तत्र च गन्धर्वराजः सभार्यः प्रतिवसति स्म । तत् किं त्वया दृष्टम् अथवादृष्टमित्यादीनि शून्यानि वस्तूनि परस्परवाङ्मिश्रणमात्राकाङ्क्षया पृच्छन्तमित्यर्थः । अनङ्गशासनमि-त्यनेन यः किल परमधूर्तः पूर्वं कामदेवमपि निजग्राह, सोऽपीदानीं देवीगु-णगणाकृष्टचित्तस्तदनुसरणे तथा प्रयासं कृतवानिति द्योत्यते । वीक्षितेन तदा-कारावलोकनेन परिगृह्य अङ्गीकृत्य । परमधूर्तोऽयमित्यवधार्येत्यर्थः ।

"आकारैरिङ्गितैर्गत्या स्वरहासावलोकनैः ।
नेत्रवक्त्रविकारैश्च ज्ञायतेऽन्तर्गतं मनः ॥" (मनु० अ० ८. श्लो० २६)

इति स्मृतेरिति भावः । मूर्धकम्पमयं शिरःकम्पस्वरूपमुत्तरं ददौ दत्तवती । शिरसश्चालनेन धूर्तप्रश्नोचितमुत्तरं दत्तवतीत्यर्थः । अत्र यद्यपि परमसाध्यायाः कथाप्रवृत्तेरलाभः कण्ठेनोक्तः, तथापि वीक्षितेन परिगृह्येत्यनेन मूर्धकम्पमय-मुत्तरं ददावित्यनेन च लज्जाया विगलितप्रायत्वं द्योत्यते ॥ ६ ॥

**शूलिनः करतलद्वयेन सा**
**सन्निरुध्य नयने हृतांशुका ।**
**तस्य पश्यति ललाटलोचने**
**मोघयत्नविधुरा रहस्यभूत् ॥ ७ ॥**

(प्रकाशिका)

**शूलिन** इति । **यच्चक्षुःपिधानोनिवृत्तेर्यत्नस्य मोघत्वं, तेन विधुरा व्याकुलाभूत् । अत्र नीवीस्रंसनस्य सोढत्वप्रतीतेर्लज्जाशैथिल्यविशेषो ध्वन्यते ॥ ७ ॥**

---

१. 'म् । अने' छ. पाठः. २. 'नाभित्र' ड. पाठः.

(विवरणम्)

अथ भगवदनुवृत्तिबलेन लज्जायास्ततोऽपि शैथिल्यं दर्शयति—

शूलिन इति। रहसि हृतांशुका सा करतलद्वयेन शूलिनः नयने सन्निरुध्य तस्य ललाटलोचने पश्यति मोघयत्नविधुरा अभूत्। रहसि विजने हृतम् अंशुकं वसनं यस्याः सा पार्वती। करयोस्तलं करतलं तयोर्द्वयेन। उभाभ्यां करतलाभ्यामित्यर्थः। शूलिनः परमेश्वरस्य नयने उभे नेत्रे सम्यङ्निरुध्य पिधाय पुनरपि तस्य परमेश्वरस्य ललाटगते लोचने नेत्रे पश्यति सति मोघो निष्फलः प्रयत्नो यस्याः सा तथा। अत एव विधुरा व्याकुला अभूत्। हृतांशुका देवी काञ्चीगुणस्थानचञ्चलानि देवस्य नयनाञ्चलान्यवलोक्य तेषां त्रयाणां मध्ये करद्वयेन नयनद्वयं पिधाय नयनान्तरपिधाने करान्तराभावेन निर्वृतिमलभमाना निष्फलनेत्रद्वयपिधानप्रयासा व्याकुला संबभूवेत्यर्थः। अत्र नीवीविस्रंसनमपि देव्या सोढमिति प्रतीयते। अत एव लज्जाशैथिल्यम्॥ ७॥

चुम्बनेष्वधरदानवर्जितं[1]
सन्नहस्तमदयोपगूहनं[2]।[3]
क्लिष्टमन्मथमपि प्रियं प्रभो-
र्दुर्लभप्रतिकृतं वधूरतम्॥ ८॥

(प्रकाशिका)

चुम्बनेष्विति। अत्र बहुवचनेन[4] चुम्बनविशेषाणां क्रमात् सोढत्वं द्योत्यते[5]। अधरदानराहित्यादिना साध्वसशेषानुवृत्तिर्ध्वन्यते। दुर्लभं प्रतिकृतं चुम्बने सीत्कृतमित्यादि यत्र। अत एव क्लिष्टमन्मथमसमग्रेच्छमपि रतं वधूस्वभावसमुचितत्वात् तस्य प्रियमासीदित्यर्थः॥ ८॥

---

१. 'खि', २. 'स', ३. 'नम्।' मुद्रितकोशपाठः. ४. 'नालिङ्गन' ग. घ. ङ. पाठः. ५. 'द्योत्यते' ङ. पाठः.

(विवरणम्)

अथ क्रमेण देवकृताः सर्वेऽपि व्यापारा देव्या सोढाः । साध्वसस्य तु देव्याः प्रतिव्यापारनिरोधमात्र एव व्यापार इत्याह —

चुम्बनेष्विति । वधूरतं क्लिष्टमन्मथम् अपि प्रभोः प्रियम् । वध्वा नवोढायाः रतं रतिः । क्लिष्टमन्मथम् । मन्मथशब्देनात्र सम्भोगेच्छा लक्ष्यते, क्लिष्टशब्देन चासम्पूर्णत्वम् । क्लिष्टः असम्पूर्णः मन्मथः सम्भोगेच्छा यस्मिंस्तथाभूतं सदपि । असमग्रेच्छमपीत्यर्थः । प्रभोः परमेश्वरस्य प्रियमिष्टम् । अभूदिति शेषः । वधूरतमसम्पूर्णमनोरथमपि तादृशस्वभावस्य नवोढाजनसमुचितत्वाद् देवस्यातिप्रियमेवाभूदित्यर्थः । क्लिष्टमन्मथत्वमेव हेतुभिर्दर्शयति — चुम्बनेष्वित्यादिना । चुम्बनेषु अधरदानवर्जितम् । अत्र चुम्बनेष्विति बहुवचनेन तत्पूर्वभाविनामालिङ्गनविशेषाणां चुम्बनविशेषाणां च क्रमेण सोढत्वं द्योत्यते । अधरस्य दानेन वर्जितं विरहितम् । प्रियतमेन बहुविधेषु चुम्बनेषु कृतेष्वपि निजाधरार्पणविरहितमित्यर्थः । अनेन साध्वसशेषस्यानुवृत्तिरुक्ता । आलिङ्गनेष्वपि साध्वसशेषानुवृत्तिमाह — अदयोपगूहने सन्नहस्तम् इति । अदये निर्दये उपगूहने आलिङ्गने सन्नौ स्रस्तौ हस्तौ यस्मिंस्तत् तथा । अनुरागातिशयादपदयेष्वालिङ्गनेषु प्रवृत्तेष्वपि निजकरद्वयव्यापाररहितमित्यर्थः । इत्थं विशेषतः प्रतिपाद्य विस्तरभयात् सामान्यतः प्रतिपादयति — दुर्लभप्रतिकृतमपि । दुर्लभानि दुःखेन लभ्यानि प्रतिकृतानि प्रतिव्यापारा यस्मिन् । चुम्बने सीत्कृतं, ताडने ताडनमित्यादिप्रतिव्यापाररहितमित्यर्थः । तथाविधमपि वधूरतं देवस्य हृदयमाजहारेत्यर्थः । तत्र वधूरतत्वं हेतुः ॥ ८ ॥

यन्मुखग्रहणमक्षताधरं
दन्तमव्रणपदं नखं च यत् ।

१. 'नास' छ. पाठः. २. 'ढव्यत्वं' क. पाठः. ३ 'सविशे' क. पाठः. ४. 'दानम', ५. 'खस्य य' मुद्रितकोशपाठः.

**यद् रतं च सदयं प्रियस्य तत्**
**पार्वती विषहते स्म नेतरत् ॥ ९ ॥**

(प्रकाशिका)

इत्थं क्रमाद् वध्वाः साध्वसशैथिल्यं प्रदर्श्य तद्विषयचातुष्षष्टिकप्रयोगप्रकार-माह —

यदिति । मुखग्रहणं मुखपानम् । दत्तं पातितम् । अव्रणपदम् अ-जनितव्रणपदमित्यर्थः । सदयं प्रहरणादिरहितम् । नेतरदिति नायिकाया नात्यन्तमन्मथरसाभिज्ञत्वेन मन्दरागत्वात् । अयमेवार्थो रघुवंशे दृष्टान्ती-कृतः 'नवपाणिग्रहणां वधूमिव' (स० ८. श्लो० ७) इति । कामसूत्रकारैरप्यु-क्तं—'कुसुमसुकुमारा हि योषितः । तास्त्वनधिगतोपक्रमैरि'त्यादिना ॥९॥

(विवरणम्)

इत्थं क्रमेण वध्वाः साध्वसशैथिल्यं प्रतिपाद्य तद्विषयान् कामशास्त्रप्रसिद्धान् चतुष्ष-ष्टिसङ्ख्यापरिमितान् प्रयोगान् सङ्क्षिप्याह—

यदिति । पार्वती प्रियस्य अक्षताधरं मुखग्रहणं यद् अव्रणपदं दत्तं नखं च यत् सदयं रतं च यत् तद् विषहते स्म, इतरद् न । प्रियस्य का-न्तस्य । क्षतः दन्तपातैर्विदलितः अधरो येन तत् क्षताधरं, तथाविधं न भव-तीत्यक्षताधरम् । तादृशं मुखग्रहणं मुखपानं यत् । व्रणानां पदं व्रणपदं, पदं स्थानं, तद् यस्य न विद्यते तदव्रणपदम् । दत्तं पातितम् । व्रणपदरहितं नखपातं च यदित्यर्थः । सदयं प्रहरणादिरहितं रतं च यत् तद् विषहते स्म सोढवती । इतरत् क्षताधरं मुखग्रहणं, सव्रणं नखपातं, प्रहरणादिसहितं रतं च न सेहे । नायिकाया अत्यन्तमन्मथरसाभिज्ञत्वाभावेन रागमान्द्यादिति भावः । अत एव वक्ष्यति—'ज्ञातमन्मथरसा शनैः शनैः सा मुमोच रतिदुःखशीलताम्'(श्लो. १३)

१. 'गि' क. पाठः.

इति । रघुवंशे चायमेवार्थो दृष्टान्तत्वेन दर्शितः—

"सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥"(स. ८. श्लो. ७)

इति । वात्स्यायनेनाप्युक्तं — 'कुसुमसुकुमारा हि योषितः । तास्त्वनधिगतोपक्रमैः' (अधि० ३. अध्या० २) इत्यादिना ॥ ९ ॥

**रात्रिवृत्तमनुयोक्तुमुद्यतं**
**सा प्रभातसमये सखीजनम् ।**
**नाकरोदपकुतूहलं रहः**
**शंसितुं च हृदयेन तत्वरे ॥ १० ॥**

(प्रकाशिका)

रात्रिवृत्तमुक्त्वा प्रभातवृत्तं द्वाभ्यां श्लोकाभ्यामाह—

रात्रीति । अनुयोक्तुं प्रष्टुम् । अपकुतूहलं नाकरोदिति लज्जयोत्तरं न ददावित्यर्थः[3] । शंसितुं च हृदयेन तत्वर इति हर्षेण रहसि ताभ्यः प्रत्येकं निवेदयितुमैच्छदित्यर्थः ॥ १० ॥

(विवरणम्)

इत्थं रात्रिवृत्तमुक्त्वा प्रभातवृत्तं द्वाभ्यां श्लोकाभ्यामुच्यते । तत्रादौ शयनादुत्थाय सखीजनसन्निधिं गताया देव्या वृत्तमाह—

रात्रीति । सा प्रभातसमये रात्रिवृत्तम् अनुयोक्तुम् उद्यतं सखीजनम् अपकुतूहलं नाकरोत् । रात्रौ[4] निशि कान्तसन्निधौ सञ्जातं वृत्तं वृत्तान्तम् अनुयोक्तुं प्रष्टुम् उद्यतम् उद्युक्तम् । तद्भावपरिज्ञानादकृतसविस्तरप्रश्नमिति भावः । सखीजनं प्रियसखीसमाजम् अपकुतूहलम् अपगतकुतूहलं नाकरोद् न कृतवती । उत्तरश्रवणे हि कुतूहलनिवृत्तिर्भवति । लज्जयोत्तरं न ददावित्यर्थः ।

१. 'ह्रिया शं' मुद्रितकोशपाठः. २. 'तु', ३. 'र्थः ॥ दर्प' क. ग. पाठः. ४. 'त्रौ का' क. पाठः.

दर्शनानन्तरमेव रात्रिवृत्तं प्रष्टुमुद्युक्ते सखीजने लज्जया वदनमवनमयामासैवे-त्यर्थः । इत्थं लज्जाया अनुभावमुक्त्वा प्रियतमानुरागस्यानुभावमाह—रहः[1] शंसितुं हृदयेन तत्वरे च इति । रहः[2] विजने शंसितुं[3] निवेदयितुं हृदयेन मनसा तत्वरे त्वरां कृतवती । हर्षोद्रेकवशाद् रहसि ताभ्यः प्रत्येकं कथयितुं सद्य एव तासां पृथग्भावमैच्छदित्यर्थः ॥ १० ॥

**दर्पणे च परिभोगदर्शिनी**
**पृष्ठतः प्रणयिनो निषेदुषः ।**
**प्रेक्ष्य बिम्बमनुबिम्बमात्मनः**
**कानि कान्यपि चकार लज्जया ॥ ११ ॥**

(प्रकाशिका)

दर्पण इति । परिभोगशब्देन नखक्षतादि लक्ष्यते । बिम्बं प्रति-बिम्बम् । कानि कान्यपि[6] नयननिमीलनादीनि । बहुवचनेन युगपद-नेकविकारोत्पत्तिर्दर्शिता, वीप्सया त्वनेकवारमन्येषां च विकाराणामुत्प-त्तिः । अपिशब्दयुक्तश्च किंशब्दोऽनाख्येयत्वं द्योतयति ॥ ११ ॥

(विवरणम्)

दर्पणदर्शनप्रकारमाह—

दर्पण इति । दर्पणे परिभोगदर्शिनी सा पृष्ठतः निषेदुषः प्रणयिनः बिम्बम् आत्मनः अनुबिम्बं प्रेक्ष्य लज्जया कानि कान्यपि चकार च । दर्पणे मुकुरे । परिभोगशब्देनात्र परिभोगोत्पन्नानि दन्तक्षतादीनि लक्ष्यन्ते । कार्यकार-णभावश्च सम्बन्धः । परिभोगस्वरूपसाक्षात्कारप्रतीतिः फलम् । तेन च तद्दर्श-नस्य प्रीतिजनकत्वं व्यज्यते । परिभोगान् द्रष्टुं शीलमस्या इति तथा । कुतूहला-

१. 'हसि श', २. 'हसि वि' छ. पाठः. ३. 'तुं हृ' क. पाठः. ४. 'मुपबि', ५. 'नि न च' मुद्रितकोशपाठः. ६. 'पीति न' क. पाठः. ७. 'वदने नि' क. पाठः. ८. 'परिभोगदर्शिनी । कु' छ. पाठः.

तिशयात् सर्वदा दर्शनं णिनिप्रत्ययार्थः। पृष्ठतः पृष्ठभागे निषेदुषः स्थितवतः। देवीभावनिरीक्षणकौतुकात् पृष्ठभागे स्थित्वा तत्प्रतिबिम्बमालोकयत इत्यर्थः। अवलोकनकौतुके हेतुमाह — प्रणयिन इति। प्रणयोऽस्यास्तीति प्रणयी। प्रणयः प्रेमा। 'प्रणयास्त्वमी। विस्रम्भयाच्ञाप्रेमाण' इत्यमरः। बिम्बं प्रतिबिम्बम्। आत्मनः अनुबिम्बं निजप्रतिबिम्बस्य पश्चात्। 'अव्ययं विभक्ति—'(२. १. ६) इत्यादिना पश्चादर्थेऽव्ययीभावः। प्रेक्ष्य अवलोक्य लज्जया हेतुभूतया कानि कान्यपि नयननिमीलनवदनविनमनादीनि। अत्र बहुवचनेन युगपदेव बहूनां विकाराणामुत्पत्तिर्दर्शिता। वीप्सया पुनरनेकवारमन्येषां विकाराणामप्युत्पत्तिर्द्यो-त्यते। अपिशब्दयुक्तः किंशब्दो वक्तुमशक्यतां प्रतिपादयति। पार्वती दर्पणे सम्भोगचिह्नावलोकनसमये भावपरीक्षार्थं पृष्ठभागावस्थितस्य प्रियतमस्य प्रतिबिम्बं निजप्रतिबिम्बस्य पश्चादवलोक्य मनसां वचसामप्यगोचरान् विकारान् युगपदेव कृतवतीत्यर्थः॥ ११॥

**नीलकण्ठपरिभुक्तयौवनां**
**तां विलोक्य जननी समाश्वसत्।**
**भर्तृवल्लभतया हि मानसीं**
**मातुरस्यति शुचं वधूजनः॥ १२॥**

**(प्रकाशिका)**

इत्थं नववधूसंभोगमुपवर्ण्योपसंहरति —

**नीलकण्ठेति।** समाश्वसदित्यनेन महता प्रयत्नेन लब्धस्यापि देवस्यातिगम्भीरप्रकृतित्वेनाविगाह्यत्वात् तद्विषये दुहितुर्वाल्लभ्यस्य संश-

---

१. 'षः दे' क. पाठः. २. 'मवलो' छ. पाठः. ३. 'ना का' छ. पाठः. ४. 'यादी' क. पाठः. ५. 'सम्भमु' क. पाठः. ६. 'सीदि' क. ख. ग. ङ. पाठः.

यितत्वात् तदेकजीविताया मेनायाः शोकस्तत्परिभोगदर्शनपर्यन्तमनुवृत्त इति द्योत्यते । अस्यति क्षिपति ॥ १२ ॥

( विवरणम् )

इत्थमुपवर्णितं देवस्य नववधूविषयं सम्भोगमुपसंहरति—

नीलकण्ठेति । जननी नीलकण्ठपरिभुक्तयौवनां तां विलोक्य समाश्वसेत्[1] । जननी[3] देव्या माता[4] मेना । अत्र जननीशब्दप्रयोगेण तदेकजीविताया[5] मेनायाः पुत्रीविवाहावसानपर्यन्तमनुरूपभर्तृप्राप्तिसन्देहजनितायाः पीडाया अनुवृत्तिः, विवाहानन्तरं पुनरप्यत्यन्तदुश्चरतपश्चरणादिना कृच्छ्रलब्धस्याप्यनुरूपस्य वल्लभस्यातिगम्भीरप्रकृतित्वेनाविगाह्यहृदयत्वादस्य मे दुहिता वल्लभा वा स्याद[6]वल्लभा वा स्यादिति सन्देहजनितायाः पीडाया अनुवृत्तिरिति जननसमयादारभ्यैतावन्तं कालं पीडापात्रत्वं द्योत्यते । नीलकण्ठेन परमेश्वरेण परिभुक्तम् अनुभूतं यौवनं यस्यास्ताम् । अत्र नीलकण्ठशब्देनाभिरू[7]प्यादिभिरनुरूपत्वमुक्तम् । परिभुक्तयौवनामित्यनेन देवस्य तद्विषया चित्तासक्तिरुक्ता । तां पार्वतीं विलोक्य विशेषेणावलोक्य । नखदन्तक्षतादिपरिभोगचिह्नै[8]र्देवस्याभिलाषावगमपर्यन्तं दृष्ट्वेत्यर्थः । अत एव समाश्वसद् आश्वस्ताभूत् । जननसमयादारभ्य क्रमेण परिवर्धमानं तापमपाचकारेत्यर्थः । उक्तमर्थमर्थान्तरन्यासेन समर्थयते— वधूजनः भर्तृवल्लभतया हि मातुः मानसीं शुचम् अस्यति इति । वधूजनः स्त्रीजनः भर्तुः[9] कान्तस्य वल्लभतया इष्टतया । हिशब्दः प्रसिद्धौ । मातुः[10] जनन्याः मानसीं मनसि भवां शुचं दुःखम् अस्यति परित्यजति । मातरो हि दुहितृजननादारभ्य कथं मे दुहिता भविष्यति कुत्र वा गमिष्यति भर्तुरभिमता वा भविष्यति अनभिमता वा भविष्यतीत्यादिचिन्तया प्रतिक्षणं विजृम्भमाणं दुःखं[11] भर्तृवल्लभत्वावधारणानन्तरमेव परित्यजन्तीति लोकप्रसिद्धमित्यर्थः ॥१२॥

---

१. 'नुप्रवृ', २. 'सदित्यन्वयः । ज', ३. 'नी मा', ४. 'ता देवी मे', ५. 'का'; ६. 'दिति', ७. 'रुच्यादि', ८. 'दित्यनेन परिणयनस' ९. 'र्तुः व', १०. 'तुः मा' क. पाठः. ११. 'शोकं भ' ङ. पाठः.

**वासराणि कतिचित् कथञ्चन**
**स्थाणुना पदमकार्यत प्रिया ।**
**ज्ञातमन्मथरसा शनैः शनैः**
**सा मुमोच रतिदुःखशीलताम् ॥ १३ ॥**

(प्रकाशिका)

इत्थं यथाक्रमं प्रयुक्तस्योपक्रमस्य सिद्धिमाह —

**वासराणीति । द्वितीयया तु पदकारणस्यासमाप्तिर्द्योत्यते । समाप्तौ तु अपवर्गे तृतीयैव स्याद् वासरैरिति । कथञ्चन प्रयत्नेन पदमकार्यत मन्मथरसज्ञान इत्यर्थः । पदशब्देनात्राभिमुख्यं लक्ष्यते, मन्मथशब्देन च सम्भोगः । रतौ दुःखं शीलं यस्याः सा रतिदुःखशीला । रतिदुःखशीलता रतौ वामत्वम् । यदाहुः — 'मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि' (दश० प्र० २. श्लो० १६) इति । शनैः शनैर्मुमोचेति लज्जाया झटित्यनपगमात् ॥१३॥**

( विवरणम् )

इत्थं देवेन यथाक्रमं प्रयुक्तस्य नववधूविषयस्योपक्रमस्य सिद्धिमाह —

वासराणीति । स्थाणुना प्रिया कतिचिद् वासराणि कथञ्चन पदम् अकार्यत । स्थाणुना परमेश्वरेण प्रिया पार्वती कतिचिद्वासराणि कानिचिद्दिनानि । अत्यन्तसंयोगे द्वितीया । अनेन पदकारणस्य पुनरप्यपरिसमाप्तिर्द्योत्यते । परिसमाप्तौ पुनः 'अपवर्गे तृतीया' (२. ३. ६) इति वासरैरिति तृतीयैव स्यात् । अत एव वक्ष्यति — 'मेखलापनयलोलतां गतं हस्तमस्य शिथिलं रुरोध च' (श्लो० १४)इति । कथञ्चन कृच्छ्रात् । पदशब्देनात्राभिमुख्यं लक्ष्यते । सम्भोग-

१. 'रतमकारि चानया' मुद्रितकोशपाठः. २. 'ता वा' ङ. पाठः. ३. 'हुः' घ. ङ. पाठः. ४. 'कतिचि' क. पाठः.

रसज्ञान इत्यर्थात् सिध्यति । अकार्यतेति 'डुकृञ् करणे' इत्यस्माद् धातोर्णिचि कर्मणि रूपम् । स्थाणुना प्रिया सम्भोगरसज्ञानं प्रापितेत्यर्थः । अवगतसम्भोगरसाया देव्याः प्रवृत्तिमाह — ज्ञातमन्मथरसा शनैः शनैः रतिदुःखशीलतां मुमोच इति । ज्ञातमन्मथरसा, मन्मथशब्देन सम्भोगो लक्ष्यते । ज्ञातसम्भोगरसेत्यर्थः । लज्जायाः सद्य एवापगमानुपपत्तेः शनैः शनैरित्युक्तम् । सम्भोगरसावगमक्रमेणेत्यर्थः । रतौ सुरते दुःखं दुष्करं शीलं शीलनं प्रवर्तनं यस्याः सा रतिदुःखशीला तस्या भावस्तत्ता ताम् । सुरते वामस्वभावत्वमिति यावत् । तदुक्तं दशरूपके — 'मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि' इति । मुमोच तत्याज । क्रमेण अनुकूला जातेति भावः ॥ १३ ॥

**सस्वजे प्रियमुरोनिपीडितं[1]**
**प्रार्थितं मुखमनेन नाहरत् ।**
**मेखलापणयलोलतां[2] गतं**
**हस्तमस्य शिथिलं रुरोध च[3] ॥ १४ ॥**

(प्रकाशिका)

**सस्वज** इति । उरोनिपीडितमिति क्रियाविशेषणम् । अत्रालिङ्गने स्वयंप्रवृत्तिः मुखग्रहणे[4]ऽप्रातिकूल्यं मेखलापनयने किञ्चित् प्रातिकूल्यमित्यनुसन्धेयम् ॥ १४ ॥

(विवरणम्)

क्रमेणानुकूलत्वप्राप्तिमेव प्रकटयति —

सस्वज इति । अत्र सेति कर्तृपदमध्याहार्यम् । सा प्रियम् उरोनिपीडितं सस्वजे । प्रियं वल्लभम् । उरोनिपीडितमित्यालिङ्गनक्रियाविशेषणम् । उरो वक्षः निपीडितं नितरां पीडितं यथा भवति तथा सस्वजे आलिलिङ्ग । प्रियतमं तदवसरे स्वयमेव गाढमालिङ्गितवतीत्यर्थः । अत्रालिङ्गने स्वयंप्रवृत्ति-

१. 'डनं प्रा', २. 'प्रणय', ३. 'सा' मुद्रितकोशपाठः. ४. 'णे त्वप्रा' घ. पाठः.

रुक्ता। मुखग्रहणे तु न तथेत्याह—अनेन प्रार्थितं मुखं न अहरद् इति। अनेन प्रार्थितं पातुमभ्यर्थितं मुखं वदनं नाहरद् न हृतवती। मुखग्रहणे पूर्ववत् प्रातिकूल्यं न चकारेत्यर्थः। नीवीविस्रंसने पुनः किञ्चित् प्रातिकूल्यं जातमित्याह—अस्य मेखलापनयलोलतां गतं हस्तं शिथिलं रुरोध च इति। अस्य प्रियस्य मेखलायाः काञ्च्याः अपनये नीवीबन्धनप्रदेशात् किञ्चिदपनयने लोलतां चलत्वं गतं प्राप्तं हस्तम्। शिथिलमिति रोधनक्रियाविशेषणम्। शिथिलं मन्दं यथा भवति तथा रुरोध च। नीवीविस्रंसे किमपि प्रातिकूल्यं चकारेत्यर्थः। अत्रालिङ्गने स्वयंप्रवृत्तत्वाद् मुखग्रहणे प्रातिकूल्याभावाद् नीवीविस्रंसे किञ्चित् प्रातिकूल्याच्च लज्जाया गलितप्रायत्वं द्योत्यते। तत्र च सम्भोगरसावगमो हेतुः ॥ १४ ॥

**भावसूचितमदृष्टविप्रियं**
**चाटुमत्[3] क्षणवियोगकातरम्।**
**कैश्चिदेव दिवसैस्तदा[4] तयोः**
**प्रेम रूढमितरेतराश्रयम् ॥ १५ ॥**

(प्रकाशिका)

**भावेति।** भावसूचितम् अभिप्रायविशेषैर्व्यञ्जितं, लज्जापगमात्। अदृष्टविप्रियम्, अत्यन्तानुकूलवृत्तित्वात्। चाटुमद्, विस्रम्भप्रकर्षात्। एते च प्रेमप्रकर्षहेतवः। क्षणवियोगकातरमिति प्रकर्षप्रकारः। तदा विस्रम्भणकाले। रूढं प्रकर्षवदभूत्। इतरेतराश्रयं तयोः प्रेम कैश्चिद् दिवसैरेव, न तु पक्षैर्मासैर्वा तदे[6]त्थं प्ररूढमासीदित्यर्थः ॥ १५ ॥

(विवरणम्)

किं बहुना, तयोः परस्परस्नेहः प्रकर्षपदवीमारुरोहे[7]त्याह—

**भावेति।** इतरेतराश्रयं तयोः प्रेम कैश्चिद् दिवसैरेव तदा रूढम्।

---

१. 'से पु', २. 'च। अ' क. पाठः. ३. 'दार्ढ्यभाक् क्ष', ४. 'था', ५. 'गू', ६. 'दि', ७. 'ट' क. पाठः.

इतरेतरं परस्परमाश्रयो यस्य तत् तथा। देवीप्रेम्णो देव एवाश्रयः, देवप्रेम्णस्तु देवीत्यन्योन्यावलम्बनमित्यर्थः। तयोः पार्वतीपरमेश्वरयोः प्रेम स्नेहः कैश्चिद् दिवसैः अल्पैरहोभिरेव। न तु कैश्चिन्मासैः, नापि कैश्चित् पक्षैः, किन्तु दिवसैरेवेत्येवशब्दार्थः। तदा विस्रम्भोपपादनसमये रूढं प्ररूढम्। आसीदिति शेषः। गुणश्रवणपरस्परदर्शनादिषु तयोर्यः परस्परस्नेहः सञ्जातः, स तदानीं प्रकर्षपदमारुरोहेत्यर्थः। प्रेम्णः प्रकर्षप्राप्तौ हेतुं विशेषणत्रयेण दर्शयति— भावेत्यादिना। भावसूचितं भावैः अभिलाषद्योतकैः कटाक्षविक्षेपादिभिः सूचितं व्यञ्जितम्। लज्जापगमात् परस्परानुरागद्योतकैर्भावविशेषैः प्रकाशितमित्यर्थः। अभिलाषगूहने विस्रम्भाभावादभिलाषस्यापि शनैः शनैरपगमप्रसङ्गादेवमुक्तम्। तथा अदृष्टविप्रियम्। अदृष्टमनुपलब्धं विप्रियमप्रियं यस्मिंस्तत् तथा। अत्यन्तानुकूलवृत्तित्वादप्रियलेशेनापि विरहितमित्यर्थः। तथा चाटुमत् चाटुः प्रियोक्तिरस्त्यस्मिन्निति चाटुमत्। विस्रम्भातिशयवशात् प्रियोक्तिशतोपबृंहितमित्यर्थः। प्रेम्णः प्रकर्षप्रकारमाह— क्षणवियोगकातरम् इति। क्षणवियोगे क्षणकालभवे वियोगेऽपि कातरं भीतम्। एतादृशस्य संयोगस्य कदाचिदप्यन्यथाभावो मा भूदित्यनिशं प्रार्थयमानमित्यर्थः। 'अपायदर्शी स्नेह' इति न्यायादिति भावः॥

**तं यथात्मसदृशं वरं वधू-**
**रन्वरज्यत वरस्तथैव ताम्।**
**सागरादनपगा हि जाह्नवी**
**सोऽपि तन्मुखरसैकनिर्वृतः[3]॥ १९॥**

(प्रकाशिका)

अथ तस्य तयोः प्रेम्णः परस्परमन्यूनत्वमाह—

तमिति। अनुर्लक्षणे कर्मप्रवचनीयः। नापगच्छतीत्यनपगा।

---

१. 'न्याल' छ. पाठः. २. 'यात्' क. पाठः. ३. 'वृत्तिभाक्॥' मुद्रितकोशपाठः.

मुखशब्दो लाक्षणिकः प्रतिवस्तुतामुत्तम्भयति । वरस्यानुरञ्जनकौशलस्य सिद्धत्वाद् वध्वनुराग उपमानतयोक्तः ॥ १६ ॥

(विवरणम्)

इत्थं परस्परप्रतिरूढस्य तयोः प्रेम्णः परस्परमन्यूनत्वमाह —

तमिति । वधूः तं वरम् अनु यथा वरः ताम् अनु तथा एव अरज्यत । वधूः नवोढा तं परमेश्वरं वरं भर्तारम् । अनुर्लक्षणे कर्मप्रवचनीयः । वरं लक्ष्यीकृत्येत्यर्थः । यथा ^1^यादृशेन प्रकारेण अरज्यत, वरो भर्ता तां पार्वतीं लक्ष्यीकृत्यापि तादृशेन प्रकारेणैवारज्यत रक्तोऽभूत् । (यथा पार्वती परमेश्वरे रक्ताभूत्?) । तत्र हेतुः — आत्मसदृशमिति । आत्मनः सदृशम् आभिजात्याभिरूप्यादिगुणैः समानम् । वध्वा आत्मसदृशीत्वमनेनैव सिध्यतीति पृथगनुपादानम् । सदृक्शब्दस्य द्वितीयान्तो वायं शब्दः । अत्रोभयोरपि परस्परानुरागमात्रस्य वक्तव्यत्वेऽपि वध्वनुरागस्योपमानत्वेनोपादानं तस्यैव प्राधान्यं द्योतयितुम् । वरस्यानुरागो ह्यनुरञ्जनप्रकारेण सिद्धः । देवे देव्या अनुरञ्जनोद्युक्ते सति देवी तथा नामारज्यत, यथा वध्वनुरागो वरानुरागस्य दृष्टान्तत्वमुपगच्छेदिति भावः । अत्र प्रतिवस्तूपमामाह — सागरादित्यादिना । तत्रादौ वध्वनुरागस्य प्रतिवस्तूपमामाह — जाह्नवी सागराद् अनपगा हि इति । जाह्नवी गङ्गा सागरात् समुद्राद् न अपगच्छतीत्यनपगा । हिशब्दः प्रसिद्धौ । नहि जाह्नवी सागरमपहायान्यत्र कुत्रापि अपगच्छतीत्यर्थः । वरानुरागस्य प्रतिवस्तूपमामाह — सः अपि तन्मुखरसैकनिर्वृतः इति । सः सागरः तस्या मुखे यो रसः जलं तेनैकेनैव निर्वृतः सुखितः । अत्र मुखशब्दो लक्षणयाग्रभागवाची प्रतिवस्तुतां प्रकटयति, वदनेऽपि श्लिष्टत्वात् ॥ १६ ॥

शिष्यतां निधुवनोपदेशिनः
शङ्करस्य रहसि प्रपन्नया ।

---

१. 'शशब्द' छ. पाठः.

शिक्षितं युवतिनैपुणं तया
यत् तदेव गुरुदक्षिणीकृतम् ॥ १७ ॥

(प्रकाशिका)

शिष्यतामिति। रहसि सम्प्रयोगे। युवतिनैपुणं युवतिकर्मसु कौशलम्। रहसि यद् युवतिनैपुणं शिक्षितमित्यन्वयः। अत्र पूर्वार्धे वरस्यानुरञ्जने कौशलमनुवादद्वारेण दर्शितम्, उत्तरार्धे विधेयत्वेन वध्वा इत्यवसेयम् ॥ १७ ॥

(विवरणम्)

देवस्य प्रियानुरञ्जनप्रकरणमुपसंहरति —

शिष्यतामिति। तया निधुवनोपदेशिनः शङ्करस्य शिष्यतां प्रपन्नया रहसि यद् युवतिनैपुणं शिक्षितं, तद् एव गुरुदक्षिणीकृतम्। तया पार्वत्या निधुवनं रतम् उपदेष्टुं शीलमस्येति[2] स तथा तस्य शङ्करस्य शिष्यत्वं प्राप्तया सत्या रहसि विजने। युवतयः स्त्रियः तदुचितं नैपुणं वैदग्ध्यं युवतिनैपुणम्। शिक्षितमभ्यस्तम्। तदेव गुरुदक्षिणीकृतं गुरुदक्षिणतां प्रापितम्। पार्वती हरशिक्षितेनैव सुरतवैदग्ध्येन हरं परितोषयामासेत्यर्थः। अत्र पूर्वार्धे नायकस्य नायिकानुरञ्जनकुशलत्वमनुवादद्वारेणोक्तम्। उत्तरार्धे तु नायिकाया नायकानुरञ्जनवैदग्ध्यं विधिमुखेनैवोपात्तमिति विभागः। नायकानुरञ्जनकौशलस्य पूर्वं प्रपञ्चितत्वमनुवादद्वारेण कथने हेतुरित्यवसेयम् ॥

दष्टमुक्तमधरोष्ठमम्बिका
वेदनाविधुतहस्तपल्लवा।
शीतलेन निरवापयत् क्षणं
मौलिचन्द्रशकलेन शूलिनः ॥ १८ ॥

---

१. 'न' घ. छ. पाठः २. 'ति त' छ. पाठः. ३. 'रहसि शि' क. पाठः. ४. 'कस्यानु' छ. पाठः.

(प्रकाशिका)

दष्टेति । दष्टमुक्तमित्यनेनाक्षताधरमुखग्रहणस्य विपर्यय उक्तः । अधरोष्ठमिति उत्तरोष्ठे दशनव्यापारनिषेधात् । वेदनेत्यादिना नववधूत्वाद् दशनव्यापारस्य नातिसोढत्वमुक्तम् । मौलिचन्द्रशकलेन निर्वापणं जातविस्रम्भतां ध्वनयति ॥ १८ ॥

(विवरणम्)

अथ द्वाभ्यां श्लोकाभ्यां देव्या देवविषये प्ररूढो विस्रम्भातिशयः प्रदर्श्यते । तत्रादौ देव्याः स्ववैक्लव्यशमनाय स्वयमेव देवविषयां प्रवृत्तिमुक्त्वा विस्रम्भातिशयं दर्शयति—

दष्टेति । अम्बिका दष्टमुक्तम् अधरोष्ठं शूलिनः मौलिचन्द्रशकलेन क्षणं निरवापयत् । अम्बिका पार्वती । पूर्वं दष्टं पश्चान्मुक्तं चेति दष्टमुक्तम् । अनेन पूर्वोक्तस्य 'यन्मुखग्रहणमक्षताधरम्' (श्लो. ९) इत्यादेर्विपर्यय उक्तः । अधर(श्चेद ? ञ्चेम)मोष्ठं चेत्यधरोष्ठम् । उत्तरोष्ठे दशनव्यापारस्य कामशास्त्रे निषिद्धत्वादधरपदोपादानम् । शूलिनः परमेश्वरस्य मौलौ यच्चन्द्रशकलं चन्द्रकला तेन क्षणं क्षणकालं निरवापयद् निर्वापितवती । अपनीतवेदनमकरोदित्यर्थः । वेदनायां[1] अनुभावमाह — वेदनाविधुतहस्तपल्लवेति । वेदनया पीडया विधुतौ कम्पितौ हस्तपल्लवौ पल्लवाविव हस्तौ यया सा तथा । अनेन नवोढात्वाद् दशनव्यापाराणामनतिसोढत्वमुक्तम् । मौलिचन्द्रशकलस्य निर्वापणसामर्थ्यमाह— शीतलेनेति ॥ १८ ॥

चुम्बनादलकचूर्णरू[2]षितं
  शङ्करोऽपि नयनं ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ
  पार्वतीवदनगन्धवाहिने ॥ १९ ॥

---

१. 'यामनु' क. पाठः. २. 'दू' मुद्रितकोशपाठः.

(प्रकाशिका)

चुम्बनादिति । चुम्बनादधरचुम्बनसमय इत्यर्थः । ललाटजमिति । तस्यालकसन्निकर्षसम्भवात् । शङ्करोपीऽति । न केवलमम्बिका शूलिनो मौलिचन्द्रशकलेनाधरं निर्वापितवती, सोऽपि तन्मुखमरुता ललाटाक्षीत्यर्थः ॥ १९ ॥

(विवरणम्)

देवगतवैक्लब्यशमनायापि देव्या एव प्रवृत्तिमुक्त्वा ततो विस्रम्भातिशयमाह—

चुम्बनादिति । शङ्करः अपि चुम्बनाद् अलकचूर्णरूषितं ललाटजं नयनं पार्वतीवदनगन्धवाहिने ददौ । शङ्करोऽपि । न केवलं देवी दष्टमुक्तमधरं देवस्य मौलिचन्द्रशकलेन निर्वापितवती, अपितु शङ्करोऽपि देवीमुखानिलेन ललाटलोचनं निर्वापितवानित्यपिशब्दार्थः । चुम्बनात् पार्वतीकृताधरचुम्बनाद् अलके यच्चूर्णं गन्धसंस्कारचूर्णं तेन रूषितं सम्पृक्तं ललाटजं ललाटभवं नयनं[2] नेत्रम् । अधरचुम्बनसमये ललाटजस्यैव लोचनस्यालकसन्निकर्षसम्भवाल्ललाटजमिति विशेषणम् । गन्धं वोढुं शीलमस्येति गन्धवाही वायुः । पार्वत्या वदने मुखे यो गन्धवाही तस्मै दत्तवान् । देव्या सरभसविहिताद[3]धरचुम्बनात् तत्समये ललाटघटितानामलकानां गन्धसंस्कारचूर्णैराकुलीकृतं ललाटलोचनं परमेश्वरः पार्वतीवदनमारुतेनैव विगतवेदनमकरोदित्यर्थः । अत्र देव्याः परमेश्वरस्य ललाटलोचननिर्वापणप्रवृत्तिर्विस्रम्भातिशयं ध्वनयति । देवस्य निर्वापणनियोगः परिज्ञातविस्रम्भतां द्योतयति । पार्वतीवदनमारुते[4]न लोचननिर्वापणे[5] कृते सति फलान्तरमप्याह— उच्छ्वसत्कमलगन्धये इति । उच्छ्वसतः विकसतः कमलस्य गन्ध इव गन्धो यस्य तस्मै । विकसितचरे हि कमले

---

१. 'ति अध' घ. पाठः. २. 'नयन' छ. पाठः. ३. 'ताध' क. पाठः. ४. 'ते लो', ५. 'णे फ' छ. पाठः.

मधुलत्वानां भृङ्गमारुतादिभिरपहृतत्वाद् गन्धोऽपि मान्द्यमुपेयादित्युच्छ्वसत्पद-प्रयोगः । देव्याः पद्मिनीत्वात् स्वाभाविकपद्मगन्धबन्धुरायेत्यर्थः । 'उपमानाच्च' (५. ४. १३७) इति गन्धशब्दस्येकारः समासान्तः ॥ १९ ॥

**एवमिन्द्रियसुखस्य वर्त्मनः**
**सेवनादनुगृहीतमन्मथः ।**
**शैलराजभवने सहोमया**
**मासमात्रमवसद् वृषध्वजः ॥ २० ॥**

(प्रकाशिका)

उपसंहरति —

**एवमिति** । इन्द्रियसुखमिन्द्रियानुकूलं वर्त्म सम्भोगः, तस्य सेवनात् । अनुगृहीतमन्मथ इत्यनेन 'तस्यानुमेने' (स. ७. श्लो. ९२) इत्यादिनोक्तस्यात्मनि कामव्यापाराभ्यनुज्ञानस्य निर्वहणं दर्शितम् । मासमात्रमिति 'एवं भुञ्जानो नवोढां मासेन वशीकुर्यादि'ति गोनर्दीयवचनात् । शैलराजभवन इति सम्पूर्णसकलसमृद्धिकत्वं ध्वनितम् ॥ २० ॥

(विवरणम्)

इत्थं देव्याः प्ररूढविस्रम्भत्वमुपपाद्योपसंहरति—

एवमिति । वृषध्वजः शैलराजभवने उमया सह मासमात्रम् अवसत् । वृषध्वजः परमेश्वरः शैलराजस्य हिमवतः भवने गृहे । अनेन सम्पूर्णसकलसमृद्धित्वं ध्वनितम् । उमया पार्वत्या सह । मासमात्रमित्यन्तसंयोगे द्वितीया । 'एवं भुञ्जानो नवोढां मासेन वशीकुर्यादि'ति गोनर्दीयवचनान्मासपदप्रयोगः । अवसद् उवास । भगवान् परमेश्वरः सकलसम्पत्समृद्धे हिमवत्पुर एव निवसन् नवोढां पार्वतीं मासमात्रेणैवात्मानुकूलां वितेन इत्यर्थः । 'तस्यानुमेने

---

१. 'त्वमुक्तम्' क. पाठः.

भगवानि'त्यादिना यः कामदेवशरव्यापारः स्वस्मिन्ननूदितः, तस्यापि निर्वहणं दर्शयति — इन्द्रियसुखस्य वर्त्मनः एवं सेवनाद् अनुगृहीतमन्मथः इति । इन्द्रियाणां सुखस्य सुखकरस्य वर्त्मनः मार्गस्य । सम्भोगस्येत्यर्थः । एवंशब्देन पूर्वोक्तमवाङ्मनसगोचरं सेवनं परामृशति । सेवनाद्धेतोरनुगृहीतः कृतानुग्रहो मन्मथो येन स तथा । यथा मन्मथस्यायमस्मदनुकूल एवेदानीं सञ्जात इति मतिरुत्पद्येत, तथा तदनुकूलोऽभूदित्यर्थः ॥ २० ॥

**सोऽनुमान्य हिमवन्तमात्मभू-**
**रात्मजाविरहदुःखपीडितम्[1] ।**
**तत्र तत्र विजहार संपत-**
**न्नप्रमेयगतिना ककुद्मता ॥ २१ ॥**

(प्रकाशिका)

इत्थं रागसरणिमवतीर्णस्य देवस्य देशकालादिलक्षणामुद्दीपनसम्पदं नवनवां वर्णयितुमुपक्रमते —

**स** इति । अनुमान्याभ्युपगमय्य । आत्मनो भवतीत्यात्मभूः । कारणान्तरनिरपेक्षमस्य भवनमस्तीत्यर्थः । ततश्च भवनेऽपि निरपेक्षस्य परं स्वातन्त्र्यं ध्वन्यते । तच्च तत्र तत्र विहरणे हिमवदनिवार्यत्वे च हेतुः । आत्मजाविरहदुःखेन भाविनाप्युत्प्रेक्ष्यमाणेन । पीडितमित्यनेन तदनुमा(न)नस्य दुष्करत्वं द्योत्यते । तत्र तत्रेति वैचित्र्यस्य रसावहत्वात् । अप्रमेयगतिना मनोवायुप्रभृतिभिरप्युपमातुमशक्येन ककुद्मता सम्पतन् न त्वैश्वर्यविशेषेणेति लौकिकव्यापारानुकरणपरत्वमुक्तम् ॥ २१ ॥

(विवरणम्)

इत्थं कामुकसरणिमवतीर्णस्य भगवतः पार्वतीसहचरस्य तत्तद्देशकालविशेषरूपामुद्दीपनसम्पदं वर्णयितुमारभते —

---

१. 'खेदित' मुद्रितकोशपाठः.

स इति। सः हिमवन्तम् अनुमान्य ककुद्मता तत्र तत्र सम्पतन् विजहार। सः वृषध्वजः हिमवन्तं श्वशुरभूतं[1] गिरिराजम् अनुमान्य अनुमतिं कारयित्वा। ककुद्मता वृषेण, न तु चिन्तितदेशप्राप्तिकारिणा निजैश्वर्यमात्रेण। अनेन तत्तद्देशविशेषदर्शनकुतूहलिन्या देव्याश्चित्तानुवर्तनमुखेन लौकिकव्यापारानुसरणं देवस्योक्तम्। तत्र तत्र तेषु तेषु रमणीयेषु देशेषु सम्पतन् गच्छन् विजहार क्रीडामातेने। देवस्य तत्र तत्र विहरणे तनयावियोगपीडितेन हिमवताप्यनिवार्यगमनत्वे च हेतुमाह— आत्मभूरिति। आत्मन एव भवतीत्यात्मभूः। स्वशरीरपरिग्रहेऽपि परानपेक्ष इत्यर्थः। अनेन देवस्य स्वातन्त्र्यं ध्वन्यते। हिमवदनुमाननस्यात्यन्तदुष्करत्वं दर्शयति— आत्मजाविरहदुःखपीडितमिति। आत्मजायाः पुत्र्याः विरहेऽनन्तरक्षणे भावितया सम्भाव्यमाने वियोगे यद् दुःखं तेन पीडितं परवशम्। आत्मजायाः पितृमातृवियोगदुःखं तु देववियोगकातरतया शान्तमित्यनेनैव ध्वन्यते। ककुद्मतो मनोनुकूलगमनत्वमाह— अप्रमेयगतिनेति। अप्रमेया मारुतमनःप्रभृतिभिरप्युपमातुमशक्यत्वादपरिच्छेद्या गतिः गमनं यस्य तेन ॥ २१ ॥

**मेरुमेत्य मरुदाशुवाहनः**
**पार्वतीस्तनपुरस्कृतः कृती।**
**हेमपल्लवविभङ्गसंस्तरा-**
**नन्वभूत् सुरतमर्दनक्षमान्॥ २२॥**

(प्रकाशिका)

नानादेशविहरणप्रकारं वर्णयति—

**मेरुमिति।** मरुदिवाशुगति वाहनं यस्य। तत्कालविशेषणं चैतत्।

---

१. 'त' छ. पाठः. २. 'गोक्षकः पा' मुद्रितकोशपाठः

वाहनेऽभिमुखस्थापितायाः पार्वत्याः स्तनाभ्यां पुरस्कृतः । अनेन लेशतोऽपि सम्भोगविच्छेदासहत्वं ध्वनितम् । कृती तत एव धन्यमानी । हेमेति हेमपल्लवशकलकल्पितशयनानि ॥ २२ ॥

## (विवरणम्)

'तत्र तत्र विजहार सम्पतन्' (श्लो. २१) इति यदुक्तं, तदेव विस्तरतः प्रतिपादयति षड्भिः श्लोकैः । तत्रादौ महामेरुशिखरेषु सुरतमाह —

मेरुमिति । अत्र स इति कर्तृपदमध्याहार्यम् । सः मेरुम् एत्य हेमपल्लवविभङ्गसंस्तरान् अन्वभूत् । मेरुं महामेरुम् एत्य प्राप्य । विभङ्गशब्दो लक्षणया भग्नद्रव्यवाची । तत्कालावलूनत्वान्मनोहरत्वप्रतीतिः फलम् । हेममयैस्तत्कालावलूनैः पल्लवैर्विरचितान् संस्तरान् शयनीयानि अन्वभूद् अनुभूतवान् । हेममयैस्तत्कालावलूनैः कल्पवृक्षपल्लवैः कृतं शयनीयमसेवतेत्यर्थः । दूरतरमेरुशिखरप्राप्तौ भगवतः कः प्रयास इत्याह — मरुदाशुवाहन इति । अत्राशुशब्दस्याशुगतीत्यर्थः । मरुदिवाशुगति वाहनं यस्य स तथा । देवस्य सम्भोगविच्छेदे क्षणमात्रमप्यसहनत्वं दर्शयति — पार्वतीस्तनपुरस्कृत इति । पार्वत्याः स्तनाभ्यां पुरस्कृतः अग्रभागे कृतः । वाहनोपरि स्वाभिमुखमेव स्थापितायाः पार्वत्याः स्तनाभ्यामग्रतः कृत इत्यर्थः । अनेनाभिमुखावस्थानमुक्तम् । अथवा पुरस्कृतः पूजितः । आलिङ्गित इत्यर्थः । 'पुरस्कृतः पूजितेऽरात्याभियुक्तेऽग्रतः कृत' इत्यमरः । अनेन गमनसमयेऽपि सम्भोगानामविच्छेदो ध्वन्यते । अत एव कृती धन्योऽहमित्यभिमानीत्यर्थः । हेमपल्लवसंस्तराणामितरसंस्तरेभ्यो व्यतिरेकमाह — सुरतमर्दनक्षमानिति । सुरतेषु यन्मर्दनं चरणाद्यभिहननं तत्र क्षमान् शक्तान् । इतराणि हि शयनीयानि बहुविधकरणभेदसहितेषु सुरतेषु चरणादिव्यापारासहत्वेन जीर्णतामुपगच्छेयुरिति भावः ॥ २२ ॥

पद्मनाभवलयाङ्किताश्मसु[1]
प्रास्रवत्स्वमृतविप्रुषो नवाः ।
मन्दरस्य कटकेषु चाभवत्[2]
स प्रियावदनपद्मषट्पदः ॥ २३ ॥

(प्रकाशिका)

पद्मेति । इदं विशेषणं 'महतां चोपलक्षणमि'त्युदात्तो[3]ऽलङ्कारः । नवाः प्रथमोद्गताः अमृतविप्रुषः प्रास्रवत्स्वित्यनेन तत्रस्थानां जङ्गमस्थावराणां धन्यत्वं नित्यसुभगत्वं च ध्वनितम् ॥ २३ ॥

(विवरणम्)

मन्दराद्रौ सुरतमाह—

पद्मेति । सः मन्दरस्य कटकेषु च प्रियावदनपद्मषट्पदः अभवत् । मन्दरस्य मन्दराचलस्य कटकेषु प्रस्थेषु । 'कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियामि'त्यमरः । चकारः पूर्वोक्तसुमेरुसमुच्चयार्थः । प्रियायाः वल्लभायाः वदन एव पद्मे पङ्कजे षट्पदः भ्रमरोऽभवत् । पङ्कजमकरन्दमिवेन्दिन्दिरश्चन्द्रशेखरः प्रियावदनाधरामृतमास्वादितवानित्यर्थः । मन्दरकटकानामखिलेन्द्रियप्रीतिकरत्वप्रति[4]पादनमुखेनोद्दीपनत्वं विशेषणद्वयेन प्रदर्श्यते । तत्रादाविन्द्रियाणां मध्ये नेत्रस्यैव प्राधान्यात् तत्प्रीतिकरत्वमाह—पद्मनाभवलयाङ्किताश्मस्विति । पद्मनाभस्य श्रीनारायणस्य वलयैः अङ्गदैः अङ्किताः लाञ्छिताः अश्मानः दृषदो येषु तेषु । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषदि'[5]ति सिंहः । पुरा किल जलनिधिमथने विषण्णेषु सुरासुरवृन्देषु नारायणः स्वयमेव कराभ्यां मन्दराचलं गृहीत्वा ममन्थेति पुराणेषु श्रूयते । तदा

---

१. 'चरणाङ्कि', २. 'वसतं पार्वतीव' मुद्रितकोशपाठः. ३. 'त्ता' क. ख. ग. पाठः. ४. 'तिसम्पाद' क. पाठः. ५. 'त्यमरः । पु' छ. पाठः.

तत्करगतानां हेमवलयानां शिलाभिः सह सङ्घर्षवशात् सम्प्राप्तहेमलेखसकल-शिलातलेष्वित्यर्थः । इतरेन्द्रियप्रीतिकरत्वमाह— नवाः अमृतविप्रुषः प्राप्तव-त्स्विति । नवाः प्रथमोद्गताः । मथनदण्डे हि प्रथमोद्गतं नवनीतादिकं सक्तं भवति । अनेन तद्गतानाममृतविप्रुषामितरापेक्षया स्वादिष्ठत्वमुक्तम् । अमृतस्य हि त्वगिन्द्रियप्रीतिकरत्वमुक्तं रघुवंशे दृष्टान्तत्वेन — 'निषिञ्चन्तमिवामृतं त्वचि' (स० ३. श्लो० २६) इति । सर्वेन्द्रियप्रीतिकरत्वमेवमेव(व?) द्र-ष्टव्यम् । अमृतानां विप्रुषो बिन्दून् । 'पृषन्ति बिन्दुपृषतौ पुमांसौ विप्रुषः स्त्रिय' इत्यमरः । प्राप्तवत्सु अधिगतेषु । अनेन विशेषणेन तत्रत्यानां स्थाव-राणां जङ्गमानां च धन्यत्वं नित्यसुभगत्वं च ध्वन्यते । अत्र सम्पतत्स्वप्यमृ-तबिन्दुषु[1] प्रियावदनपद्ममकरन्दास्वादनप्रतिपादनेन देवस्यामृतबिन्दुष्वनाद-रोऽपि[2] ध्वनितः । अत्र पद्मनाभेरत्यादिना[3] भगवतः श्रीनारायणस्य वर्ण्यमानम-न्दराचलोत्कर्षप्रतिपादनार्थमङ्गत्वेन प्रतिपादनादुदात्तमलङ्कारः । 'उदात्तं व-स्तुनः सम्पन्महतां चोपलक्षणमि'ति[4] । उपलक्षणमङ्गभावः ॥ २३ ॥

वारणध्वनितभीतया तया
कण्ठसक्तमृदुबाहुबन्धनः[5] ।
एकपिङ्गलगिरौ जगद्गुरु-
र्निर्विवेश विशदाः शशिप्रभाः ॥ २४ ॥

(प्रकाशिका)

**वारणेति** । रावणेति केचित् पठन्ति । मृद्विति बाहुविशेषणम् । एकपिङ्गलो वैश्रवणः । जगद्गुरुरित्यनेन सर्वत्राप्रतिहतेच्छत्वं[6] द्योत्यते । वि-शदा ज्योत्स्नाः, तासां च कैलाससम्बन्धादतिविशदत्वं ध्वन्यते ॥ २४ ॥

---

१. त्स्वमृ', २. 'ष्वपि प्रि' क. पाठः. ३. 'त्यनेन भ', ४. 'ति ॥' छ. पाठः. ५. 'दृढबा' मुद्रितकोशपाठः. ६. 'तत्वं' घ. क. पाठः.

( विवरणम् )

कैलासशिखरेषु सुरतमाह —

वारणेति । जगद्गुरुः एकपिङ्गलगिरौ विशदाः शशिप्रभाः निर्विवेश । जगतां गुरुर्नियन्ता परमेश्वरः । अनेन तदीप्सितानां सर्वत्राप्यप्रतिहतत्वं द्योत्यते । एकपिङ्ग एवैकपिङ्गलः वैश्रवणः ।

"किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलबिलः श्रीदः पुण्यजनेश्वरः ॥"

इत्यमरः । तस्य गिरौ कैलासे । विशदाः निर्मलाः । अनेन मेघमुक्तत्वं पूर्वपक्षसम्बन्धाद् रजनीमुखोपभोग्यत्वं रजतमयकैलासशिखरसम्बद्धत्वादतिविशदत्वं च द्योत्यते । शशिनश्चन्द्रस्य प्रभाः ज्योत्स्नाः निर्विवेश अनुबभूव । तत्र रममाणस्य देवस्य सुखान्तरमपि जातमित्याह — वारणध्वनितभीतया तया कण्ठसक्तमृदुबाहुबन्धनः इति । वारणानां गजानां ध्वनिताच्छब्दाद् भीतया तया पार्वत्या कण्ठे सक्तं सज्जितं मृद्वोः कोमलयोर्बाह्वोर्बन्धनमालिङ्गनं यस्य स तथा । तस्य देशस्य गजेन्द्रबहुलत्वान्मध्ये मध्ये गजबृंहितभीतया देव्या गाढगाढमालिङ्गित इत्यर्थः । कामिनीनां सभयालिङ्गनस्य कामुकानां श्लाघ्यत्वप्रसिद्धेरेवमुक्तम् । यथाहुः —

"कोपप्रशमने भीतौ वियोगे पुनरागमे ।
सम्भोगे च समाश्लेषो विशेषेण सुखावहः ॥"

इति । रावणध्वनितभीतयेति केचित् पठन्ति । तन्मते कैलासोद्धरणोद्युक्तस्य रावणस्य ध्वनिताद् भीतयेत्यर्थः ॥ २४ ॥

**तस्य जातु मलयस्थलीरते-**
**र्धूतचन्दनलतः प्रियाक्लमम् ।**
**आचचाम सलवङ्गकेसर-**
**श्चाटुकार इव दक्षिणानिलः ॥ २५ ॥**

१. 'ल', २. 'द', ३. 'राः'; ४. 'न श्रुत्वा भी' छ. पाठः.

(प्रकाशिका)

तस्येति । जातु कदाचित् । धूतेति कम्पितचन्दनशाखः । प्रियायाः क्लमं रतिश्रमम् । चाटुकारः प्रियवादी, वन्दीत्यर्थः । वन्दिपक्षे तु धूता आक्षिप्ता चन्दनलता येन । देवि! त्वत्सादृश्ये चन्दनलतापि दूरस्थेत्याक्षेपः । सलवङ्गकेसरः पुष्पाञ्जलिप्रक्षेपार्थं गृहीतलवङ्गकेसरः ॥ २५ ॥

(विवरणम्)

मलयाचले सुरतमाह —

तस्येति । दक्षिणानिलः जातु मलयस्थलीरतेः तस्य प्रियाश्रमम् आचचाम । दक्षिणानिलो मलयानिलः । दर्दुरानिल इति पाठे दर्दुरध्वनियुक्तो वायुरित्यर्थः । जातु कदाचित् । 'कदाचिज्जात्वि'त्यमरः । मलयो मलयाचलः तस्य स्थल्यां प्रदेशे रतिः सुरतं यस्य तस्य परमेश्वरस्य प्रियायाः श्रमं पुरुषायितादिजनितं शरीरसादम् । प्रियाक्लममिति वा पाठः । आचचाम निश्शेषमपाचकारेत्यर्थः । अत्रोपमामाह — चाटुकारः इव इति । चाटुः श्लाघावचनम् । 'अस्त्री चाटुश्चटुः श्लाघे'त्यमरः । चाटुं करोतीति चाटुकारः प्रियवादी वन्दी । यथा प्रभातसमये वन्दी स्तुतिवचनैः परिश्रममपाकरोति, तथा दर्दुरानिलोऽपीत्यर्थः । अत्र वचनप्रतिवस्तुतया दर्दुरपदोपादानम् । उपमानोपमेययोः साधारणं धर्ममाह — धूतेत्यादिना विशेषणद्वयेन । धूतचन्दनलतः धूताः कम्पिताश्चन्दनलताः येन । अनेनानिलस्य सौरभ्यातिशय उक्तः । वन्दिपक्षे तु धूताः आक्षिप्ताश्चन्दनलता येनेति योजनीयम् । हे देवि ! स्वाभाविकसौरभ्यशालित्वेन यद्यपि भवत्याश्चन्दनलतायाश्च सादृश्यं प्रतीयते, तथापि प्रकृतिकठिना चन्दनलता त्वत्सादृश्यविषये दूरादवस्थितैवेत्याक्षेपप्रकारः । तथा सलवङ्गकेसरः लवङ्गानां वृक्षविशेषाणां केसरैः कुसुमकिञ्जल्कैः सहितः । 'किञ्जल्कः केसरोऽस्त्रियामि'त्यमरः । वन्दिपक्षे पुष्पाञ्जलिप्रक्षेपार्थं करगृहीतलवङ्गकेसर इत्यर्थः ॥ २५ ॥

---

१. 'क्षे धू' ङ. पाठः. २. 'क्ल', ३. 'क्ला' छ. पाठः.

हेमतामरसताडितप्रिया
तत्कराम्बुविनिमीलितेक्षणा ।
खे[1] व्यगाहत तरङ्गिणीमुमा
मीनपङ्क्तिपुनरुक्तमेखला ॥ २६ ॥

(प्रकाशिका)

हेमेति । हेमपद्मेन ताडितः प्रियो यया । तत्करेति भर्तृकरोत्पीडिताम्बुनिमीलितलोचना । खे तरङ्गिणीं मन्दाकिनीम् । नाभिदघ्ने पयासि विहरन्त्या देव्या मेखलास्थाने मीनेषु सञ्चरत्सु मेखलाद्वैगुण्यं प्रतिभातीति मीनेति विशेषणम् ॥ २६ ॥

(विवरणम्)

इत्थं वनक्रीडाप्रकारमुक्त्वा जलक्रीडाप्रकारमाह —

हेमेति । उमा खे तरङ्गिणीं व्यगाहत । उमा पार्वती खे आकाशे वर्तमानां तरङ्गिणीं नदीम् । आकाशगङ्गामित्यर्थः । व्यगाहत विगाहते स्म । पार्वती परमेश्वरेण सह जलक्रीडार्थं मन्दाकिनीमगाहतेत्यर्थः । जलक्रीडाप्रकारं सङ्क्षिप्याह — हेमेत्यादिना विशेषणद्वयेन । हेमतामरसताडितप्रिया हेममयेन तामरसेन पद्मेन ताडितः अभिहतः प्रियो भर्ता यया सा तथा । ताडनसमये प्रियस्य प्रवृत्तिं देवीविशेषणद्वारेणाह — तत्कराम्बुविनिमीलितेक्षणा इति । तत्करे प्रियकरे यदम्बु जलं तेन हेतुना विनिमीलिते विशेषेण मीलिते अक्षिणी यया सा तथा । भर्तृकरोत्पीडितजलपतनसमये निमीलितलोचनेत्यर्थः । जलविहारसमये देव्याः शोभान्तरं च जातमित्याह — मीनपङ्क्तिपुनरुक्तमेखला इति । मीनानां मत्स्यानां पङ्क्त्या आवल्या कर्तृभूतया

१. 'सा' मुद्रितकोशपाठः.

पुनरुक्ता अर्थाद् द्वैरूप्यमापादिता मेखला काञ्ची यस्याः सा तथा। नाभिदघ्ने पयसि परस्परं ताडनजलप्रक्षेपादिभिर्विहरन्त्या देव्या मेखलापदे मीनजालेषु परितः सञ्चरत्सु मेखलाद्वैरूप्यं प्रतीतमासीदित्यर्थः ॥ २६ ॥

**तां पुलोमतनयालकोचितैः**
**पारिजातकुसुमैः प्रसाधयन्।**
**नन्दने चिरमयुग्मलोचनः**
**सस्पृहं सुरवधूभिरैक्ष्यत[1] ॥ २७ ॥***

(विवरणम्)

इत्थं मन्दाकिन्यां कृतविहारं स्नाताया देव्यास्तदनुरूपं प्रसाधनप्रकारमाह—

तामिति। नन्दने पारिजातकुसुमैः तां प्रसाधयन् अयुग्मलोचनः सुरवधूभिः सस्पृहं चिरम् ऐक्ष्यत। नन्दनोद्याने पारिजातकुसुमैः कल्पवृक्षपुष्पैः तां पार्वतीं प्रसाधयन् अलङ्कुर्वन् अयुग्मलोचनस्त्रिनेत्रः सुरवधूभिः सुरसुन्दरीभिः सस्पृहं साभिलाषं यथा भवति तथा ऐक्ष्यत ईक्षितोऽभूत्। तत् तु न क्षणमात्रं किन्तु चिरं चिरकालम्। 'कालाध्वनोः—' (२. ३. ५) इति द्वितीया। पारिजातकुसुमानां विशेषमाह—पुलोमतनयालकोचितैः इति। पुलोमतनया शची तस्या अलकानामेवोचितैः योग्यैः। अन्याभिः सुरवधूभिर्मनसाप्यगम्यैरित्यर्थः। नन्दनोद्याने पौलोमीव्यतिरिक्तसुरवधूजनदुर्लभैः कल्पवृक्षकुसुमविशेषैः प्रियामलङ्कुर्वन्नयुग्मलोचनः सुरसुन्दरीभिः अपिनामानेन सह कदाचिदप्यस्माकमेवमवस्थानं भवेदिति साभिलाषं मुहुर्मुहुरवलोकितोऽभूदिति भावः ॥ २७ ॥

**इत्यभौममनुभूय शङ्करः**
**पार्थिवं च वनिता[2]सखः सुखम्।**

१. 'रीक्षितः ॥' २. 'दयिता' मुद्रितकोशपाठः.

* अस्य पद्यस्य प्रकाशिका न दृश्यते।

**लोहितायति कदाचिदातपे**
**गन्धमादनवनान्न्यवर्तत ॥ २७ ॥**[1]

(प्रकाशिका)

प्रकृतोपसंहारेण प्रकरणान्तरमारभते —

**इतीति । अभौमं मेरुमन्दरादिगतम् । पार्थिवं मलयगतम् । वनितासख इति सुखस्य सम्भोगाङ्गत्वमुक्तम्[2] । आतपे लोहितायतीति वक्ष्यमाणप्रकरणप्रस्तावार्थम् । गन्धमादनवनाद् गन्धमादनवनमुद्दिश्य । गन्धमादनस्यौषधिप्रस्थप्रत्यासन्नत्वाद् न्यवर्ततेत्युक्तम् ॥ २७ ॥**

(विवरणम्)

'तत्र तत्र विजहार सम्पतन्' (श्लो.२१) इति यदुक्तं तदुपसंहृत्य सन्ध्याचन्द्रोदयाद्युद्दीपनवर्णनपुरस्सरं सुरतं वर्णयितुं तदुचितदेशप्राप्तिमाह —

इतीति । शङ्करः अभौमं पार्थिवं च सुखं वनितासखः इति अनुभूय कदाचिद् आतपे लोहितायति गन्धमादनवनं न्यवर्तत । भौमं भूमिभवं न भवतीत्यभौमम् । मेरुमन्दरस्वर्गापगादिदिव्यप्रदेशभवमित्यर्थः । पार्थिवं पृथिवीभवम् । मलयाचलादिगतमित्यर्थः । चशब्दो विस्तरभयादनुक्तानामन्येषां च समुच्चयार्थः । सुखं सम्भोगसुखमित्यर्थः । अत एवोक्तं — वनितासख इति । वनितायाः सखा सन् । वनितया सहेत्यर्थः । अत्यर्थजनितानुरागा स्त्री वनिता । 'वनिता जनितात्यर्थानुरागायां च योषिती'त्यमरः । इति पूर्वोक्तक्रमेण अनुभूय । कदाचिदित्यनेन बहुकालानुभव उक्तः । आतपे सूर्यप्रभायां लोहितायति रुधिरवदाचरति रक्तवर्णत्वमुपयाति । दिनान्तसमय इत्यर्थः । इदं च वक्ष्यमाणसन्ध्यादिवर्णनप्रस्तावार्थमुक्तम् । गन्धमादनवनं प्रति न्यवर्तत ।

---

१: 'नं व्यगाहत' मुद्रितकोशपाठः. २. 'क्तम् ॥ त' क. पाठः.

गन्धमादनवनादिति पाठे गन्धमादनवनमुद्दिश्येत्यर्थः । ल्यब्लोपे पञ्चमी । न्यवर्तत निवृत्तोऽभूत् । गन्धमादनवनस्यौषधिप्रस्थोद्यानभूतत्वान्न्यवर्ततेत्युक्तम् । यथोक्तं — 'यस्य चोपवनं बाह्यं सुगन्धिर्गन्धमादनः' (स. ६. श्लो. ४६) इति । कामगेन वृषेण दयितया सह तत्र तत्र सञ्चरन् परमेश्वरः कदाचिदोषधिप्रस्थसमीपवर्तिनं गन्धमादनाचलमेवोद्दिश्य प्रतिनिवृत्तोऽभूदित्यर्थः ॥

तत्र काञ्चनशिलातलाश्रयी[२]
नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां
व्याजहार सहधर्मचारिणीम् ॥ २९ ॥

(प्रकाशिका)

तत्रेति । नेत्रगम्यं सुखदर्शनम् । अनेन नायिकादृष्टिदानयोग्यतां[३] द्योतयति । भास्करमवलोक्येति व्याहारस्य तद्विषयत्वं सूचयति । दक्षिणेत्यादिना समुचितप्रदेशस्थितिरुक्ता । सहधर्मचारिणीमिति आत्मानिर्विशेषत्वं द्योतयति ॥ २९ ॥

(विवरणम्)

अथ सुरतवर्णनानामुद्दीपनपूर्वकत्वादवश्यवर्णनीयानां सन्ध्याचन्द्रोदयादीनां पृथगेव वर्णने सति प्रकृतमपहाय कथान्तरारम्भेण रसभङ्गमाशङ्क्य रसानुसारी महाकविर्नायिकानायकसल्लापमुखेनैव सन्ध्यादिवर्णनं कर्तुमुपक्रमते —

तत्रेति । अत्र स इत्यध्याहार्यम् । सः तत्र काञ्चनशिलातलाश्रयी नेत्रगम्यं भास्करमवलोक्य दक्षिणेतरभुजव्यपाश्रयां सहधर्मचारिणीं व्याजहार । तत्र गन्धमादनवने काञ्चनमयं शिलातलं शिलाप्रदेशमाश्रयितुं शीलमस्येति तथा । सुखासीनत्वादासनस्थैर्यं णिनिप्रत्ययार्थः । काञ्चनशब्द उद्दीपनस-

---

१. 'नस्यौ' छ. पाठः. २. 'यो' मुद्रितकोशपाठः. ३. 'ष्टियो' क. ग. पाठः.

म्पदं द्योतयति । नेत्रैर्गम्यं प्राप्यम् । प्रभापरिक्षयात् सुखदृश्यमित्यर्थः । अनेन सुकुमारतरनायिकादृष्टिपातयोग्यत्वं ध्वन्यते । भास्करम् आदित्यम् अवलोक्य व्याजहारेत्यनेन व्यवहाराणां तद्विषयत्वं सूचितम् । दक्षिणेतरो वामो भुजः व्यपाश्रय आश्रयो यस्यास्ताम् । वामपार्श्वस्थितामित्यर्थः । अनेन समुचितप्रदेशवर्तित्वमुक्तम् । प्रोद्वीक्षणाख्यो भावश्च दर्शितः । 'प्रोद्वीक्षणं नाम वामपार्श्वे स्त्रियं स्थापयित्वा चन्द्रादिदर्शनमि'ति भोजः । सहधर्मचारिणीं भार्याम् । सह धर्मं चरितुं शीलमस्या इति तथा । अनेनात्मनिर्विशेषत्वं देव्याः प्रतिपादितम् । व्याजहार उक्तवान् । भगवान् परमेश्वरो गन्धमादनवने काञ्चनमयीं काञ्चन शिलामधिष्ठाय सम्प्राप्तास्तमयत्वात् प्रभापरिक्षयेण सकललोकदृष्टिगोचरं भास्करमुद्दिश्य प्रियतमां व्याहृतवानित्यर्थः ॥ २९ ॥

**पद्मकान्तिमरुणत्रिभागयोः**
**सङ्क्रमय्य तव नेत्रयोरिव ।**
**संक्षये जगदिव प्रजेश्वरः**
**संहरत्यहरसावहर्पतिः ॥ ३० ॥**

(प्रकाशिका)

**पद्मेति** । अरुणस्त्रिभागस्तृतीयो भागो ययोः । अनेन पुनरुपादानाय सङ्क्रम्यमाणायाः पद्मकान्तेः 'वृद्धिः समानैः सर्वेषामि'ति न्यायादनपचयाभिसन्धिर्द्योत्यते । सङ्क्रमणेन च संह्रियमाणस्याह्नः सारभूता पद्मकान्तिरिति ध्वन्यते, यतो गृहादौ कस्मिंश्चिदवयविनि संह्रियमाणे सारभूतं दार्वादि क्वचिन्निक्षिप्यते । पद्मकान्तिसङ्क्रमणोत्प्रेक्षायां च तन्नेत्रयोः सम्भोगकालप्रत्यासत्त्या वर्धमानकान्तिकत्वं हेतुः । संक्षये

१. 'व्याहा', २. 'न् । प' छ. पाठः. ३. 'ङ्क्रा' क. घ. पाठः. ४. 'ङ्क्रा' क. पाठः. ५. 'न्तित्वं' क. ग. पाठः.

कल्पान्ते । उपमानेन संह्रियमाणस्यातिविततत्वं तत्संहर्तुः स्वतन्त्रत्वं च द्योत्यते ॥ ३० ॥

(विवरणम्)

उक्तिप्रकारानेवाह पद्मेत्यादिना । तत्रादौ वक्ष्यमाणमर्थं सङ्क्षिप्य दर्शयति —

पद्मेति । अहर्पतिः असौ अहः संहरति । अह्नां पतिरहर्पतिः आदित्यः । असौ तेजःपरिक्षयात् प्रत्यक्षतया लक्ष्यमाणः । सहस्तनिर्देशं[२] चेदं वचनम् । अहः दिवसम् । 'दिनाहनी वा तु क्लीबे दिवसवासरावि'त्यमरः । संहरति सम्यग् हरति विनाशयति । अत्रोपमामाह —प्रजेश्वरः संक्षये जगद् इव इति । प्रजानां जनानाम् ईश्वरः प्रजेश्वरः । सृष्टिस्थितिसंहारकारी परमात्मेत्यर्थः । अनेन प्रजासंहारे प्रजेश्वरस्येवाह्नः संहारेऽप्यहर्पतेः स्वातन्त्र्यं ध्वन्यते । संक्षये, क्षय एव संक्षयः कल्पान्तः, तस्मिन् । 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपी'[३]त्यमरः । जगत् प्रपञ्चमिव । अत्र संह्रियमाणस्याह्नः प्रपञ्चदृष्टान्तेन तस्यापि प्रपञ्चवदतिविततत्वं ध्वन्यते, संहारस्य विस्मयकरत्वं च । उत्प्रेक्षामप्याह—पद्मकान्तिम् अरुणत्रिभागयोः तव नेत्रयोः सङ्क्रमय्य इव इति । पद्मानां कान्तिं शोभाम् । अरुणः रक्तवर्णः त्रिभागस्तृतीयो भागो ययोस्तयोः । अत्र त्रिभागशब्दस्त्रिभागशेषासु निशास्वितिवद् द्रष्टव्यः । अनेन नेत्रविशेषणेन नेत्रयोः पद्मकान्तिसङ्क्रमणयोग्यत्वमुक्तम् । तेन च पुनरुपादानाय सङ्क्रम्यमाणायाः पद्मकान्तेरपचयाभावनिश्चयः सङ्क्रमणकर्तुर्द्योत्यते । 'वृद्धिः समानैः सर्वेषामि'ति न्यायात् । नेत्रयोरित्यधिकरणसप्तमी । सङ्क्रमय्य सङ्क्रमणं कृत्वेव । संह्रियमाणस्याह्नः सारभूतां पद्मकान्तिं तदुचिते प्रदेशे निक्षिप्य संरक्ष्येवेत्यर्थः । यद्वत् पुरातने गृहादाववयविनि नवीकरणाय संह्रियमाणे सति तत्सारभूतं दार्वादिकं कुत्रचित् प्रदेशे निक्षिप्यते, तद्वदित्यर्थः । अत्र देवीनेत्रयोः सम्भोगप्रत्यासत्त्या परिवर्धमानकान्तित्वं पद्मकान्तिसङ्क्रमणोत्प्रेक्षायां[४] हेतुः ॥ ३० ॥

---

१. 'ध्वन्यते' ङ. पाठः. २. 'शं वचनं चेदम् । अ', ३. 'त्यम', ४. 'मोत्प्रे' छ. पाठः.

शीकरव्यतिकरं मरीचिभि-
र्दूरयत्यवनते विवस्वति।
इन्द्रचापपरिवेषशून्यतां
निर्झरास्तव पितुर्व्रजन्ति ते ॥ ३१ ॥

(प्रकाशिका)

शीकरेति। व्यतिकरः संपर्कः। दूरयति दूरीकुर्वति। अपनयतीत्यर्थः। दक्षिणावर्तस्त्वाह— दूरयतीत्यस्य साधुत्वं मृग्यम्। तथाहि दूरशब्दात् 'तत्करोति—' (ग० सू० ३. १. २६) इति णिचि कृते 'णाविष्ठवत्प्रातिपदिकस्ये'ति इष्ठवद्भावः स्यात्। 'स्थूलदूर—'(६. ४. १५६) इत्यादिना पूर्वस्य यणो लोपो गुणश्च भवति। तदा दवयतीति रूपं स्यादिति। अत्र वामनेन—'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' (ग० सू० ३. १. २६) इति बहुलग्रहणात् समर्थितम्। नानाप्रभासमुदाय इन्द्रचापः, तत्परिवेषस्तन्मण्डलं, तेन शून्यताम्। जले पतन्तोऽर्ककिरणा नानावर्णसमुदायमण्डलानि कुर्वन्ति। तेषु गतेषु तान्यपि गच्छन्तीति प्रसिद्धिः। प्रसवितुः पितुः ॥ ३१ ॥

(विवरणम्)

सूर्य एव सर्वेषामपि तेजसां प्रवर्तक इति यदुच्यते, तत् सत्यमेव। अत एव तस्मिन् गतप्राये तेजोन्तराण्यपि नश्यन्तीत्याह—

शीकरेति। अवनते विवस्वति मरीचिभिः शीकरव्यतिकरं दूरयति ते प्रसवितुः निर्झराः इन्द्रचापपरिवेषशून्यतां व्रजन्ति। अवनते आसन्नास्तमयत्वादधोमुखे। इदं तु मरीचिभिः शीकरव्यतिकरदूरीकरणे हेतुः। विवस्वति आदित्ये मरीचिभिः किरणैः शीकरव्यतिकरं शीकरैः जलकणैः व्यतिकरं सम्पर्कम्। दूरयति दूरीकुर्वति। अपनयति सतीत्यर्थः। ननु दूरशब्दात्

---

१. 'रास्तव पितुर्व्रजन्त्यमी ॥' मुद्रितकोशपाठः. २ 'द' घ. ङ. पाठः.

तत्करोतीति णिचि कृते 'णाविष्ठवत् प्रातिपदिकस्ये'तीष्ठवद्भावात् 'स्थूल-दूर—' इत्यादिना सूत्रेण यणादेर्लोपः पूर्वस्य गुणश्च भवति। तदा दवयतीत्येव रूपं स्यादिति कथं दूरयतीति। उच्यते। 'प्रातिपदिकाद्धात्वर्थे बहुलम्—' इति(वामनेन?) बहुलग्रहणादिति *ब्रूमः। ते प्रसवितुः तव पितुर्हिमवत इत्यर्थः। निर्झराः वारिप्रवाहाः। इन्द्रचापो नाना†रत्नप्रभासमुदायः, तस्य परिवेषो मण्डलं, तेन शून्यतां शून्यत्वं व्रजन्ति। जलशीकरेषु पतन्तो रविकिरणा नानावर्णसमुदायमण्डलानि विरचयन्ति। रविकिरणेषु निवृत्तेषु तान्यपि निवर्तन्त इति प्रसिद्धिः। सूक्ष्मदर्शिनां प्रत्यक्षभूतश्चायमर्थः। सूर्यमण्डलस्याधोमुखत्वात् समुन्नतेभ्यो हिमवच्छिखरेभ्यो निपततां जलप्रवाहशीकराणां रविकरसम्पर्काभावान्नानाप्रभामण्डलान्यपि निवृत्तानीत्यर्थः॥ ३१॥

दष्टतामरसकेसरत्यजोः
क्रन्दतोर्विपरिवृत्तकण्ठयोः।
निघ्नयोः सरसि चक्रवाकयो-
रल्पमन्तरमनल्पतां गतम्॥ ३२॥

(प्रकाशिका)

दष्टेति। दैवबलात्कारेण चञ्चुपुटद्वयदष्टपद्मकेसरत्यागपूर्वकमन्योन्यपराङ्मुखीकृतकण्ठयोः परस्परादर्शनादिना तथा वैशसमनुभवतोश्चक्रवाकदम्पत्योरल्पमपि देशव्यवधानं सद्य एव सहस्रयोजनव्यवधानमिव जातमित्यर्थः। अनेन दैवादावयोः किञ्चित्का(ल? ला)समागमे सति न केवलं भवत्या, मयापि महद् वैशसमनुभूतमिति द्योतयन्नुपेक्षापराधशल्यं परमधूर्तः प्रियतमाहृदयादुद्धरति॥ ३२॥

---

१. 'तुः हिम' छ. पाठः. २. 'स्र' मुद्रितकोशपाठः. ३. 'त्त' घ. पाठः.

---

* 'ब्रूमः' इत्यस्य स्थाने 'वामनः' इति पाठ्यं प्रतिभाति। † 'रत्न' इत्यस्य स्थाने 'वर्ण' इति स्यात्।

(विवरणम्)

अपिच चक्रवाकमिथुनान्यपि वियुक्तानीत्याह —

दष्टेति । सरसि चक्रवाकयोः अल्पम् अन्तरम् अनल्पतां गतम् । सरसि पद्माकरे । 'पद्माकरस्तटाकोऽस्त्री कासारः सरसी सरः' इत्यमरः । चक्रवाकयोः चक्रवाकदम्पत्योः अल्पमन्तरम् अत्यल्पमेव देशव्यवधानम् अनल्पतां गतम् । सहस्रयोजनपरिमितामिव जातमित्यर्थः । सरसि परिवर्तमानयोः पद्मपत्रमात्रान्तरितयोश्चक्रवाकदम्पत्योर्दैववशादत्यल्पमपि देशव्यवधानं परस्परदर्शनविलापश्रवणाद्यभावादनेकसहस्रयोजनपरिमितमिव जातमिति भावः । अनेन परस्परविरह उक्तः । विरहस्यानुभावमाह — दष्टेत्यादिना विशेषणत्रयेण । दष्टतामरसकेसरत्यजोः दष्टं कबलनार्थं चञ्चुद्वयेन गृहीतं तामरसस्य पद्मस्य केसरं किञ्जल्कं त्यजत इति दष्टतामरसकेसरत्यजौ तयोः । अर्धकबलिततामरसकेसरमपि परित्यजतोरित्यर्थः । अनेन विषयनिवृत्तिरूपा मदनावस्था दर्शिता । उन्मादावस्थामप्याह — क्रन्दतोरिति । उच्चैस्तरामाक्रन्दनं कुर्वतोरित्यर्थः । विरहप्रकारमेवाह — विपरिवृत्तकण्ठयोरिति । अन्योन्यपराङ्मुखीकृतग्रीवयोः । प्रियतमावस्थितं देशमपहाय वलितग्रीवमितस्ततश्चक्षुर्विक्षिपतोरित्यर्थः । एवंविधे वैशसे हेतुमाह — निघ्नयोरिति । 'अधीनो निघ्न आयत्तः स्वच्छन्द' इत्यमरः । विधिपराधीनयोरित्यर्थः । स्निग्धयोरिति वा पाठः । अनेन परमधूर्तो देवः 'न जातु बाला लभते स्म निर्वृतिं तुषारसङ्घातशिलातलेष्वपि' (स. ५. श्लो. ५५) इत्यादिसखीवचनमनुसन्दधानः त्वद्विरहात् प्रणयपराधीनेन मयापि चक्रवाकवदेवं वैशसमनुभूतमिति द्योतयन् प्रियतमाहृदयगतमुपेक्षाशल्यं दैववैपरीत्यदोषप्रतिपादनमुखेनोद्धृतवानित्यवसेयम् ॥३२॥

**स्थानमाह्निकमपास्य दन्तिनः**
**सल्लकीविटपभङ्गवासितम् ।**

१. 'र' छ. पाठः.

आविभातचरणाय गृह्णते
वारि वारिरुहरुद्धषट्पदम् ॥ ३३ ॥

(प्रकाशिका)

स्थानमिति । आह्निकमह्नो योग्यम् । सल्लकीति भक्षितशेषसल्लकी-शाखाशकलसुरभितम् । सल्लकी गजप्रिया लता । आविभातचरणाय विभातादारभ्य यच्चरणं[2] भक्षणं तस्मै पर्याप्तं वारि गृह्णते । वारिरुहरुद्ध-षट्पदमित्यनेन भ्रमरबाधाराहित्यमुक्तम् । वारिरुहपत्रलोचन इति वा पाठः । पत्रसंपुट इत्ययुक्तः पाठः । इदमत्रानुसन्धेयं—दन्तिनो ह्यातप-भयात् कुत्रापि तरुषण्डे दिवसमतिवाहयन्तः स्वैरं सल्लक्यादिभक्षणं कुर्वन्ति । ततो दिवसान्ते निर्गत्य भक्षितानुरूपं जलं पिबन्तीति ॥ ३३ ॥

(विवरणम्)

आदित्यास्तमये गजानामपि समवस्थानमाह--

स्थानमिति । वारिरुहपत्रलोचने ! दन्तिनः आह्निकं स्थानम् अपास्य आविभातचरणाय वारि गृह्णते । वारिरुहस्य पङ्कजस्य पत्रे दले इव लोचने यस्याः तस्याः सम्बुद्धिरियम् । दन्तिनः गजाः आह्निकम् अह्नो दिवसस्य योग्यं स्थानम् । निरातपं वनप्रदेशमित्यर्थः । अपास्य परित्यज्य आविभातच-रणाय विभातादारभ्य यच्चरणं भक्षणं तस्मै । पर्याप्तमिति शेषः । वारि जलम् । गृह्णते उपाददते । 'ग्रह उपादाने' इति धातुः । पिबन्तीति यावत् । आह्नि-कस्य स्थानस्य मनोहरत्वमाह— सल्लकीविटपभङ्गवासितमिति । सल्लकी गजप्रिया ।

"गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ।
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ॥"

---

१. 'व' मुद्रितकोशपाठः. २. 'णं त' क. ग. पाठः.

इत्यमरः। तस्या विटपानां ये भङ्गाः शकलानि तैर्वासितं सुरभीकृतम्। दन्तिनो हि सन्ततातपानि दिनानि शीतलेषु वनप्रदेशेष्वतिवाहयन्ति। सल्लकीशकलानि च कवलयन्ति। दिवसावसानेषु तु सरोवरमवगाह्य भक्षितानुरूपं जलं पिबन्ति। यथोक्तं पालकाप्ये —

"आतपभीता नागा वनभुवि तरुषण्डमण्डिते कुहचित्।
अतिवाहयन्ति दिवसान् सलिलं गृह्णन्ति सन्ध्यासु॥"

इति॥ ३३॥

**पश्य पश्चिमदिगन्तलम्बिना**
**निर्मितं मितकथे! विवस्वता।**
**दीर्घया[1] प्रतिमया सरोम्भसां**
**तापनीयमिव सेतुबन्धनम्॥ ३४॥**

(प्रकाशिका)

पश्येति। तापनीयं तपनीयमयम्। पश्चिमद्दिगन्तलम्बित्वात्[2] प्रतिमाया दीर्घत्वम्॥ ३४॥

(विवरणम्)

अत्यद्भुतमन्यच्च पश्येत्याह —

पश्येति। मितकथे! पश्चिमदिगन्तलम्बिना विवस्वता दीर्घया प्रतिमया सरोम्भसां तापनीयं सेतुबन्धनं निर्मितम् इव पश्य। मिता स्वल्पा कथा यस्यास्तस्याः सम्बुद्धिरियम्। हे स्वल्पभाषिणीत्यर्थः। मितभाषितत्वमुत्तमनायिकाधर्मः। पश्चिमाया दिशः अन्ते अवसाने लम्बितुं शीलमस्येति तथा। अनेन प्रतिमाया दीर्घत्वे हेतुरुक्तः। विवस्वता सूर्येण कर्त्रा। दीर्घया सरसां

---

१. 'लब्धया' मुद्रितकोशपाठः. २. 'न्ते ल' घ. पाठः.

पश्चिमदिग्भागादारभ्य पूर्वदिग्भागपर्यन्तं तरङ्गेषु दृश्यमानयेत्यर्थः । प्रतिमया प्रतिबिम्बेन करणभूतेन । सरसि यान्यम्भांसि तेषाम् । तपनीयं सुवर्णं तन्मयं सेतोर्बन्धनं कृतमिव । पश्य · अवलोकय । पश्चिमदिगन्तावस्थिते विवस्वति वीचिभिन्नायास्तत्प्रतिमाया दीर्घतया सरसां पूर्वभागपर्यन्तमवस्थितत्वाज्जले तपनीयमयसेतुर्निर्मित इव प्रतिभातीत्यर्थः ॥ ३४ ॥

**उत्तरन्ति विनिकीर्य पल्वलं**
**गाढपङ्कमतिवाहितातपाः ।**
**दंष्ट्रिणो वनवराहयूथपा**
**दष्टभङ्गुरबिसाङ्कुरा इव ॥ ३५ ॥**

(प्रकाशिका)

**उत्तरन्तीति** । उच्चैर्देशप्राप्तिरुत्तरणम् । विनिकीर्य विक्षोभ्य । अत्रावगाढपङ्कत्वं हेतुः । दंष्ट्रिणः 'व्रीह्यादिभ्यश्च' (५. २. ११६) इतीनिः । इदमुत्प्रेक्षाया मूलम् । अयमर्थो रघुवंशेऽप्युक्तः 'स पल्वल' (स० २. श्लो० १६) इत्यादिना ॥ ३५ ॥

(विवरणम्)

वराहाणामवस्थानं दर्शयति —

**उत्तरन्तीति** । वनवराहयूथपाः अतिवाहितातपाः पल्वलं विनिकीर्य उत्तरन्ति । वने वर्तमानानां वराहाणां यूथं समूहं पान्ति रक्षन्तीति वनवराहयूथपाः । वराहाधिपतय इत्यर्थः । अतिवाहितः गमितः आतपः आतपसमयो यैस्तथाभूताः सन्तः । पल्वलं वेशन्तम् । 'वेशन्तः पल्वलं चाल्पसर' इत्यमरः । विनिकीर्य विक्षोभ्य उत्तरन्ति उन्नतं देशं गच्छन्ति निम्नात् । पल्वलप्रदेशादिति शेषः । अत्र यूथपानामुत्तरणवचनेन यूथानामप्युत्तरणमर्थादुक्तं भवति ।

आतपभीता वराहाः पल्वलेष्वातपसमयमतिवाह्य दिनावसाने पल्वलादुद्गच्छन्तीत्यर्थः। अयं च वराहाणां स्वभावः। उक्तं च रघुवंशे — 'स पल्वलोत्तीर्णवराहयूथानि' इति। विनिकीर्य पल्वलमिति यदुक्तं, तत्र हेतुमाह — गाढपङ्कमिति। गाढः अवगाढः पङ्को यस्मिंस्तत्। परिपूर्णपङ्कमित्यर्थः। वराहयूथपानां स्वरूपविशेषमाह — दंष्ट्रिण इति। दंष्ट्राः सन्त्येषामिति दंष्ट्रिणः। व्रीह्यादित्वादिनिः। दंष्ट्राद्वितयविद्योतमाना इत्यर्थः। अत एवोत्प्रेक्षते — दष्टभङ्गुरबिसाङ्कुराः इव इति। दष्टः सन्दष्टः भङ्गुरः भञ्जनशीलः बिसानां मृणालानामङ्कुरो यैस्ते तथा। बिसाङ्कुराणां धावल्यं निशिताग्रत्वं चोत्प्रेक्षाबीजम्। अत्र भङ्गुरशब्दो भक्षणसौकर्यं द्योतयन् बिसाङ्कुरदंशने हेतुमुद्घाटयति। अवसरे भक्षणार्थं गृहीतमृदुलमृणालाङ्कुरा इवेत्यर्थः॥

**एष वृक्षशिखरे कृतास्पदो**
**जातरूपरसगौरमण्डलः।**
**हीयमानमहरत्ययातपं**
**पीवरोरु! पिबतीव बर्हिणः॥ ३६॥**

(प्रकाशिका)

एष इति। वृक्षशिखरे कृतास्पद इत्यनेन 'आवासवृक्षोन्मुखबर्हिणानि'(रघु० स० २. श्लो० १७) इत्यनुसंहितम्। जातरूपेति। हेमद्रवपीतबर्हमण्डलः। हीयमानमहरत्ययातपमित्यत्रेदमनुसन्धेयं — क्षीयमाणानां तेजसां प्रसराः सदृशेषु तेजोन्तरेषु प्रतिफलन्ति। तदानीं तानि तेजोन्तराणि क्षीयमाणांस्तेजःप्रसरान् गृह्णन्तीव प्रतिभान्ति। ततो जातरूपरसगौरमण्डलो बर्हिणः स्वसंक्रान्तं हीयमानमहरत्ययातपं पिबन्नुत्प्रेक्ष्यते। अमुमेवार्थमनुसन्धास्यति 'सिंहकेसरसटासु' (श्लो. ४६)इत्यादिना॥ ३६॥

(विवरणम्)

मयूराणामवस्था[२]नं दर्शयति —

एष इति। पीवरोरु! वृक्षशिखरे कृतास्पदः एषः बर्हिणः अहरत्ययातपं

---

१. 'क्तः र' क. पाठः. २. 'स्थां द' छ. पाठः

पिबति इव । पीवरौ महान्तौ ऊरू यस्यास्तस्याः सम्बुद्धिः । वृक्षस्य शिखरे अग्रे । 'शिरोऽग्रं शिखरं वा ने'त्यमरः । कृतं विहितमास्पदं स्थानं येन स तथा । सन्ध्यासमयमासन्नमवलोक्य वृक्षाग्रे कृतावास इत्यर्थः । शिखण्डिनो हि दिवसावसानसमयादारभ्य प्रभातपर्यन्तं व्याघ्रादिभयादत्युन्नतेषु वृक्षाग्रेषु निवसन्ति । अत एवोक्तं रघुवंशे—'आवासवृक्षोन्मुखबर्हिणानी'ति । बर्हिणः बर्ही । 'मयूरो बर्हिणो बर्ही'त्यमरः । अह्नो दिवसस्य अत्यये अवसाने य आतपः तं पिबतीव । उत्प्रेक्षायां हेतुमाह— जातरूपरस-गौरमण्डल इति । जातरूपं काञ्चनम् । 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः । तस्य रसो द्रवः तद्वद् गौरं पीतम् । 'गौरोऽरुणे सिते पीते' इत्यमरः । मण्डलशब्देन मण्डलवान् लक्ष्यते । सुवर्णद्रवपीतशिखण्डमण्डल इत्यर्थः । हे-त्वन्तरमप्याह—ह्रीयमानमिति । प्रतिक्षणं परिक्षीयमाणम् । अत्र सुवर्णद्रव-पीतेषु शिखण्डिशिखण्डमण्डलेषु तत्समानवर्णं दिनान्तातपं प्रतिफलितं प्रति-क्षणं परिक्षीयमाणं चावलोक्य अनेन पीयत इवायं दिनान्तातप इत्युत्प्रेक्ष्यते। शिखण्डमण्डलस्य दिनान्तातपतुल्यवर्णत्वं दिनान्तातपस्य परिक्षीयमाणत्वं चोत्प्रेक्षाबीजम् ॥ ३६ ॥

**पूर्वभागतिमिरप्रवृत्तिभि-**
**र्व्यक्तपङ्कमिव जातमेकतः ।**
**खं हृतातपजलं विवस्वता**
**भाति किञ्चिदिव शेषवत् सरः ॥ ३७ ॥**

(प्रकाशिका)

पूर्वेति । प्राचीमूलप्रवृत्ततिमिरं विवस्वता संक्षिप्तातपजलमा-काशमेकतः स्फुटपङ्केन किञ्चिच्छुष्केण सरसा सदृशं प्रतिभातीत्यर्थः ।

---

१. 'त', २. 'क्ष' क. पाठः. ३. 'शे' मुद्रितकोशपाठः.

नन्वेवमर्थस्थितौ पूर्वे इवशब्दः प्रवृत्तिभिरिति शाब्दश्च हेतुरनुपादेयः । न । उत्प्रेक्षाया विवक्षितत्वात् । ननु पूर्वभागनिर्देशेनैवोत्प्रेक्ष्यमाणस्य व्यक्तपङ्कत्वस्याप्यर्थात् काचित्कत्वसिद्धावेकत इत्यनुपादेयम् । न । वास्तवमुपमानभूतसरोविशेषणत्वमभिप्रेत्य प्रयुक्तत्वात् । तथा चार्थस्थितिर्दर्शिता । इवशब्दस्त्वत्र किञ्चिन्निरूप्यते । तस्य ह्युपमावाचित्वे सर इवेत्युपमाननिकट एव प्रयोगो मुख्यः । चादीनां हि निपातानां समुच्चेतव्यादिनिकटे प्रयोगो नियतः । तथा चोपपादितमाचार्येण महिम्ना । इह तु सरोविशेषणस्य शोषवदित्यस्य यद् विशेषणमीषदर्थवाचि किञ्चिदिति, तन्निकटे प्रयोगः । स क्रमभेददुष्ट एव । अथ किञ्चिदित्यस्य किमपीत्यर्थः सरोविशेषणत्वं च, तर्हि तदेवानुपादेयम्, उपमायामनुपयोगित्वात् । तस्मादिवशब्दस्य वाक्यालङ्कारार्थत्वं युक्तम् । यथा 'आवर्जिता किञ्चिदिव स्तनाभ्याम्' (स० ३. श्लो० ५४) इति । यथा वा 'मध्यं वयः किञ्चिदिव स्पृशन्ती'ति । तथा च खं किञ्चिदिव शोषवत् सरो भातीत्यन्वयः । विवस्वता हृतातपजलमित्युभयविशेषणमिति दक्षिणावर्तः । तदसत् । शोषवत्त्वस्य धर्मस्याधिक्यात् । अवस्थाभेदेन बहुत्वाद् प्रवृत्तिभिरिति बहुवचनम् ॥ ३७ ॥

( विवरणम् )

सूर्यास्तमयावसरे गगनस्यावस्थानं दर्शयति—

पूर्वेति । विवस्वता हृतातपजलं खं किञ्चिदिव शेषवत् सरः भाति । विवस्वता आदित्येन । जलमिवातपः आतपजलम् । स्वच्छत्वमत्र साधारणधर्मः । हृतं सङ्क्षिप्तम् आतपजलं यस्य तादृशं खम् आकाशं किञ्चिदिव किमपि । इवशब्दो वाक्यालङ्कारे । यथा 'आवर्जिता किञ्चिदिव स्तना-

१. 'ङ्कस्या' ङ. पाठः. २. 'स्यैवाप्य' क. ग. पाठः. ३. 'णार्थम' ङ. पाठः. ४. 'मदु' क. पाठः. ५. 'णं च' क. पाठः. ६. 'या अनु' घ. पाठः. ७. 'दाच्छं खं' ङ. पाठः. ८. 'षण ध' क. ग. पाठः.

भ्याम्' इत्यत्र 'मध्यं वयः किञ्चिदिव स्पृशन्ती'त्यत्र च । शेषोऽस्यास्तीति शेषवत् सरः । 'कासारः सरसी सर' इत्यमरः । भाति प्रतिभाति । देशान्तरं गन्तुकामेन विवस्वता सङ्क्षिप्तातपजलं व्योम किमप्यवशिष्टसलिलसरोरूपेण प्रतिभातीत्यर्थः । उत्प्रेक्षा चेयम् । ननु किमर्थमयमिवशब्दो वाक्यालङ्कारे[1] निक्षिप्तः । सर इव भातीत्युपमैवास्तु । मैवम् । तस्योपमावाचित्वे सर इवेत्युपमाननिकटे प्रयोगस्यैव मुख्यत्वात् । यदाह महिमा— 'चादीनां हि निपातानां समुच्चेतव्यादिसन्निधौ प्रयोगो नियत' इति । इह तु किञ्चिदित्यस्य शब्दस्य निकटे प्रयुक्त[2] । नापि किञ्चिदित्येतत् सरोविशेषणमपि । सरोविशेषणस्य शेषवदित्यस्य विशेषणत्वात् । तस्मादुपमापक्षेऽत्र क्रमभेद[3]दुष्ट एवायमिवशब्दः । न च गत्यन्तरे सम्भवति क्लिष्टार्थोपादानं युक्तम् । तस्मादयमिवशब्दो वाक्यालङ्कारार्थ एवेत्यलमनेन । उत्प्रेक्षान्तरविवक्षया खं विशिनष्टि— पूर्वभागतिमिरप्रवृत्तिभिः एकतः व्यक्तपङ्कम् इव जातम् इति । पूर्वभागे प्राचीदिग्भागे यास्तिमिराणां प्रवृत्तयस्ताभिः । अत्र तिमिरप्रवृत्तीनामवस्थाभेदाद् बहुत्वम् । एकत एकस्मिन् भागे । व्यक्तं पङ्कं यस्य तथाभूतमिव जातम् आपन्नम् । भास्वति पश्चिमदिगन्तावस्थिते सति प्राचीदिगन्तप्रसूतैस्तिमिरैरेकस्मिन् भागे व्यक्तपङ्कमिव प्रतीयमानमित्यर्थः ॥ ३७ ॥

**आवसद्भिरुटजाङ्गणं मृगै-**
**र्मूलसेकसरसैश्च वृक्षकैः ।**
**आश्रमाः प्रविशदग्निधेनवो**
**बिभ्रति श्रियमुदीरिताग्नयः ॥ ३८ ॥**

(प्रकाशिका)

**आवसद्भिरिति । आवसद्भिरधितिष्ठद्भिः । उटजाङ्गणं पर्णशाला-**

---

१. 'रपक्षे नि', २. 'प्रयुक्तः ।', ३. 'मतभे', ४. 'विधमि' छ. पाठः.
५. 'विशद्भि' मुद्रितकोशपाठः.

पुरोभागम् । मूलसेकः सायंकालिकः, तेन सरसैः स्निग्धच्छायैः । वृक्षकैर्बालवृक्षैः । उदीरिताग्नयः प्रणीताग्नयः । अत्र श्रीभरणेहेतवश्चत्वारः । तत्र शाब्दत्वेन द्वावुपादाय किमित्यार्थत्वेनान्यावुपात्तवानिति न ज्ञायते । प्रक्रमाभेदस्तु सुभगः ॥ ३८ ॥

( विवरणम् )

मुनिजनाश्रमाणामपीदानीं शोभाधिक्यं जातमित्याह —

आवसद्भिरिति । आश्रमाः उटजाङ्गणम् आवसद्भिः मृगैः मूलसेकसरसैः वृक्षकैः च श्रियं बिभ्रति । उटजानां पर्णशालानाम् अङ्गणं पुरोभागम् आवसद्भिः अधिवसद्भिः । क्रमेण पूर्यमाणत्वं वर्तमानप्रत्ययस्यार्थः । मृगैः एणैः । मूले यः सेकः सायङ्कालीनः, तेन सरसैः स्निग्धच्छायैः । वृक्षकैः अल्पार्थे कः । बालवृक्षैरित्यर्थः । चशब्दः समुच्चयार्थः । श्रियं शोभां बिभ्रति दधति । आश्रममृगा हि प्रभातसमयादारभ्य दिनान्तपर्यन्तं बहुलतृणेषु प्रदेशेषु चरन्तः सायमुटजाङ्गणेषु निवसन्ति । उटजाङ्गणमधितिष्ठद्भिर्नानावर्णैर्मृगैः सिक्तमूलतया स्निग्धच्छायैर्वृक्षैश्च मुनिजनाश्रमा नयनयोः प्रीतिं वितरन्तीत्यर्थः । इत्थं दृष्टानुसारिणीं शोभां हेतुद्वयेन प्रतिपाद्य अदृष्टानुसारिणीं शोभां हेतुद्वयेनाह — प्रविशदग्निधेनव इत्यादिना । प्रविशन्त्य आगच्छन्त्यः अग्निधेनवो होमधेनवो येषु ते तथा । अनेन होमवेलाप्रत्यासत्तिर्ध्वन्यते । अत्रापि पूर्ववदेव वर्तमानार्थः । तथा उदीरिताग्नयः उदीरिताः प्रणीताः गार्हपत्याहवनीयदक्षिणाग्नयो येषु ते तथा । अग्निहोमात् पूर्वकालीनमग्निप्रणयनं नाम वैदिकं कर्मानेनोच्यते । अनेन तत्तत्काले तत्तदनुष्ठानप्रतिपादनेन मुनीनां धन्यत्वं ध्वन्यते । अत्राश्रमाणां श्रीभरणे चत्वारो हेतवः । तत्राद्यं हेतुद्वयं दृष्टोपयोगि, द्वितीयं चादृष्टोपयोगीति विभागं दर्शयितुमाद्यहेतुद्वयं मृगैर्वृक्षैश्च शोभन्त इति शब्दत एव निर्दिष्टम् । अन्यत् पुनराश्रमविशेषणत्वेनार्थादिति न प्रक्रमभेदो दोषमाव-

१. 'गः ।' क. पाठः. २. 'णे हे' ङ. पाठः. ३. 'ङ्क', ४. 'ङ्क', ५. 'ङ्क', ६. 'ङ्क', ७. 'गं प्रद' छ. पाठः.

हृति। नहि वैदिकोऽयमग्निहोत्रहोमो मृगागमनवृक्षसेचनतुल्यकक्ष्यः । ये(न) मृगैर्वृक्षैर्धेनुभिरग्निभिश्च श्रियं बिभ्रतीत्येकवाक्यता स्यादित्यलमतिविस्तरेण ॥ ३८ ॥

बद्धकोशमपि तिष्ठति क्षणं
सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते
प्रीतिपूर्वमिव दातुमुत्तरम् ॥ ३९ ॥

(प्रकाशिका)

बद्धेति । बद्धकोशं जातसङ्कोचम् । वसतिः प्रतिश्रयः । प्रीतिपूर्वमुत्तरं दातुमिव क्षणं सावशेषविवरं तिष्ठतीत्यन्वयः । सन्तो हि प्रतिश्रयार्थिने प्रीतिपूर्वमुत्तरं दातुं किञ्चित् स्फुरितमुखास्तिष्ठन्ति । अन्तरमिति क्वचित् पाठः ॥ ३९ ॥

(विवरणम्)

पङ्कजानामवस्थां दर्शयति—

बद्धेति । कुशेशयं बद्धकोशमपि क्षणं सावशेषकुहरं तिष्ठति । कुशेशयं कमलम् । 'सहस्रपत्रं कमलं शतपत्रं कुशेशयमि'त्यमरः । बद्धः कोशो येन तद् बद्धकोशम् । जातसङ्कोचमित्यर्थः । अपिशब्दो विरोधवाची । नहि जातसङ्कोचस्य पद्मस्य सावशेषकुहरत्वमुपपद्यते । तथापि क्षणं क्षणकालं सावशेषम् अवशेषसहितं कुहरं बिलं यस्य तथाभूतं सत् तिष्ठति । 'कुहरं विवरं बिलमि'त्यमरः । सकलमपि पङ्कजकुलम् आसन्नसन्ध्य[1]त्वाज्जातसङ्कोचमपि रविकिरणानामत्यन्तविनाशाभावात् क्षणकालं किञ्चिदवशिष्टबिलं तिष्ठतीत्यर्थः । पङ्कजानां तथावस्थाने हेतुमुत्प्रेक्षते—वसतिं ग्रहीष्यते षट्पदाय प्रीतिपू-

---

१. 'न्ध्या' छ. पाठः.

वैम् उत्तरं दातुम् इव इति । वसतिमावासस्थानं ग्रहीष्यते ग्रहीतुमारब्धवते । लृटः शत्रादेशः । षट्पदाय भ्रमराय । प्रीतिपूर्वमिति[1] दानक्रियाविशेषणम् । प्रीतिः पूर्वं यथा भवति तथा । आदरपूर्वमित्यर्थः । उत्तरं प्रतिवचनं दातुमिव । सन्तो हि गृहागतेभ्यः पान्थेभ्यस्तदभ्यर्थनात् पूर्वमेव तद्विवक्षितस्य वाक्यस्य प्रतिवचनं दातुं किमपि विकसितमुखाम्बुजास्तिष्ठन्ति । अन्तरमिति पाठे प्रीतिपूर्वमवकाशं दातुमिवेत्यर्थः । विवृतकुहरेषु सरसिजेषु षट्पदप्रवेश उत्प्रेक्षामूलम् ॥ ३९ ॥

**दूरमग्न[2]परिमेयरश्मिना**
**वारुणी दिगरुणेन भानुना ।**
**भाति केसरवतेव मण्डिता**
**बन्धुजीवतिलकेन कन्यका ॥ ४० ॥**

(प्रकाशिका)

दूरेति । दूरावनतत्वात् सङ्ख्येयरश्मिना ॥ ४० ॥

( विवरणम् )

मार्ताण्डमण्डलमण्डितां पश्चिमामाशां दर्शयति[3] —

दूरेति । वारुणी दिक् दूरमग्नपरिमेयरश्मिना अरुणेन भानुना भाति । वारुणी वरुणसम्बन्धिनी दिक् पश्चिमाशा दूरमत्यन्तं मग्नेन अवनतेन अत एव परिमेयरश्मिना परिमेयाः सङ्ख्येया रश्मयो यस्य तेन । आसन्नास्तमयत्वेनात्यन्तावनतत्वात् सङ्ख्येयरश्मिजालेनेत्यर्थः । अरुणेन रक्तवर्णेन भानुना आदित्येन भाति शोभते । अत्रोत्प्रेक्षामाह — केसरवता बन्धुजीवतिलकेन मण्डिता कन्यका इव इति । केसराः किञ्जल्का अस्य सन्तीति केस-

---

१. 'ति क्रि' क. पाठः. २. 'ग्र' मुद्रितकोशपाठः. ३. 'माह — दू' छ. पाठः.

रवान्, तेन । बन्धुजीवतिलकेन । बन्धुजीव इति रक्तवर्णः कुसुमविशेषः । त-न्मयेन तिलकेन । मण्डितालङ्कृता कन्यका कुमारीव अत्र । रश्मिप्रतिवस्तुत्वेन केसराणामुपादानम् ॥ ४० ॥

**सामभिः सहचराः सहस्रशः**
**स्यन्दनाश्वहृदयङ्गमस्वनैः ।**
**भानुमग्निपरिकीर्णतेजसं**
**संस्तुवन्ति किरणोष्मपायिनः ॥ ४१ ॥**

(प्रकाशिका)

**सामभिरिति** । सहचरा बालखिल्यादयः । सहस्रशः सहस्रम् । अग्नौ परिकीर्णं निक्षिप्तं तेजो येन । किरणोष्मपायिन इति तपोविशेष उक्तः । अस्मिन्नर्थे सर्वत्र श्रुतिः किल मूलम् ॥ ४१ ॥

(विवरणम्)

सूर्यसहचराणां बालखिल्यादीनामस्तमयसमुचितां स्तुतिं दर्शयति —

सामभिरिति । सहस्रशः सहचराः अग्निपरिकीर्णतेजसं भानुं सामभिः संस्तुवन्ति । सहस्रशः सहस्रसङ्ख्यायुक्ता इत्यर्थः । सहैव चरन्तीति सहचराः बालखिल्यादयः । अग्नौ परिकीर्णं निक्षिप्तं तेजो येन तम् । आदित्यो रात्रा-वग्निं प्रविशतीति श्रुतिप्रसिद्धिः[1] । उक्तं च रघुवंशे—'दिनान्ते निहितं तेजः सवित्रेव हुताशनः' (स० ४. श्लो० १) इति । भानुम् आदित्यं सामभिः सामवेदैः सम्यक् स्तुवन्ति । स्तुतौ सम्यक्त्वं नामाक्षरस्वरमात्रा-दीनामन्यूनानधिकत्वम् । बालखिल्यादयो हि सन्ततमादित्यगमनानु-सारेणैव गच्छन्ति । ऋग्भिः प्रभाते संस्तुवन्ति, यजुर्भिर्मध्याह्ने, सामभिः सन्ध्यायामिति च श्रुतिप्रसिद्धम् । साम्नां स्वरप्रधानत्वाद् बालखिल्यादीनां

---

१. 'द्धम् ।' क. पाठः.

स्वरमाधुर्यं प्रदर्शयन् सामानि विशिनष्टि — स्यन्दनाश्वहृदयङ्गमस्वनैरिति। स्यन्दने सूर्यरथे ये अश्वाः वाजिनः तेषां हृदयङ्गमाः मनोहारिणः स्वना येषां तैः। स्यन्दनाश्वानां गानाकर्णनकुतूहलं तदिङ्गितैरवधार्यत इत्यर्थः। बालखिल्यानां तपोविशेषमहिमानमाह — किरणौष्ण्यपायिन इति। किरणानां रविकिरणानाम् औष्ण्यं पातुं शीलमेषामिति तथा। रविकिरणोष्मणैव शरीरवृत्तिं कुर्वन्त इत्यर्थः। अयमपि तपोविशेषः श्रुतिप्रसिद्धः॥ ४१॥

**सोऽयमानतशिरोधरैर्हयैः**
**कर्णचामरविघट्टितेक्षणैः।**
**अस्तमेति युगभुग्नकेसरैः**
**सन्निधाय दिवसं महोदधौ॥ ४२॥**

(प्रकाशिका)

**सोऽयमिति।** गगनावतरणवशाद्धयानामानतशिरोधरत्वम्। ततश्चान्ये विशेषणे। युगस्य स्वस्थानच्युतत्वात् केसराणां कुटिलत्वम्। सन्निधायेत्याद्युत्प्रेक्षागर्भमभिधानम्॥ ४२॥

(विवरणम्)

रवेरस्तमयप्रकारमेव वर्णयति —

**सोऽयमिति।** सः अयं दिवसं महोदधौ सन्निधाय आनतशिरोधरैः हयैः अस्तम् एति। सः यो बालखिल्यादिभिः स्तुतः स इत्यर्थः। अयमिति सहस्तनिर्देशं वचनम्। आनतैः अधःप्रदेशगमनवशात् सन्नतैः शिरोधरा ग्रीवा येषां तादृशैः हयैः अश्वैः अस्तप्राप्तिसाधनभूतैः दिवसम् अहः महोदधौ समुद्रे सन्निधाय स्थापयित्वा अस्तमेति अदर्शनं प्राप्नोति। अस्तमित्यदर्शनेऽव्ययम्। 'अस्तमदर्शने' इति सिंहः। अस्ताचलं वा। बालखिल्यादिभिः स्तूयमानो रविरयमुन्नताद् गगनप्रदेशादधःप्रदेशावतरणवशा-

१. 'णोष्मपा' छ. पाठः. २. 'य' क. घ. पाठः. ३. ४. 'ताः', ५. 'रा' क. पाठः. ६. 'व्ययमदर्शने वर्तते।', ७. 'त्यमरः।', ८. 'स्तुतो र' छ. पाठः.

दवनतशिरोधरैर्हयैरस्तं यातीत्यर्थः । दिवसं महोदधौ सन्निधायेत्युत्प्रेक्षागर्भमभिधानम् । महोदधिमात्रे रविकिरणदर्शनमुत्प्रेक्षाहेतुः । दिवसं दृश्यमानमन्दातपे समुद्रे निक्षिप्येवेत्यर्थः । अथाश्वानामानतशिरोधरत्वहेतुकं विशेषणद्वयमाह — कर्णचामरविघट्टितेक्षणैः । कर्णयोरलङ्कारार्थं बद्धे ये चामरे ताभ्यां विघट्टिते अभिहते ईक्षणे विलोचने येषां तैः । आनतशिरोधरत्वेन हेतुना कर्णावसक्तचामराभिहतनेत्रैरित्यर्थः । तथा युगभुग्नकेसरैः युगेन हेतुना भुग्नाः कुटिलाः केसराः स्कन्धरोमाणि येषां तैः । स्कन्धावस्थितस्य युगस्य दूरावतरणवशेन स्वस्थानात् च्युतत्वात् तत्सन्निवेशविशेषेण कुटिलस्कन्धरोमभिरित्यर्थः । अत्राश्वानामवतरणस्वभावोक्त्या स्वभावोक्तिः ॥ ४२ ॥

> **खं प्रसुप्तमिव संस्थिते रवौ**
> **तेजसो महत ईदृशी गतिः ।**
> **तत् प्रकाशयति यावदुत्थितं**
> **मीलनाय खलु तावतश्च्युतम् ॥ ४३ ॥**

(प्रकाशिका)

खमिति । प्रसुप्तमिव. तमसा संवृतत्वात् । संस्थितेऽस्तमिते । ईदृशी वक्ष्यमाणप्रकारा । गतिः स्वभावः । तद् महत् तेजः । यावद् यत्प्रमाणम् । तावतस्तत्प्रमाणस्य । च्युतमस्तमितम् । दक्षिणावर्तस्तु — 'यद्यप्ययमर्थस्तेजोमात्रसुलभस्तथापि प्रकृतं रविमपेक्ष्य महत इति विशेषणमि'त्याह । तन्न । यतोऽर्थान्तरे सामान्यरूपेऽन्वितं यद् विशेषणं तत् प्रकृतं विशेषमेव विशेषयतीति न युक्तम् । किञ्च महत एव तेजसोऽपाये तावतो मीलनं भवति । अल्पस्य त्वपाये तादृशान्येनापि प्रकाशः संभवति ॥ ४३ ॥

---

१. 'भवन', २. 'नच्यु' छ. पाठः. ३. 'द्र' मुद्रितकोशपाठः. ४. 'दिति म', ५. 'शनं सं' ङ. पाठः.

(विवरणम्)

आदित्यास्तमये जातं विशेषमाह—

खमिति । रवौ संस्थिते खं प्रसुप्तमिव । रवौ आदित्ये । संस्थिते अस्तमित इत्यर्थः । खम् आकाशं प्रसुप्तं प्रकर्षेण सुप्तं स्वापमुपगतमिव । भवतीति शेषः । अस्तमिते रवौ व्योमप्रदेशस्तमसा संवृतत्वान्निष्प्रभो भवतीत्यर्थः । उक्तमर्थमर्थान्तरन्यासेन समर्थयते—महतः तेजसः गतिः ईदृशी इति । महतः अत्युत्कृष्टस्य तेजसः गतिः स्वभावः ईदृशी वक्ष्यमाणप्रकारा । वक्ष्यमाणप्रकारविशिष्टत्वं महतस्तेजसो नियतमित्यर्थः । तमेव प्रकारमाह—तद् उत्थितं यावत् प्रकाशयति च्युतं तावतः मीलनाय खलु इति । तद् महत् तेजः उत्थितमुदितं सद् यावद् यत्प्रमाणं प्रकाशयति अभिद्योतयति च्युतं अस्तमितं सत् तावतः तत्प्रमाणस्य मीलनाय अप्रकाशनाय । पर्याप्तं भवतीति शेषः । खलुशब्दः प्रसिद्धौ । महत्तरं तेजः समुत्थितं सद् याव(न्तम ? द्)र्थजातं प्रकाशयति, अस्तमितं तु तत् तावतोऽर्थजातस्य मीलनाय पर्याप्तं भवतीति भावः ॥ ४३ ॥

सन्ध्ययाप्यनुपदं रवेः पदं
धर्म्यमस्तशिखरे समर्पितम् ।
प्राक् तथेयमुदये पुरस्कृता
नानुयास्यति कथं तमापदि ॥ ४४ ॥

(प्रकाशिका)

**सन्ध्ययेति । अनुपदमन्वगित्यर्थः । धर्म्यं धर्मोपेतम् । एतच्च विशेषणं नायिकात्वारोपपिशुनम् । अस्तो गिरिविशेषः । रवेरनुपदं सन्ध्ययाप्यस्तशिखरे पदं समर्पितमित्यन्वयः । प्रागित्यादि श्लेषगर्भो हेतूपन्यासः । उदयः संपदपि । पुरस्कारः पूजापि । अत्र समासोक्ति-**

---

१. 'वेर्वपुर्वन्दाम', २. 'येन पूवभु' मुद्रितकोशपाठः.

रलङ्कारः । शृङ्गाराभासव्यवहारस्त्वत्र भोजदृशा । अस्माभिस्त्वनौचित्यप्रवृत्तानां रसादीनामाभासत्वमिष्यते ॥ ४४ ॥

(विवरणम्)

सन्ध्याकालोऽपि सम्प्राप्त इत्याह —

सन्ध्ययेति । सन्ध्यया अपि रवेः अनुपदम् अस्तशिखरे पदं समर्पितम् । सन्ध्ययापीत्यपिशब्दस्य न केवलं रविणेत्यर्थः । रवेः आदित्यस्य अनुपदं पश्चादित्यर्थः । अस्तशिखरे अस्तगिरेः शिखरे पदं पादः समर्पितं न्यस्तम् । यदा रविरस्तमयोन्मुखस्तदुचितं प्रदेशमधिवसति, तदा सन्ध्ययापि तस्मिन्नेव प्रदेशे पादविन्यासः कृत इत्यर्थः । युक्तं चैतादित्याह — धर्म्यमिति । धर्मादनपेतं यथा भवति तथेत्यर्थः । एतच्च क्रियाविशेषणम् । इदं नायिकात्वारोपसूचकम् । निधनेऽपि पतिमार्गानुसारित्वं हि नायिकाधर्मः । धर्म्यत्वमेव श्लेषगर्भेण हेतुनोपपादयति — प्राग् उदये तथा पुरस्कृता इयम् आपदि तं कथं न अनुयास्यति । प्रागितः पूर्वं सर्वदापि । आदित्यपक्षे स्वोदयसमये, नायकपक्षेऽभ्युदये सम्पदीत्यर्थः । तथा लोकोत्तरेण प्रकारेणेत्यर्थः । पुरस्कृता अग्रतः कृता पूजिता च । इयं सन्ध्या नायिका च । आपदि अस्तमये विपदि च । तम् आदित्यं नायकं च । कथं नानुयास्यति, अनुयास्यत्येवेत्यर्थः । आदित्येन स्वोदयसमये सन्ध्या पुरस्क्रियते, आदित्योदयपूर्वभावित्वात् पूर्वसन्ध्यायाः । 'विचेयतारकः कालः सन्ध्या सूर्योदयावधिः' इति स्मृतेः । अर्धास्तमयादारभ्य नक्षत्रदर्शनावधिका पुनरपरसन्ध्या । 'यावन्नक्षत्रदर्शनमि'ति स्मृतेः । अत्र समासोक्तिरलङ्कारः ॥ ४४ ॥

रक्तपीतकपिशाः पयोमुचां
कोटयः कुटिलकेशि! भान्त्यमूः ।
द्रक्ष्यसि त्वमिति वेलयानया[1]
वर्तिकाभिरिव साधु वर्तिताः[2] ॥ ४५ ॥

---

१. 'सन्ध्यया', २. 'मण्डिताः' मुद्रितकोशपाठः.

(प्रकाशिका)

रक्तेति । वर्तिकाभिस्तूलिकाभिः । वर्तिता विन्यस्तरागविशेषाः ॥ ४५ ॥

(विवरणम्)

सन्ध्यारागमेव वर्णयति —

रक्तेति । कुटिलकेशि ! पयोमुचां कोटयः अमूः रक्तपीतकपिशाः भान्ति । कुटिला वक्राः केशा यस्यास्तस्याः सम्बुद्धिः । 'स्वाङ्गाद्—'(४. १. ५४) इत्यादिना ङीष् । पयोमुचां मेघानां कोटयः पङ्क्तयः । अमूः इति सहस्तनिर्देशं वचनम् । रक्ता रक्ताम्बुजतुल्यवर्णाः । 'रक्तः शोणः कोकनदच्छविरि'त्यमरः । पीता हरिद्रातुल्यवर्णाः । 'पीतो गौरो हरिद्राभ' इत्यमरः । कपिशाः कृष्णलोहितवर्णाः । 'श्यावः स्यात् कपिशो धूम्रधूमलौ कृष्णलोहित' इत्यमरः । भान्ति शोभन्ते । जलधरा एते नानावर्णा भासन्ते । तान् पश्येत्यर्थः । नानावर्णतयावस्थाने हेतुमुत्प्रेक्षते — त्वं द्रक्ष्यसि इति अनया वेलया वर्तिकाभिः साधु वर्तिताः इव इति । त्वं पश्यसीति हेतोः अनया वेलया सन्ध्यया वर्तिकाभिः तूलिकाभिः साधु सम्यग् यथा भवति तथा वर्तिता विन्यस्तरागविशेषा इव । उत्कृष्टस्त्रीनिकटगमने हि स्त्रीभिरलङ्कृताभिर्भवितव्यमिति हेतोरिवेत्यर्थः । अनया वेलयेति सन्ध्यायां प्रसाधिकात्वारोपपूर्वको व्यवहारः ॥ ४५ ॥

**सिंहकेसरसटासु भूभृतां**
**पल्लवप्रसविषु द्रुमेषु च ।**
**पश्य धातुशिखरेषु भानुना**
**संविभक्तमिव सान्ध्यमातपम् ॥ ४६ ॥**

(प्रकाशिका)

सिंहेति । केसराणि श्मश्रुरोमाणि, सटाः स्कन्धरोमाणीति

दक्षिणावर्तः । केशवस्तु तौ पर्यायावाह । तत्पक्ष एव हि युगभुग्न[1]-केसरत्वं सुघटम् । तदत्र सटा समूहः । भूभृतामिति सन्ध्यातपसम्बन्ध-हेतुमुन्नतदेशस्थितिं द्योतयन् सर्वशेषः ॥ ४६ ॥

(विवरणम्)

सन्ध्यातपो विगतप्राय इत्याह —

सिंहेति । सान्ध्यम् आतपं पश्य । सान्ध्यं सन्ध्याकालभवम् आतपं रविकिरणं पश्य । सन्ध्यातपमुत्प्रेक्षते — भानुना भूभृतां सिंहकेसरसटासु पल्लवप्रसविषु द्रुमेषु धातुशिखरेषु च संविभक्तम् इव इति । सन्ध्यातपानाम-प्युन्नतप्रदेशेष्वेवावस्थानोपपत्तेरत्र भूभृतामिति शब्दस्त्रिष्वपि स्थानेषु योजनीयः । भानुना आदित्येन । भूभृतां पर्वतानाम् । सम्बन्धषष्ठी चेयम् । सिंहानां केसर सटासु स्कन्धरोमावलीषु । पर्वतोपरि वर्तमानानां सिंहानां रक्तवर्णेषु स्कन्ध-रोमसमूहेष्वित्यर्थः । पल्लवप्रसविषु किसलयपुष्पवत्सु द्रुमेषु वृक्षेषु । पर्वत-सम्बन्धिनां वृक्षाणां रक्तेषु पल्लवपुष्पेषु चेत्यर्थः । धातुप्रचुरेषु शिखरेषु । गै-रिकपूरितेषु शृङ्गेष्वित्यर्थः । संविभक्तं सम्यग् विभक्तम् । विभज्य दत्तमिवे-त्यर्थः । सिंहकेसरादीनां रागाधिक्यं सन्ध्यातपानां प्रतिक्षणपरिक्षीयमाणत्वं चोत्प्रेक्षामूलम् । एकेन हि बहुभ्यो दीयमानं वस्तु परिक्षीयमाणं भवतीति भावः ॥ ४६ ॥

**[2]पार्ष्णिमुक्तवसुधास्तपस्विनः**
**पावनाम्बुर[3]चिताञ्जलिक्रियाः ।**
**ब्रह्म गूढमभिसन्ध्यमादृताः**
**शुद्धये विधिविदो गृणन्त्यमी ॥ ४७ ॥**

(प्रकाशिका)

पार्ष्णीति । पादाग्रस्थिता इत्यर्थः । जलाद्यञ्जलिदाने तथा

---

१. 'हि भु' ङ. पाठः. २. 'अद्रिराजतनये ! तप', ३. 'विहिता' मुद्रितकोशपाठः.

स्थितिः प्रसिद्धा, यथा 'पादाग्रस्थितया' (रत्नावली० अङ्क० १. श्लो० १) इत्यादौ । पार्ष्णिमुक्तवसुधत्वं प्राणायामवशादिति केचित् । पावनाम्बुरचिताञ्जलिक्रिया इति पाठः । ब्रह्म वेदम् । गूढमुपांशु । अभिसन्ध्यं सन्ध्यामुद्दिश्य । शुद्धये नित्यानुष्ठानं ह्यात्मशुद्धिफलम् । इदं च प्रस्तावकं वक्ष्यमाणस्य देवकर्तृकस्य सन्ध्यावन्दनस्य ॥ ४७ ॥

( विवरणम् )

द्विजानां सन्ध्यावन्दनमप्यारब्धमित्याह —

पार्ष्णीति । अमी तपस्विनः ब्रह्म अभिसन्ध्यं गूढं गृणन्ति । तपोऽस्त्येषामिति तपस्विनः । 'अस्मायामेधास्रजो विनिः' (५. २. १२१) । इदं च विहितकालानतिक्रमे हेतुः । ब्रह्म वेदम् । सावित्रीमृचमित्यर्थः । अभिसन्ध्यं सन्ध्यामुद्दिश्य । गूढमिति क्रियाविशेषणम् । उपांशु यथा भवति तथा । गृणन्ति उच्चरन्ति । एते तपस्विनः सावित्रीमृचं सन्ध्यामुद्दिश्योपांशूच्चरन्तीत्यर्थः । सन्ध्योपासनस्य फलमाह — शुद्धय इति । आत्मशुद्धय इत्यर्थः । नित्यानुष्ठानं ह्यन्तःकरणशुद्धिफलम् । सन्ध्योपासनस्य पूर्वकालीनं जलाञ्जलिदानं सप्रकारमाह — पार्ष्णिमुक्तवसुधाः पावनाम्बुरचिताञ्जलिक्रिया इति । पार्ष्णिभ्यां गुल्फयोरधोभागाभ्यां परित्यक्ता वसुधा भूमिर्यैस्ते तथा । पार्ष्णिभ्यां वसुधां मुक्त्वा पादाग्रमात्रावस्थिता भूत्वेत्यर्थः । पावनैः विशुद्धैः अम्बुभिः रचिता कृता अञ्जलिक्रिया जलाञ्जलिदानरूपा क्रिया यैस्तथा । जलाद्यञ्जलिदाने पादाग्रमात्रेणावस्थितिः प्रसिद्धा, यथा 'पादाग्रस्थितये'त्यादौ । तपस्विनां विहितानुष्ठाने हेतुमाह — आदृता इति । कृतादराः । कृतबहुमाना इत्यर्थः । बहुमाने हेतुमाह — विधिविद इति । विधिमर्थवादाद्युपबृंहितं विधिवाक्यं विदन्तीति तथा । वेदार्थवेदिन इत्यर्थः । अयं च श्लोको वक्ष्यमाणस्य देवकर्तृकस्य सन्ध्यावन्दनस्य प्रस्तावकत्वेनोक्तः ॥ ४७ ॥

---

१. 'पठन्ति' क. घ. पाठः.

तन्मुहूर्तमनुमन्तुमर्हसि
प्रस्तुताय नियमाय मामपि ।
त्वां विनोदनिपुणः सखीजनो
वल्गुवादिनि! विनोदयिष्यति ॥ ४८ ॥

(प्रकाशिका)

तदेव प्रस्तौति —

**तदिति** । **प्रस्तुताय** तपस्विभिरारब्धाय । **नियमाय** नियमं कर्तुम् । **मामपि नियमायानुमन्तुमर्हसि** मयापि नियमो यथानुष्ठीयते तथानुमन्तुमर्हसीत्यर्थः । **विनोदयिष्यति** विनोदं कारयिष्यति । विनोदश्च सुखेन कालयापनम् ॥ ४८ ॥

(विवरणम्)

देवकर्तृकं सन्ध्यावन्दनमेव प्रस्तौति —

तदिति । तत् त्वं प्रस्तुताय नियमाय माम् अपि मुहूर्तम् अनुमन्तुम् अर्हसि । तद्, यस्मादेतैः सन्ध्यावन्दनमारब्धं तस्मादित्यर्थः । अनेन कालातिपातो मा भूदिति ध्वन्यते । प्रस्तुताय तपस्विभिरारब्धाय नियमाय नियमं कर्तुम् । मामपि, यथा तपस्विभिरयं नियमोऽनुष्ठीयते तथा मयापि कर्तव्योऽयं विधिरित्यर्थः । मुहूर्तं क्षणकालम् । यथैते मुनयश्चिरकालं सन्ध्यामुपासते, अहं तु त्वद्विरहासहिष्णुतया न तथेत्यर्थः । अनुमन्तुम् अनुज्ञातुम् अर्हसि योग्या भवसि । ननु त्वद्वियोगविधुराया मम तदानीं का गतिः, अत आह—व[१]ल्गुवादिनि! (विनोदनिपुणः) सखीजनः त्वां विनोदयिष्यतीति । वल्गु सुन्दरं यथा भवति तथा वदि[२]तुं शीलमस्या इति तथा । अनेन परस्परसंलापकौशलं द्योत्यते । अत एव विनोदनिपुण इति सखीजनविशेषणम् । विनोदे सु[३]खेन कालयापने विदग्धः सखीजनः सखीसमाजः विनोदयिष्यति विनोदं कारयिष्यति । सखीसमाजः परस्परसंलापादिभिस्तव सुखेन कालयापनं कारयिष्यत्येव मा खिद इति भावः ॥ ४८ ॥

---

१. 'ति । व', २. 'वा', ३. 'देन सु' छ. पाठः.

निर्विभुज्य दशनच्छदं ततो
वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगा-
माललाप विजयामहेतुकम् ॥ ४९ ॥

(प्रकाशिका)

**निर्विभुज्येति** । निर्विभुज्य कुटिलीकृत्य । दन्तैरधरमवष्टभ्येत्यर्थः । एतच्चासूयाव्यञ्जकम् । अवधीरणानादरः । समीपगां नित्यासन्नाम् । विजयेति देव्याः सखी । अहेतुकं प्रस्तावशून्यम् । अयं च बिब्बोको नाम भावः । "गर्वाभिमानादिष्टेऽपि बिब्बोकोऽनादरक्रिये"ति । अनादरकार्यमनिमित्तं सम्भाषणं सख्या ॥ ४९ ॥

(विवरणम्)

इत्थमुक्त्वा देवे सन्ध्योपासनार्थं गते देव्याः प्रवृत्तिमाह —

**निर्विभुज्येति** । ततः शैलराजतनया दशनच्छदं निर्विभुज्य समीपगां विजयाम् अहेतुकम् आललाप । ततः भगवतः सन्ध्यावन्दनप्रयाणानन्तरं शैलराजतनया पार्वती दशनच्छदम् अधरं निर्विभुज्य कुटिलीकृत्य । दन्तैरधरमवष्टभ्येत्यर्थः । अनेनासूया व्यज्यते । समीपगां नित्यासन्नाम् । विजयां विजयाख्यां[2] सखीम् । अहेतुकमिति क्रियाविशेषणम् । हेतुशून्यं यथा भवति तथा आललाप उक्तवती । अत्राहेतुकमित्यनेनासूयायां हेत्वभाव[3] उक्तः । प्रणयमात्रहेतुकत्वं[4] च द्योत्यते । देवे सन्ध्यां प्रणमति सति सन्ध्यायाः स्त्रीत्वादन्यवधूप्रणाममसहमाना देवी सासूयं प्रियवयस्यामुक्तवतीत्यर्थः । अधरदंशनेन सूचितामसूयां वचनेऽपि सूचयामासेत्याह — वाचि भर्तुः अवधीरणापरा इति । वाचि वचने न मनसीत्यर्थः । भर्तुः प्रियतमस्य । अनेन कोपस्य प्रणयमात्रहेतुत्वमुक्तम् । अवधीरणायामनादरे परा तत्परा । अना-

---

१. 'त' ङ. पाठः. २. 'ख्यां वयस्याम्' छ. पाठः. ३. 'तु', ४. 'कं च', 'सापीत्य' क. पाठः

दरस्य कार्यं प्रियसखीं प्रत्यनिमित्तसम्भाषणम् । भर्तर्यनादरद्योतकं वचनं प्रियसखीं प्रति व्याजहारेत्यर्थः । अनेन श्लोकेन बिब्बोको नाम भावः प्रतिपादितः । यथोक्तं — "गर्वाभिमानादिष्टेऽपि बिब्बोकोऽनादरक्रिया" इति ॥ ४९ ॥

ईश्वरोऽपि दिवसात्ययोचितं
मन्त्रपूर्वमनुतास्थिवान् विधिम् ।
पार्वतीमवनतामसूयया
प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥

(प्रकाशिका)

ईश्वर इति । मन्त्रपूर्वमित्यनेन किञ्चित्कालविलम्बं द्योतयति । अवनतामवाङ्मुखीम् । असूयया सन्ध्यावन्दनजनितया । स्मितं तु तवासूयेयमस्थान इत्युपालम्भपरम् । अनेनाचरितेन "रागी वीतरागो वा नाचारं लङ्घयेदि"ति लोकसंशिक्षणमाचरति देवः ॥ ५० ॥

(विवरणम्)

अथ रसानुसारी महाकविरालपनप्रकाराणां साक्षाद् रसानुगुणत्वाभावात् तानुपेक्ष्य देवस्यानुसरणप्रकारमेव वक्तुमुपक्रमते —

ईश्वर इति । ईश्वरः अपि दिवसात्ययोचितं विधिं मन्त्रपूर्वम् अनुतस्थिवान् असूयया अवनतां पार्वतीं प्रत्युपेत्य पुनः सस्मितम् आह । ईश्वरोऽपीति त्रैलोक्याधिपतित्वात् तदुपास्याया देवताया अभावेऽपीत्यर्थः । तेन च रागिभिरपि मोहाद् विहितकर्मपरित्यागो न कर्तव्य इति लोकशिक्षार्थत्वं सन्ध्यानुष्ठानस्य द्योत्यते । दिवसात्यये सध्यायाम् उचितं योग्यं विधिं विधानम् । मन्त्रपूर्वमित्यनुष्ठानक्रियाविशेषणम् । मन्त्रपूर्वं यथा भवति तथा

१. 'वनाम' मुद्रितकोशपाठः. २. 'क' ङ. पाठः. ३. 'मेत्या', ४. 'सस्यात्य' छ. पाठः.

अनुतस्थिवान् अनुष्ठितवान् सन् । अनेन मन्त्रोच्चारणमात्रेणैव कालविलम्ब इति ध्वन्यते, तेन च विरहासहत्वम् । असूयया, सन्ध्यावन्दनसम्भूतयेति शेषः। अवनताम् अवाङ्मुखीं पार्वतीं प्रत्युपेत्य प्रत्यागम्य। पुनः पुनरपीत्यर्थः। पूर्वमपि भगवद्वचनस्य प्रकृतत्वात् । सस्मितं स्मितसहितं यथा भवति तथा आह उक्तवान् । अस्थाने तवेयमसूयेति स्मितेन द्योत्यते । तच्चोपालम्भे पर्यवस्यति । आहेति तिङ्प्रतिरूपकं भूतार्थेऽव्ययमित्युक्तमसकृत् । देवः सन्ध्याकालोचितं कर्म त्वरितं विधाय सन्ध्यावन्दनजनितयासूययानतवदनां देवीं प्रत्यागम्य पुनरपि सस्मितमुवाचेत्यर्थः ॥ ५० ॥

**मुञ्च कोपमनिमित्तकोपने!**
**सन्ध्यया प्रणमितोऽस्मि नान्यथा[1] ।**
**किं न वेत्सि सहधर्मचारिणं[2]**
**चक्रवाकसमवृत्तिमात्मनः ॥ ५१ ॥**

(प्रकाशिका)

मुञ्चेति । अनिमित्तकोपन इति स्मितसूचित उपालम्भः । नान्यथा न कामाभिसन्धिना, किन्तु धर्माभिसन्धिनेत्यर्थः । कथमेवं जानीयामित्याह— किं न वेत्सीति । तव सहधर्मचारिणं[3] चक्रवाकसमवृत्तिं जानास्येवेत्यर्थः । चक्रवाका ह्येकजानयः प्रसिद्धाः ॥ ५१ ॥

(विवरणम्)

वचनप्रकारमेवाह —

मुञ्चेति । अनिमित्तकोपने! त्वं कोपं मुञ्च । अनिमित्तं निमित्तरहितं यथा भवति तथा कोपं कर्तुं शीलं अस्या इति तथा । अनया सम्बुद्ध्या स्मितसूचितमुपालम्भमेव वाचि निवेशितवानित्यवसेयम् । त्वं कोपं मुञ्च परित्यज । निमित्तराहित्यात् परित्याज्य एवायं कोप इति भावः । कथं निमित्ताभावः, अत आह — अहं सन्ध्यया प्रणमितः अस्मि इति । सन्ध्यया प्रण-

१. 'स्य' छ. पाठः. २. 'या' मुद्रितकोशपाठः. ३. 'रं च' क. पाठः.

मने प्रयोजककर्त्र्या प्रणमितः प्रकर्षेण नमितः नमनं कारितोऽस्मि । 'णमु प्रह्वत्वे' इति धातोर्णिचि निष्ठा । मान्तत्वाद् वृद्ध्यभावः । सन्ध्याप्रणमनमेव मया कृतम् । कस्तव कोपावकाश इति भावः । ननु सन्ध्यया प्रणमितोऽसीति मया ज्ञातमेव । अत एव मे कोप इत्यत्राह — अन्यथा नेति । यथा त्वया कामापेक्षयेति कल्पितं, तथा न, अपि तु धर्मापेक्षयैवेत्यर्थः । ननु तत्र किं प्रमाणमित्यत्राह — त्वम् आत्मनः सहधर्मचारिणं चक्रवाकसमवृत्तिं न वेत्सि किम् इति । आत्मनः तवेत्यर्थः । सहधर्मचारिणं सहचरं चक्रवाकेण समा तुल्या वृत्तिर्यस्य तम् । न वेत्सि किं, जानास्येवेत्यर्थः । त्वं सर्वदा त्वया सहैव वर्तमानं मां चक्रवाकतुल्यधर्माणं किं न जानासि । जानास्येवेत्यर्थः । चक्रवाको ह्येकजा(यः ? निः) जायावियोगकातरश्चेति प्रसिद्धम् । उक्तं च रघुवंशे — "रथाङ्गनाम्नोरिव भाववन्धनम्" (स० ३. श्लो० २४) इति ॥ ५१ ॥

> निर्मितेषु पितृषु स्वयम्भुवा
> या तनुः सुतनु ! पूर्वमुज्झिता ।
> सेयमस्तमुदयं च सेवते
> तेन मानिनि ! ममात्र गौरवम् ॥ ५२ ॥

(प्रकाशिका)

अभिसंहिते धर्मे गौरवमाह —

निर्मितेष्विति । अत्र भविष्यत्पुराणवचनं —

> "पितामहः पितॄन् सृष्ट्वा मूर्तिं तामुत्ससर्ज ह ।
> सा प्रातः सायमागत्य सन्ध्यारूपेण पूज्यते ॥
> एनां सन्ध्यां यतात्मानो ये तु दीर्घमुपासते ।
> दीर्घायुषो भविष्यन्ति नीरुजाः पाण्डुनन्दन ! ॥"

इति ॥ ५२ ॥

(विवरणम्)

जगद्गुरोरप्यात्मनः सन्ध्यायां गौरवे हेतुमाह—

निर्मितेष्विति । (मानिनि![१] सुतनु!) स्वयम्भुवा पितृषु निर्मितेषु या तनुः पूर्वम् उज्झिता सा इयम् अस्तम् उदयं च सेवते । स्वयम्भुवा ब्रह्मणा पितृषु अग्निष्वात्तादिषु निर्मितेषु सत्सु या तनुः शरीरं पूर्वम्, इदानीं विद्यमानस्य शरीरस्य ग्रहणात् पूर्वमित्यर्थः । उज्झिता त्यक्ता सेयं तनुः अस्तम् अस्तमयपर्वतम् उदयम् उदयपर्वतं च सेवते । ब्रह्मा पितृसर्गानन्तरं तत्सृष्टिकर्तृभूतं शरीरं परित्यज्य शरीरान्तरं गृहीतवान् । परित्यक्तं तच्छरीरं तु सन्ध्यारूपेण परिणतम् । तदेव सर्वैरुपास्यत इत्यर्थः । भविष्यत्पुराणप्रसिद्धश्चायमर्थः—

"प्रजापतिः पितॄन् सृष्ट्वा मूर्तिं तामुत्ससर्ज ह ।
सा प्रातः सायमागत्य सन्ध्यारूपेण पूज्यते ॥
एनां सन्ध्यां यतात्मानो ये तु दीर्घमुपासते ।
दीर्घायुषो भविष्यन्ति नीरुजाः पाण्डुनन्दन! ॥"

इति । नन्वस्तु तथा, प्रस्तुते किमायातमित्यत्राह—मानिनि! तेन मम अत्र गौरवम् इति । हे मानिनि! अभिमानवति! । परित्याज्य एवायमभिमान इति भावः । तेन, यस्मात् कारणात् सन्ध्यायाः पितामहशरीरत्वं, तस्मात् कारणादित्यर्थः । अत्र सन्ध्यायां गौरवं बहुमानः । पितामहस्य भगवतापि पूज्यत्वं प्रागेवोक्तं—"प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय" (स० ७. श्लो० ८६) इति ॥ ५२ ॥

**तामिमां तिमिरवृत्ति[२]पीडितां**
**[३]भूमिलग्नमिव सम्प्रति स्थिताम् ।**

---

१. 'वर्तते' क. पाठः. २. 'द्धि', ३. 'शैलराजतनयेऽधुना स्थि' मुद्रितपुस्तकपाठः.

एकतस्तटतमालमालिनीं
पश्य धातुरसनिम्नगामिव ॥ ५३ ॥

(प्रकाशिका)

तामिति। तां, यैवं विश्वमहनीया। तिमिरस्य वृत्तिः प्रसरः, तेन पीडितां प्रतीच्यामेव संकोचिताम्। ततश्च नदीप्रवाहवदायतावस्थानाम्। भूमिलम्बं 'लबि अवस्रंसन' इति धातोः सप्तम्यन्त उपपदे 'समासत्तौ' (३. ४. ५०) इति णमुल्। भूमौ लम्बित्वेत्यर्थः ॥ ५३ ॥

(विवरणम्)

इत्थं परमार्थवचनेन प्रशान्तकोपां देवीं प्रति पुनरपि प्रस्तुतमेवार्थमधिकृत्याह—

तामिति। त्वं तिमिरवृत्तिपीडितां ताम् इमां पश्य। तिमिरस्य तमसो वृत्त्या प्रसरेण पीडितां निरस्तप्रसराम्। वर्धमानेन तमसा प्रतीच्यामेव दिशि सङ्कोचं प्रापितामित्यर्थः। दक्षिणोत्तरादिगन्तव्यापिनीं परिहृतपूर्वदिगन्तां चेति भावः। अनेन नदीप्रवाहवदायतावस्थानं सूचितम्। तां, या पितामहपरिणामभूतत्वाद् विश्वलोकमहनीया तामित्यर्थः। इमामिति सहस्तनिर्देशं वचनम्। दृश्यमानां सन्ध्यामित्यर्थः। पश्य अवलोकय। अत्यन्तरक्तवर्णा पूर्वभागे तिमिरपरिपूर्णा सन्ध्या सम्प्रति नयनरमणीया वर्तते। सावधानमवलोकयेत्यर्थः। सन्ध्यायाः कालविशेषवशादवस्थाविशेषप्राप्तिमुत्प्रेक्षामुखेन दर्शयति—सम्प्रति भूमिलम्बमिव स्थितामिति। सम्प्रति इदानीम्। कालविशेषेण सन्ध्यारागस्याधोभागमात्रवर्तित्वादित्यर्थः। भूमिलम्बं 'लबि अवस्रंसन' इत्यस्माद्धातोः सप्तम्यन्तोपपदे 'समासत्तौ' इति णमुलन्तोऽयं शब्दः। भूमौ लम्बित्वेत्यर्थः। स्थितामवस्थिताम्। सम्प्रति सन्ध्यारागस्याधोभागमात्रवर्तित्वाद् भूमौ निरन्तरावस्थिततया प्रतीयमानामित्यर्थः। अत एवोत्प्रेक्षते—एकतः तटतमालमालिनीं धातुरसनिम्नगाम् इव इति।

१. 'त्यर्थः।', २. 'मत्वा' छ. पाठः.

एकतः एकस्मिन् भागे । पूर्वभाग इति भावः । तटतमालमालिनीम् तटं तीर-प्रदेशः । तमालाः कृष्णवर्णा वृक्षविशेषाः । माला समूहः । तटे वर्तमानानां तमालानां मालास्त्यस्यामिति तथा । 'व्रीह्यादिभ्यश्च' (५. २. ११३) इतीनिः । 'धातुर्मनश्शिलाद्यद्रेरि'ति सिंहः । रसो जलम् । निम्नगा नदी । धातुप्रचुरो रसो धातुरसः । धातुरसमयी निम्नगा धातुरसनिम्नगा तामिव । दक्षिणोत्तरप्रवाहवतीं पूर्वभागे तमालपरिवृतां धातुप्रचुरजलपरिपूर्णां नदीमिव दृश्यमानामित्यर्थः । अरुणाचलनाथस्तु — महता प्रयासेनात्रत्यमिवशब्दमुप-माद्योतकपक्षे निक्षिप्तवान् । बालप्रबोधार्थिनो वयं तु प्रतीतिबलादुत्प्रेक्षापक्षे निक्षिपामः ॥ ५३ ॥

**सान्ध्यमस्तमितशेषमातपं**
**रक्तरेखमपरा बिभर्ति दिक् ।**
**साम्परायवसुधा सशोणितं**
**मण्डलाग्रमिव तिर्यगुज्झितम् ॥ ५४ ॥**

(प्रकाशिका)

**सान्ध्यमिति** । आतपं प्रकाशम् । रक्तरेखं रक्तरेखारूपम् । मण्ड-लाग्रं खड्गः । उज्झितं क्षिप्तम् । नन्वत्रेव पूर्वत्राप्युपमानस्य क्रियान्वयेन भवितव्यम् । न चासौ सिध्यति । धातुरसनिम्नगाया देवीदर्शनविषयस्या-सिद्धत्वात् । उच्यते । न ह्युपमानस्य सर्वत्र क्रियान्वयः । तर्ह्युपमान-वाचिपदं केनान्वयमुपेयात् । उपमेयवाचिना । ननु कस्तयोः सम्बन्धः । विशेषणविशेष्यभावः । तत्रोपमानं विशेषणं, शुक्लादिवद् व्यावर्तकत्वात् । अन्यद् विशेष्यं, पटादिवद् व्यावृत्तप्रत्ययविषयत्वात् । अत एव वागर्था-

१. 'त्यर्थः । त', २. 'टः' छ. पाठः. ३. ४. 'ले' ग. घ. पाठः. ५. 'ङ्ग' घ. ङ. पाठः.

विन्यादौ द्वितीयादिविभक्तियोगः। ननु तथापि क्रियान्वयेन भवितव्यम्। सर्वेषामेव विशेषणपदानां विशेष्यपदवत् क्रियापदान्वयस्य वाक्ये वाक्यविदामिष्टत्वात्। उच्यते। स ह्यन्वयः प्रथमं शक्त्या प्रतीतिपथमवतरति। न तु विश्रान्तिपदं भवति। विश्रान्तिपदं तु पाष्ठिको विशेषणविशेष्ययोरन्वयः। स एव च व्यवहाराङ्गं वास्तवश्च। अत एव हि श्रौत्यामुपमायां तयोः समानविभक्तिकत्वम् ॥ ५४ ॥

(विवरणम्)

सन्ध्यारागस्य ततोऽपि न्यूनत्वात् तमेव रुधिरोक्षितेन खड्गेनोपमिनोति —

सान्ध्यमिति। अपरा दिक् सान्ध्यम् अस्तमितशेषं रक्तलेखम् आतपं बिभर्ति। अपरा दिक् पश्चिमाशा सान्ध्यं सन्ध्याकालभवम् अस्तमितस्य विनष्टस्य शेषम् अत एव रक्तलेखं रक्तलेखारूपम् आतपं प्रकाशं बिभर्ति दधाति। अस्तमितप्रायत्वाल्लेखारूपं सन्ध्यारागं पश्चिमाशा दधातीत्यर्थः। अत्रोपमामाह — साम्परायवसुधा सशोणितं तिर्यग् उज्झितं मण्डलाग्रम् इव इति। साम्परायवसुधा युद्धभूमिः। 'युद्धायत्योः साम्पराय' इत्यमरः। सशोणितं शोणितेन रुधिरेण सहितं तिर्यक् तिरश्चीनं यथा भवति तथा उज्झितं क्षिप्तं मण्डलाग्रं करवालम्। 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवद्' इत्यमरः, तमिव। यथा रणक्षितिः शोणितोक्षितं म्रियमाणैस्तिर्यक् क्षिप्तं मण्डलाग्रं दधाति, तथा पश्चिमाशा सन्ध्यानुरागमित्यर्थः। अत्र सन्ध्यारागस्य खड्गोपमया सूर्यास्तमयप्रदेश एव तिर्यगवस्थानं सूचितम् ॥ ५४ ॥

यामिनीदिवससन्धिसम्भवे
तेजसि व्यवहिते सुमेरुणा।

---

१. 'षामपि वि' ङ. पाठः. २. 'यः केवलं प्रथमांश' ग., ङ. पाठः. ३. 'त्व' ङ. पाठः. ४. 'ति सिंहः।' छ. पाठः.

एतदन्धतमसं निरङ्कुशं
दिक्षु दीर्घनयने! विजृम्भते ॥ ५५ ॥

(प्रकाशिका)

यामिनीति। यामिनीदिवससन्धिसम्भवे सान्ध्य इत्यर्थः। सुमेरुणेति पौराणिकपक्षावलम्बनेन भणितिः। निरङ्कुशं निष्प्रतिबन्धम् ॥ ५५॥

(विवरणम्)

अपिच तेजोलेशस्यापि विनष्टत्वादन्धकारावृतमिदं जगज्जायत इत्याह—

यामिनीति। हे दीर्घनयने! यामिनीदिवससन्धिसम्भवे तेजसि सुमेरुणा व्यवहिते अन्धतमसम् एतद् दिक्षु निरङ्कुशं विजृम्भते। दीर्घे नयने यस्यास्तस्याः सम्बुद्धिः। यामिन्याः रात्र्याः दिवसस्य च सन्धिर्यामिनीदिवससन्धिः, तस्मिन् सम्भव उद्भवो यस्य तस्मिन्। तेजसि सान्ध्ये तेजसीत्यर्थः। सुमेरुणा महामेरुणा व्यवहिते कृतव्यवधाने सति अन्धतमसम् अत्यन्तप्रवृद्धं तम इत्यर्थः। 'ध्वान्ते गाढेऽन्धतमस'मित्यमरः। दिक्षु सर्वासु दिक्षु निरङ्कुशम्। अत्र मत्तगजस्वैरसञ्चारप्रतिबन्धकवाचिनाङ्कुशशब्देन प्रतिबन्धमात्रं लक्ष्यते। साध्यसाधनभावश्चात्र सम्बन्धः। अन्धतमसस्य गजवदनिवारणीयत्वप्रतीतिः फलम्। निष्प्रतिबन्धं यथा भवति तथा विजृम्भते वर्धते। पश्येति शेषः। सुमेरुणा व्यवहित इति पौराणिकमतानुसारेणोक्तम्। सूर्यः सुमेरुं प्रदक्षिणीकरोतीति तन्मतम्। अत्रान्धतमसस्य पुनर्वर्धनानुपपत्तेरन्धतमसं विजृम्भत इत्यस्यान्धतमसरूपेण वर्धत इत्यर्थो द्रष्टव्यः। अत एवोत्तरश्लोके 'नोर्ध्वमीक्षणगतिरि'त्यादिना तमसः प्रवृद्धत्वावस्थां वक्ष्यति ॥ ५५ ॥

नोर्ध्वमीक्षणगतिर्न चाप्यधो
नाभितो न च पुरो न पृष्ठतः।

---

१. 'पुरतो न' मुद्रितकोशपाठः.

लोक एष तिमिरौघ उत्थिते
गर्भवास इव वर्तते निशि ॥ ५६ ॥

(प्रकाशिका)

**नोर्ध्वमिति । अभितः पार्श्वतः । गर्भवास इवेति । तत्रापि नोर्ध्वादावीक्षणगतिः ॥ ५६ ॥**

(विवरणम्)

अन्धतमसविजृम्भणे लोकस्यावस्थामाह

नोर्ध्वमिति । तिमिरौघे उत्थिते ऊर्ध्वम् ईक्षणगतिः न । तिमिराणाम् ओघे समूहे उत्थिते प्रवृद्धे[2] सति ऊर्ध्वम् ऊर्ध्वभागे । ईक्षणानां नेत्राणां गतिः प्रवृत्तिः न । भवतीति शेषः । तमसि प्रवृद्धे[3] नेत्राणामूर्ध्वभागप्रवृत्तिर्न भवतीत्यर्थः । अधोभागेऽपि नास्तीत्याह — अधः च अपि न इति । अधः अधोभागेऽपि च न । ईक्षणगतिरधोभागेऽपि नास्तीत्यर्थः । पार्श्वद्वयेऽपि नास्तीत्याह — अभितः (न) इति । अभितः पार्श्वतः । चशब्दोऽत्राप्यनुषज्यते । पार्श्वद्वयेऽपि नेत्राणां गतिर्न भवतीत्यर्थः । पुरोभागेऽपि नेत्रप्रवृत्तिर्नास्तीत्याह — पुरश्च न इति । पुरः पुरोभाग इत्यर्थः । पृष्ठेऽपि नास्तीत्याह — पृष्ठतः न इति । चशब्दोऽत्रापि द्रष्टव्यः । पृष्ठतः पृष्ठभागे इत्यर्थः । तमसि प्रवृद्धे[4] कुत्रापि न नेत्रप्रवृत्तिरित्यर्थः । अत एवोत्प्रेक्षते — एषः लोकः निशि गर्भवासे वर्तते इव इति । एषः दृश्यमानो लोकः गर्भवासे गर्भगृहे । 'गर्भागारं वासगृहमि'त्यमरः (?) । शीतातपादिनिवारणार्थं[5] पाषाणवृक्षादिभिः कल्पितं गृहं गर्भगृहमित्युच्यते । नहि तत्राप्यूर्ध्वादावीक्षणगतिः सम्भवति । 'लोक एष तिमिरेण वेष्टित'[1] इति वा पाठः ॥ ५६ ॥

शुद्धमाविलमवस्थितं चलं
वक्रमार्जवगुणान्वितं च यत् ।

---

१. 'वेष्टितो ग' मुद्रितकोशपाठः. २. ३. ४. 'स्ते', ५. 'र्थं मृत्पाषा' छ. पाठः.

सर्वमेव तमसा समीकृतं
धिङ् महत्त्वमसतां हृ[1]तान्तरम् ॥ ५७ ॥

(प्रकाशिका)

शुद्धमिति । समीकृतं निर्विशेषीकृतम् । असताम् असाधूनाम् । तमश्चे[2] भाभावरूपत्वादसत् । अतः श्लेषाविद्धोऽयमर्थान्तरन्यासः । हृतान्तरमपहृतविशेषम् । असतां महत्त्वं यदि स्यात्, तन्निहुतेतरपदार्थगतविशेषं भवतीत्यर्थः ॥ ५७ ॥

(विवरणम्)

अपिच सर्वमपि जगदैकरूप्यमुपगतमित्याह—

शुद्धमिति । शुद्धम् आविलम् अवस्थितं चलं वक्रम् आर्जवगुणान्वितं च यत् तत् सर्वम् एव तमसा समीकृतम् । शुद्धं निर्मलम् । आविलं कलुषम् । 'कलुषोऽनच्छ आविल' इत्यमरः । मलोपहतमित्यर्थः । अवस्थितं निश्चलं चलं चञ्चलं वक्रं कुटिलम् आर्जवगुणान्वितम्[3] अकुटिलत्वेन गुणेनान्वितं सहितं च यद् द्रव्यं, तत् सर्वमेव तमसा अन्धकारेण समीकृतं निर्विशेषीकृतम् । समलनिर्मलानाम् अचलचञ्चलानाम् अवक्रवक्राणां च पदार्थानां तमसा तत्तद्विशेषदर्शननिरोधद्वारेण साम्यमापादितमित्यर्थः । अत्र श्लेषानुविद्धमर्थान्तरन्यासमाह—असतां महत्त्वं हृतान्तरं धिग् इति । असताम् असाधूनाम् । तमसश्चाभावरूपत्वादसत्त्वमस्ति । अभावरूपं तम इति तार्किकाणां मतमनुसृत्यैवमुक्तम् । महत्त्वम् औन्नत्यं प्रवृद्धत्वं च । हृतम् अपहृतम् अन्तरम् विशेषो येन तत् तथा । धिगिति निन्दावचनमव्ययम् । 'धिङ् निर्भर्त्सननिन्दयो'रित्यमरः । यद्यसतां क्वचिन्महत्त्वमुत्पद्येत, तर्हि न जनानां जातिकर्मादिकृतं विशेषमीक्षन्त इति भावः ॥ ५७ ॥

---

१. 'हृ' मुद्रितकोशपाठः. २. 'श्चाभाव', ३. 'तं कुटिलभावत्वे' क. पाठः.

नूनमुन्नमति यज्वनां पतिः
शार्वरस्य तमसो निषिद्धये।
पुण्डरीकमुखि! दिङ्मुखं[1] यथा
कैतकैरिव रजोभिराहतम् ॥ ५८ ॥

(प्रकाशिका)

नूनमिति। उन्नमति उदयते। वर्तमानसामीप्ये लट्। दिङ्मुखम् अर्थात् प्राचीमुखम्। यथेत्युपपादनद्योतकम्। 'दिङ्मुखं हरेरि'ति केचित् पठन्ति ॥ ५८ ॥

(विवरणम्)

अथ चन्द्रोदयं वर्णयितुमुपक्रमते—

नूनमिति। यज्वनां पतिः शार्वरस्य तमसः निषिद्धये उन्नमति नूनम्। यज्वनां पतिश्चन्द्रः। यदाह मुरारिः— "गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम्" इति। शार्वरस्य शर्वरीभवस्य तमसः तिमिरस्य निषिद्धये निषेधाय उन्नमति उदयते। वर्तमानसामीप्ये लट्। नूनमिति निश्चयवाचकमव्ययम्। 'नूनं तर्केऽथ निश्चय' इत्यमरः। सर्ववर्णविभागविनाशकारिणस्तमसः शान्तये द्विजानामधिपः सद्य एवोदेष्यतीति वयं निश्चिनुम इत्यर्थः। ननु तत्र किं प्रमाणम् (अत्राह)—पुण्डरीकमुखि! यथा दिङ्मुखं कैतकैः रजोभिः आहतम् इव इति। पुण्डरीकं पद्मम्। पुण्डरीकमिव मुखं यस्याः। 'दिङ्मुखं हरेरि'ति केषाञ्चित् पाठः। तन्मते हरेरिन्द्रस्य दिशो मुखमित्यर्थः। यथेत्युपपादनद्योतकमव्ययम्। यस्मात् प्रकाराद्धेतोरित्यर्थः। दिङ्मुखं दिशो मुखम्। प्राच्या इत्यर्थात् सिध्यति। कैतकैः केतकीकुसुमसम्बन्धिभिः रजोभिः कुसुमरेणुभिः आहतम् अनुविद्धमिव। भवतीति शेषः। यस्मादिदं प्राचीदिङ्मुखं केतकीकुसुमरेणुभिरनुविद्धमिव भवति, तस्मात् तमोनिरोधाय चन्द्रः समुदेष्यत्येवेत्यर्थः[2] ॥ ५८ ॥

---

१. 'पूर्वदिङ्मुखं कै' मुद्रितकोशपाठः. २. 'र्थः ॥ च' क. पाठः

मन्दरान्तरितमूर्तिना निशा
लक्ष्यते शशभृता सतारका ।
त्वं मया प्रियसखीसमागता
श्रोष्यतेव वचनानि पृष्ठतः ॥ ५९ ॥

(प्रकाशिका)

मन्दरेति । सतारकेत्यस्य प्रतिवस्तु प्रियसखीसमागतेति, मन्दरान्तरितमूर्तित्वस्य[1] पृष्ठतः स्थितिः ॥ ५९ ॥

(विवरणम्)

किञ्च चन्द्रोऽप्युदितप्राय एवेत्याह —

मन्दरेति । मन्दरान्तरितमूर्तिना शशभृता सतारका निशा लक्ष्यते । मन्दरेण मन्दराचलेन अन्तरिता आच्छादिता मूर्तिः शरीरं यस्य तेन । शशभृता चन्द्रेण[2] तारकाभिर्नक्षत्रैः सहिता निशा रात्रिः लक्ष्यते अवलोक्यते । चन्द्रोऽयं मन्दराचलगूढशरीरः सन् आत्मनः प्रियतमां[3] सतारकां निशामवलोकयतीत्यर्थः । मन्दराचलस्य गन्धमादनपूर्वभागावस्थितत्वादन्तरितत्वप्रतीतिः । अत्रोपमामाह — वचनानि श्रोष्यता पृष्ठतः मया प्रियसखीसमागता त्वम् इव इति । वचनानि विस्रम्भवाक्यानि श्रोष्यता श्रोतुकामेनेत्यर्थः । पृष्ठतः पृष्ठभागे । स्थितेनेति शेषः । प्रियसखीसमागता प्रियाभिः, अनेन विस्रम्भसल्लाँपयोग्यत्वमुक्तं, सखीभिर्वयस्याभिः समागता सहिता त्वमिव । यथा प्रियसखीभिः सह तव सुखावस्थानसमये मद्विषयान् विस्रम्भसल्लाँपानाकर्णयितुकामेन मया कदाचित् त्वमवलोक्यसे, तथेत्यर्थः । अनेनात्मनः प्रेमप्रकाशनं देवेन कृतमित्यवसेयम् । अत्र सतारकेत्यस्य प्रति-

---

१. 'स्य च पृ' ङ. पाठः. २. 'न्द्र उदयन् म', ३. 'यां स' क. पाठः.

वस्तुत्वेन प्रियसखीसमागतेत्युक्तं, मन्दरान्तरितमूर्तिनेत्यस्य तु पृष्ठतः स्थितेनेति ॥ ५९ ॥

रुद्धनिर्गमनमा दिनक्षयात्
पूर्वदृष्टतनुचन्द्रिकास्मिता ।
एतदुद्गिरति रात्रिचोदिता
दिग् रहस्यमिव चन्द्रमण्डलम् ॥ ६० ॥

(प्रकाशिका)

रुद्धेति । आ दिनक्षयाद् दिनव्यपगमावधि । अनेनाविस्रब्धजनसन्निधानपरिहारो ध्वनितः। रात्रिर्नायिकेव दिग् दूतीवेत्येकदेशविवर्तिन्युपमेयम्। उद्दीपकत्वसाम्याद् रहस्येन चन्द्रमण्डलस्योपमितिः ॥ ६० ॥

(विवरणम्)

अपिच, तस्मादपि शनैः शनैरयमुद्गच्छति शीतभानुरित्याह—

रुद्धेति । दिग् रात्रिचोदिता एतत् चन्द्रमण्डलम् उद्गिरति । दिक् प्राचीत्यर्थात् सिध्यति । रात्र्या निशया चोदिता प्रेरिता सती । एतदिति सहस्तनिर्देशं वचनम् । चन्द्रमण्डलं चन्द्रबिम्बम् उद्गिरति उद्गमति । अत्रोपमामाह— रहस्यम् इव इति । यथा नायिकाचोदिता दूती प्रियतमगतं प्रियतरं रहस्यवृत्तान्तं वदनादुद्गमति, तथेत्यर्थः । अत्र रहस्येन चन्द्रमण्डलस्योपमितिरुद्दीपकत्वसाम्यादिति द्रष्टव्यम् । साधारणं धर्ममाह—दिनक्षयाद् आ रुद्धनिर्गमनम् इति । दिनस्य क्षयो दिनक्षयः । अत्राभिविधौ आङ् । दिनव्यपगमावधीत्यर्थः । रुद्धं निरुद्धं निर्गमनम् उद्गमनम् यस्य तत् तथा । रात्रिसमागमपर्यन्तं निरुद्धप्रसरमित्यर्थः । रहस्यपक्षे अविस्रब्धजनश्रवणपरिहारार्थं दिवसावसानपर्यन्तं रक्षितमित्यर्थः । दिनान्ते हि सर्वे जनाः यथागतं गच्छ-

---

१. 'तम् ।', २. 'चन्द्रमण्डलं दिग् रहस्यमिव रात्रिनोदितम् ॥' मुद्रितकोशपाठः.

न्तीति भावः । चन्द्रोदयरहस्यवचनयोरारम्भदशां प्रकाशयन् दिशं विशिनष्टि— पूर्वदृष्टतनुचन्द्रिकास्मिताम् इति । पूर्वमेव दृष्टं तनु अत्यल्पं चन्द्रिकैव स्मितं यस्याम् । अनेन स्मितपूर्वाभिभाषित्वमुक्तम् । चन्द्रोदयारम्भे हि तनुतरा चन्द्रिका पूर्वमुद्गच्छति । अत्र चन्द्रमण्डलस्य रहस्योपमितिरुपमाशब्देनैवोक्ता । रात्रेर्नायिकोपमा दिशो दूत्युपमा चार्थादायातीत्येकदेशविवर्तिनीयमुपमा ॥ ६० ॥

**पश्य पक्वफलिनीफलत्विषा**
**बिम्बलाञ्छितवियत्सरोम्भसा ।**
**विप्रकृष्टविवरं हिमांशुना**
**चक्रवाकमिथुनं विडम्ब्यते ॥ ६१ ॥**

(प्रकाशिका)

**पश्येति** । पक्वफलिनीफलसाम्यमुदयरागात् । बिम्बाभ्यां बिम्बप्रतिबिम्बाभ्यां लाञ्छिते वियत्सरोम्भसी यस्य । वियत्स्थमुदयारुणं बिम्बं सरोम्भःस्थं प्रतिबिम्बं च परस्परं विप्रकृष्टान्तरे विघटितं चक्रवाकमिथुनं विडम्बयत इत्यर्थः ॥ ६१ ॥

(विवरणम्)

चन्द्रोदयानन्तरं वियति दृश्यमानं चन्द्रबिम्बं सरसि दृश्यमानं तत्प्रतिबिम्बं[2] च आश्चर्यरूपं दृश्यत इत्याह—

पश्येति । बिम्बलाञ्छितवियत्सरोम्भसा हिमांशुना विप्रकृष्टविवरं चक्रवाकमिथुनं विडम्ब्यते पश्य । बिम्बाभ्यां बिम्बप्रतिबिम्बाभ्यां लाञ्छिते अङ्किते वियत्सरोम्भसी वियदाकाशं सरसामम्भश्च यस्य तेन । विप्रकृष्टं दूरं विवरमन्तरं यस्य तादृशं चक्रवाकद्वन्द्वं विडम्ब्यते अनुक्रियते पश्य अवलोकय ।

---

१. 'स्याः । अ' क. पाठः. २. 'म्बमपि आ' छ. पाठः.

अत्र पश्येत्यर्थागतमपि दर्शनीयत्वातिशयं द्योतयितुं प्रयुक्तम्। आकाशदेशस्थं चन्द्रबिम्बं सरोजलस्थं तत्प्रतिबिम्बं च बिम्बस्य दूरोन्नतत्वेन परस्परविप्रकृष्ट-त्वाद् निशायां परस्परवियुक्तं चक्रवाकमिथुनमनुकुरुतः, सावधानमवलोकय-त्यर्थः। उपमात्रार्थी। चन्द्रबिम्बप्रतिबिम्बयोश्चक्रवाकदम्पत्योश्च सरःप्रदेशदृ-श्यमानत्वमप्युपमाहेतुः। किञ्च वर्णसाम्यमप्यस्तीत्याह — पक्वफलिनीफल-त्विषा इति। रक्तवर्णफला कापि लता फलिनी[1]शब्दार्थः। 'फलिनी शक्रपुष्प्यपी'-त्यमरः। फलिन्याः फलं फलिनीफलम्। त्विट् शोभा। पक्वस्य फलिनीफलस्य। त्विडिव त्विड् यस्य तेन। रक्तवर्णेनेत्यर्थः। चक्रवाकमिथुनस्य रक्तवर्णत्वं प्र-सिद्धम्॥ ६१॥

**शक्यमोषधिपतेर्नवोदयाः**
**कर्णपूररचनाकृते तव।**
**अप्रगल्भयवसूचिकोमला-**
**श्छेत्तुमग्रनखसम्पुटैः कराः॥ ६२॥**

**(प्रकाशिका)**

**शक्यमिति।** अत्र वामनः — "शक्यमिति रूप[2]मलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्" (अधि० ५. अध्या० २. सू० २३) इति। सामान्योपक्रमो विशेषाविवक्षा। अप्रगल्भत्वेनापि नवोदयत्वं लक्ष्यते। यवसूचिर्यवाङ्कुरः। सूचिवत् सूचिः, तद्वत् कोमलाः। कोमलत्वं चारो-पितम्। तेन च छेदस्य शक्यतारोपः। एवञ्च सर्व एवायं वाक्यार्थ उपचारप्राणकः। अमुं च प्रकारं संभवभणितिरिति केचिदाचक्षते। नखसंपुटैः अन्योन्याभिमुखनखयुगलसन्निपातैः॥ ६२॥

---

१. 'नी।' छ. पाठः. २. 'मपि लि' ङ. पाठः.

(विवरणम्)

चन्द्रिकापि मन्दं मन्दं प्रसरतीत्याह—

शक्यमिति । ओषधिपतेः नवोदयाः कराः तव कर्णपूररचनाकृते अग्रनखसम्पुटैः छेत्तुं शक्यम् । ओषधिपतेः चन्द्रस्य नवः उदयः येषां ते तथा कराः रश्मयः तव कर्णपूररचनाकृते कर्णावतंसनिर्माणार्थम् । अग्रनखो नखाग्रम् । सम्पुटः सन्निवेशविशेषः । अग्रनखयोः सम्पुटाः अग्रनखसम्पुटाः तैः । अन्योन्याभिमुखनखाग्रनिपातनैरित्यर्थः । छेत्तुं छेदनं कर्तुं शक्यं योग्यम् । अत्र वामनः—"शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमाद्" (अधि० ५. अ० २. सू० २३) इति । अत्र सामान्योपक्रमादित्यस्य विशेषविवक्षाभावादित्यर्थः । तस्माच्छक्यमित्यत्र विशेषविवक्षाभावाल्लिङ्गवचनविशेषाभावः । अत्र शक्यं यत्किञ्चिदस्तीति सामान्येनोपक्रमे किं तच्छक्यमित्याकाङ्क्षायां विशेषरूपो वाक्यशेषो द्रष्टव्यः । यथा—"शक्यमरविन्दसुरभिः" (शाकु० अ० ३. श्लो० ४) इत्यादौ, "शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः" इत्यत्र च । चन्द्रकराः सम्प्रत्यभिनवप्रवृत्तत्वात् तव कर्णपूरनिर्माणार्थं नखाग्रलाव्या इत्यर्थः । चन्द्रकराणां कर्णपूरयोग्यत्वमप्यस्तीत्याह—अप्रगल्भयवसूचिकोमला इति । अप्रगल्भा अभिनवोदितत्वादतिमृदुला ये यवसूचयः यवाङ्कुराः सूचिवद्भान्तीति सूचयोऽङ्कुराः तद्वत् कोमलाः मृदुतराः । अत्र चन्द्रकराणामभिनवोदितत्वात् कोमलत्वमारोपितं, तेनच्छेदनयोग्यत्वमप्यारोप्यते । तस्मात् समस्तोऽप्ययमुपचारप्राणको वाक्यार्थः[२] ॥ ६२ ॥

**अङ्गुलीभिरिव केशसञ्चयं**
**सन्निगृह्य तिमिरं मरीचिभिः ।**

---

१. 'क' छ. पाठः. २. 'र्थः ॥ अ' क. पाठः.

कुड्मलीकृतसरोजलोचनं
चुम्बतीव रजनीमुखं शशी ॥ ६३ ॥

(प्रकाशिका)

अङ्गुलीभिरिति । अत्रोपमारूपकोत्प्रेक्षाणां सङ्करः ॥ ६३ ॥

(विवरणम्)

सम्प्रति रजनीशशिनौ सुरतोद्युक्तनायिकानायकत्वेन प्रतीयेते इत्याह —

अङ्गुलीभिरिति । शशी अङ्गुलीभिः केशसञ्चयम् इव मरीचिभिः तिमिरं सन्निगृह्य रजनीमुखं चुम्बति इव । शशी चन्द्रः अङ्गुलीभिः केशानां कचानां सञ्चयं समूहमिव मरीचिभिः रश्मिभिः तिमिरं तमः सन्निगृह्य सम्यङ् निगृह्य गृहीत्वा रजन्या मुखं पूर्वभागं वदनं च चुम्बतीव । यथा नायको नायिकायाश्चिकुरनिकुरुम्बं कराङ्गुलीभिः[1] सम्यग् गृहीत्वा वदनं चुम्बति, तथा चन्द्रोऽपि अधोभागवर्तिनां तिमिराणामुपरिभागे करं प्रसार्य स्थितत्वादुपलब्धनिशामुखसम्बन्धत्वाच्चाङ्गुलीभिश्चिकुरं गृहीत्वा वदनं चुम्बतीवेत्युत्प्रेक्षते । चुम्बनजनितस्यानन्दस्या[2]नुभावो[3]ऽपि मुखे दृश्यत इवेत्याह — कुड्मलीकृतसरोजलोचनमिति । कुड्मलीकृतं मुकुलीकृतं सरोजमेव लोचनं यस्य तत् । अस्माकमप्युपभोगकालः सम्प्राप्त इत्यनेन ध्वन्यते । अत्र अङ्गुलीभिः केशसञ्चयमिवेत्यत्र[4] उपमा, कुड्मलीकृतसरोजलोचनमिति रूपकं, रजनीमुखं चुम्बतीवेत्युत्प्रेक्षेत्युपमारूपकोत्प्रेक्षाणां समासोक्तेश्चात्र सङ्करः ॥ ६३ ॥

पश्य पार्वति ! नवेन्दुरश्मिभिः
सामिभिन्न[5]तिमिरं नभस्तलम् ।

---

१ 'भिः कराणां के' छ. पाठः. २. 'स्याप्यनु', ३. 'वो मु' क. पाठः. ४. 'त्यत्र रू' छ. पाठः. ५. 'भिन्नसान्द्रति' मुद्रितकोशपाठः.

लक्ष्यते द्विरदभोगदूषितं

संप्रसीददिव[1] मानसं सरः ॥ ६४ ॥

(प्रकाशिका)

पश्येति । पार्वतीति श्लाघागर्भं (आह्वानं ?) सम्बोधनम् । सामिभिन्नमर्धक्षिप्तम् । द्विरदभोगदूषितं गजेस्नानक्रीडाकलुषितम् ॥ ६४ ॥

(विवरणम्)

चन्द्रिकायां प्रसृतायां तिमिरमपि शनैः शनैः शाम्यतीत्याह —

पश्येति । पार्वति ! नवेन्दुरश्मिभिः सामिभिन्नतिमिरं नभस्तलं द्विरदभोगदूषितं सम्प्रसीदद् मानसं सरः इव लक्ष्यते पश्य । हे पार्वतीति श्लाघागर्भं सम्बोधनम् । नवैः अभिनवोदितैः इन्दुरश्मिभिः चन्द्रकिरणैः कर्तृभूतैः । अत्र नवत्वं तिमिरस्य सामिभिन्नत्वे हेतुः । सामीत्यर्धवाचकमव्ययम् । 'सामि त्वर्धे जुगुप्सने' इत्यमरः । भिन्नं क्षिप्तम् । सामिभिन्नमर्धक्षिप्तं तमो यत्र तादृशं नभस्तलम् आकाशप्रदेशः द्विरदानां गजानां भोगेन स्नानक्रीडादिना[2] दूषितं कलुषीकृतम् । नह्यतिमहतस्तस्य सरसः समस्तकलुषितत्वं यस्यकस्यचित् क्रीडया सम्भवतीति द्विरदपदोपादानम् । सम्प्रसीदत् सम्यक् स्वच्छतामुपगच्छत् । अत्र वर्तमाननिर्देशेन प्रतिक्षणं प्रसादाधिक्यं द्योत्यते । मानसमिति देवानां सरसो नाम । लक्ष्यते दृश्यते । नभसो विस्तृतत्वान्मानसेनोपमा । पश्य सावधानमवलोकयेत्यर्थः । चन्द्रकिरणानामभिनवोदितत्वात् तैरर्धक्षिप्ततिमिरमिदं नभस्तलं पूर्वं गजस्नानक्रीडादूषितत्वात् स्वयमेव क्रमेण प्रसादमुपगच्छन्मानसं सर इव लक्ष्यते । अतिचित्रमेतत् सावधानमवलोकयेत्यर्थः । एतादृशी दशा नभस्तलस्य क्षणान्तरे विनश्यति । तस्मात् सद्य एवावलोकयेति भावः ॥ ६४ ॥

---

१. 'सप्रसादमिव' मुद्रितकोशपाठः. २. 'जक्रीडास्नानक' ङ. पाठः.

रक्तभावमपहाय चन्द्रमा
जात एष परिशुद्धमण्डलः ।
विक्रिया न खलु कालदोषजा
निर्मलप्रकृतिषु स्थिरोदया ॥ ६५ ॥

(प्रकाशिका)

रक्तेति । रक्तशब्देन विषयासक्तिः, मण्डलशब्देन स्वराष्ट्रं, प्रकृतिशब्देनामात्यादयश्च ध्वन्यन्ते । यथा राजा नवो[1] यौवनारम्भे राग-दूषित[2]प्रवृत्तित्वात्[3] क्षयलोभविरागादिकलुषितमण्डलः पश्चात् स्वाभाविके-नामात्यादिकृतेन च विनयेन युक्तः सन्नपगतरागः शुद्धमण्डलो भवति, तथायमपीत्युपमाध्वनिः ॥ ६५ ॥

(विवरणम्)

चन्द्रोऽयमुदयरागमपहाय स्वाभाविकेन वैशद्येनान्वितो जात इत्याह—

रक्तेति । एषः चन्द्रमाः रक्तभावम् अपहाय परिशुद्धमण्डलः जातः । चन्द्रमाः चन्द्रः । रक्तभावं रक्तत्वम् । उदयरागमिति यावत् । अपहाय परि-त्यज्य परितः समन्ताच्छुद्धं मण्डलं बिम्बं यस्य तथाभूतो जातः । युक्तं चैत-दित्याह — कालदोषजा विक्रिया निर्मलप्रकृतिषु स्थिरोदया न खल्विति । कालदोषाज्जाता विक्रिया विकारः निर्मलप्रकृतिषु निर्मलस्वभावेषु स्थिरो निश्चलः उदय आविर्भावो यस्याः तथाविधा न खलु । खलुशब्दः प्रसिद्धौ । निर्मलस्वभावेषु कालदोषजो विकारो न स्थिर इत्यर्थः । अत्र रक्त-शब्देन विषयेष्वत्यन्तसक्तिः, मण्डलशब्देन स्वराष्ट्रं, प्रकृतिशब्देनामात्यादयश्च ध्वन्यन्ते । ततश्च यथा तावदभिनवो राजा यौवनारम्भे रागादिदूषितवृत्ति-त्वात् किञ्चित् कालं विरागादिकलुषितमण्डलो भवति पुनश्च कालान्तरे

१. 'व' ङ. पाठः. २. 'रू' घ. ङ. पाठः. ३. 'तवृ' क. ग. पाठः.

स्वाभाविकेन वा वृद्धामात्यकृतेन वा विनयेन भूषितो भूत्वा विगतरागः शुद्ध-मण्डलो जायते, तथायमपीत्युपमाध्वनिः ॥ ६५ ॥

**उन्नतेषु शशिनः प्रभा स्थिता**
**निम्नसंश्रयपरं निशातमः ।**
**नूनमात्मसदृशि प्रकल्पिता**
**वेधसैव[1] गुणदोषयोर्गतिः ॥ ६६ ॥**

(प्रकाशिका)

उन्नतेष्विति । नूनं निश्चये । गुणदोषाभ्यां धर्मिणौ लक्ष्येते ॥ ६६ ॥

(विवरणम्)

शशिनि दूरोन्नते सति निम्नप्रदेशेषु केषुचिदेव तमो दृश्यत इत्याह—

उन्नतेष्विति । शशिनः प्रभा उन्नतेषु स्थिता । शशिनः चन्द्रस्य प्रभा चन्द्रिका उन्नतेषु उन्नतप्रदेशेषु स्थिता । अतिविशदा चन्द्रिका समुन्नतेषु स्थलेषु प्रसृताभूदित्यर्थः । अतिमलिनं तिमिरं तु न तथेत्याह—निशातमः निम्नसंश्रयपरम् । निशायां यत् तमः ध्वान्तं निम्नानाम् अवटतटाकादीनां संश्रये सम्यगाश्रये परं तत्परम् । अभूदिति शेषः । अतिमलिनं तिमिरमधःप्रदेशवर्ति जातमित्यर्थः । ब्रह्मण एवायं कौशलविशेष इत्याह—गुणदोषयोः आत्मसदृशि गतिः वेधसा एव प्रकल्पिता नूनम् इति । अत्र गुणदोषशब्दाभ्यां गुणी दोषवांश्च लक्ष्यते । आश्रयाश्रयिभावश्च सम्बन्धः । नैर्मल्यमालिन्ययोराधिक्यप्रतीतिः फलम् । आत्मसदृशि आत्मना सदृग् आत्मसदृक् तस्मिन् । गतिः प्राप्तिः वेधसा ब्रह्मणा । एवशब्दो जनान्तरव्यावृत्त्यर्थः । प्रकल्पिता प्रकर्षेण कल्पिता । सम्यक् कल्पितेत्यर्थः । नूनंशब्दो निश्चये । गुणवतां चन्द्रिकाप्रभृतीनां यदात्मयोग्ये समुन्नते स्थले गतिः कल्पिता, यच्च

---

1. 'सा हि गु' मुद्रितकोशपाठः

दोषवतां तमःप्रभृतीनां तदधिष्ठानयोग्ये निम्नप्रदेश एव वर्तनं कल्पितं, तत् परमेष्ठिन एव कौशलविशेषो नान्यस्येत्यर्थः । आत्मसंदशी इति पाठे आत्मसंदशी गतिः प्राप्यभूमिरित्यर्थः । अर्थान्तरन्यासप्रकारश्चायम् ॥ ६६ ॥

**चन्द्रपादजनितप्रवृत्तिभि-**
**श्चन्द्रकान्तजलबिन्दुभिर्गिरिः ।**
**मेखलातरुषु निर्वृतानिमान्**
**बोधयत्यसमये शिखण्डिनः ॥ ६७ ॥**

(प्रकाशिका)

चन्द्रेति । प्रवृत्तिः स्यन्दः । मेखलाशब्दस्तरूणां नीचैर्वृत्तित्व द्योतयति । बोधश्च प्रभातकालभाव्यवश्यायबिन्दुशङ्कया । शिखण्डिन इति इतरपक्षिणां नीडाश्रयत्वात् ॥ ६७ ॥

(विवरणम्)

इत्थमुदिते शशिनि चन्द्रकान्तशिलानां प्रवृत्तिमाह —

चन्द्रेति । असौ गिरिः चन्द्रपादजनितप्रवृत्तिभिः चन्द्रकान्तजलबिन्दुभिः मेखलातरुषु निर्वृतान् इमान् शिखण्डिनः असमये बोधयति । असौ गिरिर्गन्धमादनः चन्द्रस्य पादैः रश्मिभिः जनिता उत्पादिता प्रवृत्तिः स्यन्दो येषां तथाभूतैः चन्द्रकान्तशिलानां जलबिन्दुभिः मेखलायां पर्वतस्य नितम्बभागे ये तरवः वृक्षाः तेषु । निर्वृतान् सुखसुप्तानित्यर्थः । इमान् दृश्यमानान् शिखण्डिनः बर्हिणान् । असमये अकाले । प्रभातकालात् पूर्वमेवेत्यर्थः । बोधयति विगतस्वापान् करोति । प्रभातसमय एव पक्षिणां बोधः सम्भाव्यते । अत्र तु गिरेश्चन्द्रकान्तप्रचुरत्वाच्चन्द्रकान्तेषु चन्द्रोदये जलप्रवाहसम्भवाच्च शिखण्डिनस्तज्जलपतनसमये प्रभातसमयसम्भावितावश्यायबिन्दुशङ्कया

---

१. 'द्रि', २. 'नमून्' मुद्रितकोशपाठः.

प्रभातकालात् पूर्वमेव प्रबुद्धा भवन्तीत्यर्थः । इतरपक्षिणां नीडाश्रयत्वान्नीडे च जलपतनासम्भवाच्छिखण्डिन इत्युक्तम् । अत एव तेषामिदानीमेव केका-कोलाहलः श्रूयत इति भावः । चन्द्रकान्तशिलानां पर्वतसम्भूतत्वात् पर्वत एव बोधयतीत्युक्तम् ॥ ६७ ॥

**कल्पवृक्षशिखरेषु[1] संप्रति**
**प्रस्फुरद्भिरिह[2] पश्य सुन्दरि! ।**
**हारयष्टिगणना[3]मिवांशुभिः**
**कर्तुमागतकुतूहलः शशी ॥ ६८ ॥**

(प्रकाशिका)

कल्पेति । कल्पवृक्षाणां[4] हि कुसुमं हारादि ॥ ६८ ॥

(विवरणम्)

कल्पवृक्षाणामग्रभागावस्थितेषु चन्द्रकरेषु विशेषमाह —

कल्पेति । सुन्दरि! शशी सम्प्रति (इह) कल्पवृक्षशिखरेषु (प्र)स्फुरद्भिः अंशुभिः हारयष्टिगणनां कर्तुम् आगतकुतूहलः इव पश्य । सुन्दरि! हे सर्वावयवरमणीये! । शशी चन्द्रः सम्प्रति एतस्मिन् काले इहास्मिन् गन्धमादने कल्पवृक्षाणां शिखरेषु अग्रभागेषु प्रकर्षेण स्फुरद्भिः शोभमानैः । हारयष्टीनां यष्ट्याकाराणां हाराणां मौक्तिकानां गणनां सङ्ख्यानं कर्तुं विधातुम् आगतं प्राप्तं कुतूहलं येन तथाभूत इव । पश्य अवलोकय । कल्पवृक्षकुसुमानां हारादिरूपत्वात् सम्प्रति चन्द्रोऽयं कल्पवृक्षोपरि पतद्भिरात्मनः करैस्तद्गतानां हाराणां परिगण(नां? नायां) कुतूहलात् प्रवृत्त इव दृश्यते । सावधानमवलोकयेत्यर्थः । हारयष्टीनां गणनार्हत्वं चन्द्रकराणां तत्समीपवर्तित्वं चोत्प्रेक्षाहेतुः ॥ ६८ ॥

---

१. 'च शिख' छ. पाठः. २. 'व', ३. 'रचना' मुद्रितकोशपाठः. ४. 'णां कु' क. ख. पाठः.

उन्नतावनतभागवत्तया
चन्द्रिका सतिमिरा गिरेरियम्।
भक्तिभिर्बहुविधाभिरर्पिता
भाति भूतिरिव मत्तहस्तिनः ॥ ६९ ॥

(प्रकाशिका)

उन्नतेति। उन्नतावनतभागवत्तया अर्थाद् गिरेरेव। सतिमिरा तिमिरशबला गिरेश्चन्द्रिका। भक्तिभिर्भक्तिरेखाभिः। बहुविधाभिर्बहुप्रकारसन्निवेशाभिः। अत्र भक्तिरेखारहितानि गजाङ्गानि तिमिरस्थानीयानि ॥ ६९ ॥

(विवरणम्)

पर्वतप्रसृतानां चन्द्रकराणां विशेषमाह —

उन्नतेति। उन्नतावनतभागवत्तया सतिमिरा गिरेः इयं चन्द्रिका बहुविधाभिः भक्तिभिः अर्पिता मत्तहस्तिनः भूतिः इव भाति। उन्नताः तुङ्गाः अवनता निम्नाश्च भागाः प्रदेशाः सन्त्यस्येत्युन्नतावनतभागवान् तस्य भावस्तत्ता तया हेतुभूतया। पर्वतस्य निम्नोन्नतप्रदेशवत्त्वात्। सतिमिरा तिमिरसहिता। तिमिरशबलेत्यर्थः। गिरेः पर्वतस्य। चन्द्रिका गिरौ विसर्पन्ती चन्द्रिकेत्यर्थः। बहुविधाभिः बहुप्रकारसन्निवेशाभिः भक्तिभिः भक्तिरेखाभिः अर्पिता न्यस्ता। मत्तहस्तिनः महागजस्य। गिरेर्महत्त्वादिदं विशेषणम्। भूतिः भस्मेव भाति शोभते। 'भूतिर्भस्मनि सम्पदि' इत्यमरः। उन्नतप्रदेशे चन्द्रिकाप्रवृत्तिः निम्नप्रदेशे तिमिरप्रवृत्तिरिति पूर्वमेवोक्तम्। गिरेरुन्नतावनतभागवत्त्वाद् गिरौ प्रसृता तिमिरशबलचन्द्रिका महागजस्योपरि कुशलजनैर्विचित्राकारा विहिता भक्तिरेखेव राजत इत्यर्थः। पर्वतो मत्तहस्तिवद् भाति।

---

१. 'व' मुद्रितकोशपाठः.

सतिमिराः गिरिप्रदेशाः गजाङ्गवच्छोभन्ते । क्वचित् क्वचित् प्रसृता[1] चन्द्रिका तु तदङ्गे भस्मभिः कृता भक्तिरेखेव राजत इति भावः ॥ ६९ ॥

**एतदुच्छ्वसितपीतमैन्दवं**
**सोढुमक्षममिव[2] प्रभारसम् ।**
**मुक्तषट्पदविरावमम्भसां[3]**
**भिद्यते कुमुदमा निबन्धनात् ॥ ७० ॥**

(प्रकाशिका)

एतदिति । एतत् कुमुदमित्यन्वयः । उच्छ्वसितपीतम् उच्छ्वसितेन दलशैथिल्येन पीतम् । सातिशयपीतमिति केचिद् व्याचक्षते । आ निबन्धनाद् आ वृन्तात् । अत्र पारतद्रवपायिना पश्चाद् सोढुमशक्तेन उत्क्रोशता भिन्नशरीरेण साम्यं प्रतीयते ॥ ७० ॥

(विवरणम्)

दूरोदिते शशिनि कुमुदान्यपि सम्यग् विकसन्तीत्याह —

एतदिति । अम्भसाम् एतत् कुमुदं निबन्धनाद् आ भिद्यते । अम्भसां जलानाम् । कुमुदं, जले वर्तमानमित्यर्थः । कुमुदमिति जात्येकवचनम् । सकलमपि कुमुदकुलमित्यर्थः । निबन्धनाद् आ । निबन्धनं वृन्तम् । मर्यादायामाङ् । वृन्तप्रदेशावधीत्यर्थः । भिद्यते भेदमाप्नोति । विकसतीत्यर्थः । शशिकराणां सम्यक् प्रसृतत्वात् कुमुदान्यपि सम्यग् विकसन्तीत्यर्थः । वृन्तपर्यन्तं विकासे हेतुमुत्प्रेक्षते — ऐन्दवं प्रभारसं सोढुम् अक्षमम् इव इति । ऐन्दवम् इन्दुसम्बन्धि(नम्) । प्रभारसं प्रभाणां रसं वीर्यम् । 'शृङ्गारादौ गुणे वीर्ये विषे रागे द्रवे रस' इत्यमरः । सोढुम् अक्षमम् अशक्तमिव । दलेषु[4] पतितानां चन्द्र-

---

१. 'ता तिमिरशबलच' छ. पाठः. २. 'वो', ३. 'मञ्जसा भि' मुद्रितकोशपाठः. ४. 'ज' क. पाठः.

कराणां वीर्यं सोढुमशक्यत्वादिवेत्यर्थः। मृदुतरं हि वस्तु गुरुतरवस्तुभरणे सति विहङ्गाधिष्ठिता लतेव स(न्ना?न्नतं) भवतीति भावः। कुमुदानां विकासारम्भदशामेवाह — उच्छ्वसितपीतमिति। उच्छ्वसितेन उच्छ्वासेन। भावे निष्ठा। दलशैथिल्येन हेतुनेत्यर्थः। पीतं पीतवर्णम्। रक्तकुमुदापेक्षयैवमुक्तम्। कुमुदेषु मधुकराणां मधुपानजनितः कोलाहलोऽपि सञ्जात इत्याह — मुक्तषट्पदविरावमिति। मुक्तः प्रयुक्तः षट्पदानां भ्रमराणां विरावो येन तत् तथा। उदीरितमधुकरनिनादमित्यर्थः। अत्र कुमुदस्य पीतपारतद्रवेण पश्चात् तद्वीर्यं सोढुमशक्तेन भिन्नसर्वाङ्गेण क्रन्दता पुरुषेण साम्यं प्रतीयत इति समासोक्तिः॥ ७०॥

**पश्य कल्पतरुलम्बि शुद्धया**
**ज्योत्स्नया जनितरूपसंशयम्।**
**मारुते चरति चण्डि[2]! केवलं**
**व्यज्यते विपरिवृत्तमंशुकम्॥ ७१॥**

(प्रकाशिका)

**पश्येति[4]।** कल्पतरुलम्बीति, तेषां हि पल्लवान्यंशुकानि। शुद्धया तुषारादिसम्पर्करहितया जनितरूपसंशयम् इदमंशुकमियं ज्योत्स्नेति विवेक्तुमशक्यमित्यर्थः। तवांशुकपरिवर्तने परिकुप्यसीति द्योतनाय चण्डीति पदम्। व्यज्यते, मारुतपरिवर्तितत्वा[5]ज्ज्योत्स्नातो भिद्यत इत्यर्थः॥ ७१॥

(विवरणम्)

कल्पकवृक्षप्रवालानामंशुकरूपत्वात् तद्गतानां चन्द्रकराणां मनोहारित्वातिशयमाह —

**पश्येति।** कल्पतरुलम्बि ज्योत्स्नया जनितरूपसंशयम् अंशुकं मारुते

---

१. 'किरणानां वी' छ. पाठः. २. 'ल', ३. 'ण्डिके! बलाद् व्य' मुद्रितकोशपाठः. ४. 'ति। ते' क. पाठः. ५. 'र्तित्वा' ङ. पाठः.

चलति विपरिवृत्तं केवलं व्यज्यते। चण्डि! त्वं पश्य। कल्पतरौ लम्बितुं शीलमस्येति तथा। कल्पतरौ लम्बमानमित्यर्थः। कल्पतरूणां हि पल्लवान्यंशुकानि। यदाह शक्तिभद्रो हनूमद्वाक्यप्रकरणे—

"एषां पल्लवमंशुकानि कुसुमं मुक्ताः फलं विद्रुमं
वैडूर्यं दलमङ्कुरो मरतकं हैमं च शाखाशतम्।
एते के जगतीरुहो वनजुषोऽप्यज्ञातपूर्वा मया
प्रायः सारममी दिवो विटपिनः किं तैर्ममान्यो भरः॥"

इति। ज्योत्स्नया चन्द्रिकया कर्तृभूतया जनितः उत्पादितः रूपे स्वरूपे संशयो यस्य तत् तथा। अंशुकस्य चन्द्रिकायाश्च वर्णसाम्यादिदमंशुकमियं ज्योत्स्नेति[1] विवेक्तुमशक्यमित्यर्थः। अंशुकं वसनं मारुते वायौ चलति वाति सति। विपरिवृत्तं विशेषेण परिवृत्तम्। सञ्जातपरिवर्तनमित्यर्थः। इदं च हेतुगर्भं विशेषणम्। केवलशब्दोऽवधारणे। ज्योत्स्नातो भिद्यत इत्यर्थः। कल्पतरुपल्लवभूतानामंशुकानां ज्योत्स्नायाश्च कल्पतरुशाखावलम्बितत्वाद्[2] रूपसाम्याच्चेदमंशुकमियं ज्योत्स्नेति विवेक्तुमशक्यत्वेऽपि वायौ वात्यंशुकानां चलनदर्शनाद् ज्योत्स्नायाश्च तदभावान्मारुतपरिवर्तितस्यांशुकत्वं निश्चीयत इत्यर्थः। हे चण्डि! कोपने! त्वं सावधानं पश्य अवलोकय। अत्र चण्डीति सम्बुद्ध्या तवांशुकपरिवर्तने त्वं कुप्यसीति द्योत्यते। ज्योत्स्नाया अंशुकत्वसाम्ये हेतुमाह—शुद्धयेति। तुषारादिसम्पर्कराहित्यान्निर्मलयेत्यर्थः॥७१॥

**शक्यमङ्गुलिभिरुद्धृतैरधः[3]**
**शाखिनां पतितपुष्पपेशलैः।**

---

१. 'त्स्ना वेति', २. 'खालम्बित्वा' छ. पाठः. ३. 'स्थि' मुद्रितकोशपाठः.

पत्रजर्जरशशिप्रभालवै-
रेभिरुत्कचयितुं तवालकम् ॥ ७२ ॥

(प्रकाशिका)

शक्यमिति । अध इत्यपादानवाचि द्रष्टव्यम् । पेशलैर्मधुरैः । पत्रेति । पत्रैर्विच्छिन्नायाः शशिप्रभाया लेशैः उत्कचयितुं सम्बन्धुम् । 'कच दीप्तिबन्धनयोरि'ति धातुः । एतदपि वाक्यं पूर्ववद् द्रष्टव्यम् ॥७२॥

(विवरणम्)

तरूणां पत्रान्तरालैर्निर्गतानामधःप्रदेशेषु दृश्यमानानां चन्द्रकिरणानामुद्दीपनत्वातिशयमाह —

शक्यमिति । शाखिनाम् अधः अङ्गुलिभिः उद्धृतैः एभिः पत्रजर्जरशशिप्रभालवैः तव अलकम् उत्कचयितुं शक्यम् । शाखिनां वृक्षाणाम् । अधः अधोभागादित्यर्थः । अङ्गुलिभिरुद्धृतैर्गृहीतैः सद्भिः एभिः दृश्यमानैः । पत्रैः वृक्षलतादीनां पर्णैर्हेतुभूतैर्जर्जरैः विच्छेदं गतैरित्यर्थः, शशिनश्चन्द्रस्य प्रभाणामंशूनां लवैर्लेशैः साधनभूतैः । अलकशब्देनात्र केशा एवोच्यन्ते । उत्कचयितुं, 'कच दीप्तिबन्धनयोरि'ति धातुः । बन्धुमित्यर्थः । शक्यं योग्यम् । पत्रविच्छिन्नप्रसराश्चन्द्रकराः शाखिनामधःप्रदेशादङ्गुल्यग्रैरुद्धृत्य तव शिरोरुहबन्धनं कर्तुं युक्ता इति भावः । शशिप्रभाणां शिरोबन्धनयोग्यत्वमेव विशेषणेनोपपादयति — पतितपुष्पपेशलैरिति । शाखिभ्यः पतितानि यानि पुष्पाणि तद्वत पेशलैः सुन्दरैः । मालाकारेण बद्धैरेव हि पुष्पैरनुदिनं तव शिरोबन्धनं क्रियते । इदानीं पुनरेभिरेव कर्तुं युक्तमित्यर्थः । अत्रापि 'शक्यमोषधिपतेर्नवोदयाः' (श्लो० ६२) इतिवत् समस्तोऽयमुपचारप्राणको वाक्यार्थः ॥ ७२ ॥

---

१. 'कान्' मुद्रितकोशपाठः. २. 'न्धयो' क. पाठः.

**एष तारमुखि![1] योगतारया**
**युज्यते[2] तरलबिम्बया शशी।**
**साध्वसादुपगतप्रकम्पया**
**कन्ययेव नवदीक्षया वरः॥ ७३॥**

(प्रकाशिका)

एष इति। यस्यां तारायां चन्द्रस्तिष्ठति, सा योगतारा। तरलबिम्बत्वं प्रातीतिकम्। नवदीक्षया प्रत्यग्रविवाहदीक्षया। अनेन देव्याः प्रथमावस्थास्मारणं नर्माचरति॥ ७३॥

(विवरणम्)

अथ चन्द्रवर्णनमुखेनैव सम्भोगकालप्रत्यासत्तिं भङ्ग्यन्तरेण दर्शयति—

एष इति। तारमुखि! एष शशी तरलबिम्बया योगतारया युज्यते। तारमत्युज्ज्वलं मुखं यस्याः[3] तस्याः सम्बुद्धिरियम्। शशी चन्द्रः। तरलं चञ्चलं बिम्बं मण्डलं यस्याः तया। चञ्चलमण्डलयेत्यर्थः। अत्र मण्डलस्य चञ्चलत्वं प्रातिभासिकम्। नक्षत्रादयो हि दूरावलोकनसमये किञ्चिच्चलन्तीति प्रतीयन्त इति तेषां स्वभावः। इदं च नववधूत्वोपमाने हेतुः। योगतारया। इन्दुर्यस्यां तारकायां तिष्ठति सा योगतारा। युज्यते योगं प्राप्नोति। इन्दुरयमद्यतनसम्बन्धयोग्यया स्वकान्तया तारकया सङ्गच्छ(ती?त) इत्यर्थः। अनेनावयोरपि सम्भोगकालः प्राप्त इति ध्वन्यते। अत्रोपमामाह — वरः साध्वसाद् उपगतप्रकम्पया नवदीक्षया कन्यया इव इति। वरः भर्ता साध्वसाद् अधाष्टर्याद् उपगतः प्राप्तः प्रकम्पः प्रकृष्टः कम्पो वेपथुर्यया तया। नवा प्रत्यग्रा दीक्षा विवाहदीक्षा यस्याः तया। नवोढयेत्यर्थः। यथा वरः साध्वसपरतन्त्रत्वादुपगतवेपथुप्रकर्षया कन्यया सङ्गच्छ(ति?ते) तथायं चन्द्रोऽपीत्यर्थः। अनेन वाक्येन

---

१. 'चारुमु', २. 'ग्य' मुद्रितकोशपाठः. ३. 'स्याः। श', ४. 'न्द्र इत्य' क. पाठः.

देवो देव्याः प्रथमसङ्गमात्र(स्थानक? स्थां न)र्मणा देवीमन्मथोद्दीपनार्थम-
नुस्मारितवानित्यवसेयम् ॥ ७३ ॥

**पाकभिन्नशरकाण्डगौरयो-**
**रुल्लसत्प्रतिकृतिप्रपन्नयोः[1] ।**
**रोहतीव तव गण्डरेखयो-[2]**
**श्चन्द्रबिम्बनिहिताक्षि! चन्द्रिका ॥ ७४ ॥**

(प्रकाशिका)

पाकेति । पाकेन भिन्नं संभिन्नम् । उल्लसन्त्या प्रतिकृत्या चन्द्रप्रतिमया प्रपन्नयोः । पाकेत्यादि चन्द्रिकायाः प्रतिफलने हेतुः । प्रतिफलनाच्चन्द्रप्रतिबिम्बनाच्च चन्द्रिकारोहणोत्प्रेक्षा । चन्द्रबिम्बनिहिताक्षीति समग्रकान्तिभाजनयोरात्मगण्डरेखयोः स्फीतयोर्मुधा चन्द्रं पश्यसि । तदेतावेवादर्शतले पश्येत्युपालम्भपरं सम्बोधनम् ॥ ७४ ॥

(विवरणम्)

अथ देवश्चन्द्रबिम्बादतिमनोहरत्वं देवीवदनस्यैव प्रतिपादयंश्चन्द्रवर्णनमुपसंहरति—

पाकेति । चन्द्रबिम्बनिहिताक्षि! चन्द्रिका तव गण्डरेखयोः रोहति इव । चन्द्रस्य बिम्बे निहिते[3] समर्पिते अक्षिणी यया । अनेन चन्द्राभिमुखावस्थानमुक्तम् । तच्च चन्द्रिकाप्रतिफलने एको हेतुः । समग्रगुणास्पदत्वाद् विजितचन्द्रयोस्तव गण्डरेखयोः सतोः किं मुधा चन्द्रं पश्यसि । आदर्शमादायैते एवावलोकयेत्युपालम्भगर्भेयं सम्बुद्धिः । चन्द्रिका ज्योत्स्ना तव गण्डरेखयोः गण्डप्रदेशयोः रोहणाधिकरणभूतयोः रोहति प्ररोहतीव । चन्द्राभिमुखावस्थितायास्तव गण्डद्वितयाच्चन्द्रिका सततमुद्गच्छतीवेत्यर्थः । चन्द्रि-

---

१. 'कृतिजप्रसादयोः', २. 'ले' मुद्रितकोशपाठः. ३. 'ते अर्पि' क. पाठः.

काप्रतिफलने प्रधानहेतुभूतं गण्डरेखयोरौज्ज्वल्यमाह— पाकभिन्नशरकाण्डगौरयोरिति। पाकेन भिन्नं सम्भिन्नं यच्छरकाण्डं वेणुविशेषदण्डः, तद्वद् गौरयोः। पाकसम्मिश्रं हि शरकाण्डं गौरवर्णं भवति। अत एवोल्लसत्प्रतिकृतिप्रपन्नयोः उल्लसन्त्या शोभमानया प्रतिकृत्या चन्द्रप्रतिमया प्रपन्नयोः प्राप्तयोः। गण्डप्रदेशयोर्निर्मलत्वात् संप्राप्तचन्द्रप्रतिमयोरित्यर्थः॥ ७४॥

**लोहितार्कमणिभाजनार्पितं**
**कल्पवृक्षमधु बिभ्रती स्वयम्।**
**त्वामियं स्थितिमतीमुपस्थिता[1]**
**गन्धमादनवनाधिदेवता॥ ७५॥**

(प्रकाशिका)

एवं काललक्षणमुद्दीपनमुपवर्ण्य उद्दीपनान्तरं प्रस्तौति—

**लोहितेति।** लोहितार्कमणिभाजनं लोहितार्कसदृशं मणिपात्रम्। स्वयं[2] स्वहस्तेन। स्थितिमतीं प्रभावयुक्ताम्। सकलदिव्याङ्गनासेव्यामित्यर्थः। इदञ्च वाक्यं प्रक्रंस्यमानसम्भोगवर्णनप्रसङ्गार्थम्॥ ७५॥

(विवरणम्)

इत्थं सन्ध्याचन्द्रोदयादिरूपमुद्दीपनमुपवर्ण्य मधुपानादिरूपमुद्दीपनं[3] वर्णयितुमुपक्रमते—

लोहितेति। गन्धमादनवनाधिदेवता इयं त्वाम् उपस्थिता। गन्धमादनवनस्याधिदेवता अधिष्ठात्री देवता इयं त्वामुपस्थिता प्राप्ता। अत्र वनान्तरे भवती निवसतीति[4] प्रभावादवधार्य त्वत्सेवार्थमियं गन्धमादनवनदेवता सम्प्राप्ता भवतीत्यर्थः। दर्शनकालोचितामुपदामपि स्वहस्तेनैवेयमुद्धरती-

---

१. 'पागता' मुद्रितकोशपाठः. २. 'यं ह' क. ग. पाठः. ३. 'नमुपव' छ. पाठः. ४. 'ति भा' क. पाठः.

त्याह — कल्पवृक्षमधु लोहितार्कमणिभाजनार्पितं स्वयं बिभ्रती इति। कल्पवृक्षपुष्पसम्भवं मधु मद्यम्। अत्र कल्पवृक्षसम्बन्धान्मद्यस्योत्कर्षातिशयो व्यज्यते। भाजनस्याप्युद्दीपनत्वमाह — लोहितेत्यादि। लोहितः सन्ध्यारागरक्तो योऽर्कः तत्सदृशे मणिभाजने रत्नपात्रेऽर्पितं न्यस्तं सत् स्वयं स्वहस्तेनैव बिभ्रती वहन्ती। कल्पवृक्षमधु रत्नपात्रे निधाय स्वयमेवोद्वहन्तीत्यर्थः। अत्र स्वयमेवोद्धरणमात्मनः कैङ्कर्यं च द्योतयति। देव्याः सकलदेवतान्तरसेव्यत्वे हेतुमाह — स्थितिमतीमिति। स्थितिर्मर्यादास्त्यस्या इति तथा। स्वप्रभावेनैव प्रवर्तितसमस्तलोकमर्यादामित्यर्थः। अनेन त्रैलोक्यवासिनां सर्वेषामपि सेव्यत्वं देव्याः प्रतिपादितम्। इदं च मद्यानयनं करिष्यमाणस्य सम्भोगवर्णनस्य प्रसङ्गार्थमुपात्तम्॥ ७५॥

आर्द्रकेसरसुगन्धि ते मुखं
मत्तमत्तनयनं स्वभावतः।
अत्र लब्धवसतिर्गुणान्तरं
किं विलासिनि! मदः करिष्यति॥ ७६॥

(प्रकाशिका)

आर्द्रेति। आर्द्रकेसरं प्रत्यग्रवकुलम्। वीप्सायां द्विर्वचनम्। मत्तत्वेन मदेऽपि सम्भविनो धर्मा लक्ष्यन्ते। गुणान्तरं स्वभावसिद्धोक्तगुणद्वयव्यतिरिक्तम्। अत्र मधुकार्यत्वेऽप्यार्द्रकेसरसुगन्धित्वस्योपचारान्मदकार्यत्वम्। दक्षिणावर्तस्तु — "मधुरिति वा पाठः। मद्यविशेषवाची पुल्लिङ्गान्तो मधुशब्दोऽस्ती"त्याद्यवोचत्। तदसत्। पूर्ववाक्ये स्वशब्दनिर्दिष्टस्य मधुनोऽत्र तच्छब्देनापरामर्श्यमयुक्त(श्र? त्वात्)। स्वशब्दनिर्देशे वा नापुं-

---

१. 'रक्तन' मुद्रितकोशपाठः. २. 'यस्यांति' घ. पाठः. ३. 'यत्तत्त्व' घ., 'युक्तस्व' ग. पाठः. ४. 'शो' घ. पाठः.

सकः संस्कारो युक्तः। अन्यथा लिङ्गक्रमभेदप्रसङ्गः। पुल्लिङ्गनिर्देशे सति चेदमित्युत्तरवाक्ये परामर्शो न युक्तः। इत्थं पद्यत्रयालोचनयात्र पाठो निर्णेयः ॥ ७६ ॥

(विवरणम्)

इत्थं प्रसङ्गागतं मधुपानमेव चाटुवचनमुखेन परिहरन्नाह—

आर्द्रेति। विलासिनि! ते मुखम् आर्द्रकेसरसुगन्धि। हे विलासिनि! विलासवति!। अनया सम्बुद्ध्या विलासोऽपि तव स्वाभाविकः, न मधुविकारजन्य इति ध्वन्यते। आर्द्रं प्रत्यग्रं यत् केसरं बकुलकुसुमं तद्वत् सुगन्धि। शोभनो गन्धो यस्य तत् सुगन्धि। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः'(५.४.१३५)। मुखसौगन्ध्यं हि मद्यस्य प्रथमं फलम्। तत्तु तव स्वभावसिद्धमेवेति भावः। यत् पुनः (विधिपाक? शीधुपान)समये नयनादौ विशेषतो विलासप्रादुर्भावरूपं फलं, तदपि ते वदनस्य स्वभावसिद्धमेवेत्याह— स्वभावतः मत्तमत्तनयनमिति[1]। स्वभावतः प्रकृत्यैव मत्तमत्तमत्यन्तमत्तं नयनं यस्य तत् तथा। अत्र मत्तशब्देन मधुमदे सम्भावि(ता)नां विलासादिधर्माणां सत्त्वं लक्ष्यते। द्विर्वचनेन च तेषां पूर्णत्वं, स्वभावत इत्यनेन तेषां नित्यत्वं च द्योत्यते। यस्मादितरनारीणां मधुमदसाध्या एते विकारास्तव स्वाभाविकाः, तस्मात् किं तव मधुनेत्याह— अत्र लब्धवसतिः मदः किं गुणान्तरं करिष्यति। अत्र तव मुखे लब्धवसतिः लब्धप्रतिष्ठः मदः मधुमदः किं गुणान्तरं गुणभेदं करिष्यति मधुपानेन तव मुखे लब्धप्रतिष्ठो मदः स्वाभाविकपूर्वोक्तगुणद्वयव्यतिरिक्तं कीदृशं गुणान्तरं विधास्यति। न यादृशतादृशमपि। तस्मात् तव निरुपयोगं मध्विति भावः ॥ ७६ ॥

**मान्यभक्तिरथवा सखीजनः**

**सेव्यतामिदमनङ्गदीपनम्।**

---

१. 'मू। स्व' छ. पाठः.

इत्युदारमभिधाय शङ्कर-
स्तामपाययत पानमङ्गनाम् ॥ ७७ ॥

(प्रकाशिका)

इ(दञ्च वाक्यों[2] मं च वैयर्थ्या)त्मकमाक्षेपं परिहरति —

**मान्येति । अथवा सखीजन[3]भक्तिमात्रमाननात्र गुणान्तरं भविष्यति । तस्मादिदं मधु सेव्यतामित्यर्थः । सखीशब्देन प्रकृता वनदेवता विवक्ष्यते । विशेषणद्वारेणापि गुणान्तरमाह — अनङ्गदीपनमिति । उदारं विदग्धम् । पीयत इति पानं मधु । अपाययत स्वहस्तेनादायेति शेषः ॥ ७७ ॥**

(विवरणम्)

इत्थमाक्षिप्य समादधाति —

मान्येति । अथवा सखीजनः मान्यभक्तिः । अथवेति पक्षान्तरे । तच्च पूर्वोक्तगुणद्वयव्यतिरिक्तगुणान्तरप्रस्तावपरम् । स एव च गुणः सखीजन इत्यादिनोच्यते । सखीशब्देनात्र प्रकृता गन्धमादनवनदेवता विवक्षिता । उपपद्यते च गन्धमादनस्य हिमवत्सन्निहितत्वात् तद्देवतायाः सखीत्वम् । मान्या माननीया भक्तिर्यस्य स तथा । यस्मात् सखीजनभक्तिमानना गुणान्तरं प्रसूते, तस्मात् सेवनीयमिदं मध्विति भावः । अत एवोच्यते — इदं सेव्यतामिति । इदं मधु सेव्यताम् उपयुज्यतामित्यर्थः । पूर्वोक्तगुणद्वयव्यतिरिक्तं गुणान्तरं चास्तीत्याह — अनङ्गदीपनमिति । अनङ्गं मदनं दीपयति वर्धयतीति तथा । मदनोद्दीपनादपि मधु सेव्यमित्यर्थः । इत्थमुपवर्णितं भगवद्वचनमुपसंहृत्यार्थान्तरं प्रस्तौति— शङ्करः इति उदारम् अभिधाय ताम् अङ्गनां पानम् अपाययतेति । इति पूर्वोक्तप्रकारेण उदारं विदग्धं यथा भवति तथा अभिधाय उक्त्वा । वच-

---

१. 'म्बिकाम्' मुद्रितकोशपाठः. २. 'क्यं चात्मकं' ङ. पाठः., 'काञ्चात्मकं क्षे' ग. घ. पाठः., ३. 'नमान' ङ. पाठः. ४. 'तग' छ. पाठः.

नस्योदारत्वमपि शङ्करेत्यनेन सूचितम् । तामङ्गनां पार्वतीम् । पीयत इदमिति व्युत्पत्त्या पानशब्देनात्र मध्वेव विवक्ष्यते । अपाययत पानं कारितवान् । स्वहस्तेनादायेति शेषः । शङ्करः "पद्मकान्तिमरुणत्रिभागयोः" (श्लो० ३०) इत्यरभ्य "सेव्यतामिदमनङ्गदीपनमि"त्यन्तेन काललक्षणमुद्दीपनं देवीचित्तावर्जनं च विधाय मधुपानलक्षणमुद्दीपनमपि वल्लभायाः कृतवानित्यवसेयम् ॥ ७७ ॥

पार्वती तदुपयोगसम्भवां
विक्रियामपि सतीं[1] मनोहराम् ।
अप्रतर्क्यविनियोगनिर्मिता-
माम्रतेव सहकारतां ययौ ॥ ७८ ॥

(प्रकाशिका)

पार्वतीति । विक्रियामपि, विक्रिया हि धैर्यविपर्ययात्मकत्वाद् दोषः । मनोहरामिति दोषस्य गुणीभावः । अप्रतर्क्येति सहकारताया विशेषणम् । अप्रतर्क्योऽचिन्त्यप्रभावो[3] यो विनियोगो मणिमन्त्रौषधकालादियोगः, तेन निर्मिताम् । सहकाराः स्वादुफला आम्राः । दक्षिणावर्तस्त्वाह — "अप्रतर्क्यविनियोगनिर्मितामाकस्मिकफलरसोपयोगकल्पिताम् । अयमर्थः — कस्यचिदाम्रस्य पूर्वप्रतिपन्ना त्वाम्रता कदाचित् स्वादुफलदर्शनेन यथा सहकारतां प्रतिपद्यते, तथे"ति ॥ ७८ ॥

(विवरणम्)

अथ देव्या मधुपानविकारं वर्णयति —

पार्वतीति । पार्वती तदुपयोगसम्भवां ययौ । तस्य मधुनः उपयोगात् पानात् सम्भवो यस्याः ताम् । ययौ प्राप्तवती । मधूपयोगे यत् सम्भवति, तत्

---

१. 'तां', २. 'वि' मुद्रितकोशपाठः. ३. 'स्व' क. ग. पाठः.

प्राप्तवतीत्यर्थः। वक्ष्यमाणविक्रियापेक्षया स्त्रीलिङ्गत्वम्। तामेव निर्दिशति— विक्रियां सतीम् अपि मनोहराम् इति। विक्रियां विकाररूपिणीं सतीमपि मनोहराम्। विक्रिया हि धैर्यविपर्ययात्मकत्वाद् दोषः। तथाभूतां भवन्तीमपि मनोहरामित्यर्थः। नहि विक्रिया कुत्रापि मनोहरा भवति। देव्या मधूपयोगसम्भवा विक्रिया तु न तथेति[1] भावः। देव्यास्तदुपयोगेन तादृशविक्रियाप्राप्तावुपमामाह—आम्रता अप्रतर्क्यविनियोगनिर्मितां सहकारताम् इव इति। ईषत्स्वादुफलश्चूतविशेष इहाम्रशब्देनोच्यते। तस्य भावस्तत्ता। अप्रतर्क्यः अविचिन्त्यप्रभावो यो विनियोगः मणिमन्त्रौषधकालादियोगः, तेन निर्मितां विहिताम्। सहकारताम् अतिस्वादुफलश्चूतविशेषः सहकारः, तस्य भावस्तत्ता, तामिव। यथा मन्दस्वादुफलत्वात् पूर्वमाम्रतामुपगता चूतलता पुनर्मणिमन्त्रयोगादतिस्वादुफलां सहकारतां प्राप्नोति, तथा पार्वत्यपि मधुपानेन पूर्वापेक्षयातिमनोहरां विक्रियामवापेत्यर्थः ॥ ७८ ॥

**तत्क्षणं विपरिवर्तितह्रियो-**
**र्नेष्यतोः शयनमिद्धरागयोः।**
**सा बभूव वशवर्तिनी द्वयोः**
**शूलिनः सुवदना मदस्य च ॥ ७९ ॥**

(प्रकाशिका)

**तत्क्षणमिति। विपरिवर्तिता अपनीता[2] ह्रीर्येन। नेष्यतोः प्रापयिष्यतोः। इद्धो रागो यस्य येन च। तत्क्षणं वशवर्तिनी बभूवेत्यन्वयः[3]। कस्य कस्येत्याह—शूलिन इति। अत्र मदवशत्वं शूलिवशत्वहेतुरवसेयम्[4] ॥ ७९ ॥**

---

१. 'त्यर्थः। दे' छ. पाठः. २. 'ग' क. ग. पाठः. ३. 'त्यर्थः।', ४. 'यः॥' क. पाठः.

(विवरणम्)

मधुपानस्य फलमाह

तत्क्षणमिति । सा सुवदना तत्क्षणं द्वयोः वशवर्तिनी बभूव । सा यै[1]वं कृतपाना । सुवदना शोभनं वदनं यस्याः सा तथा । अनेन मुखशोभाया अपि पूर्वस्मात् किञ्चिदाधिक्यं ध्वन्यते । तत्क्षणं तस्मिन् क्षणे । अनेन मधुपानविकारस्य सद्यःप्रसर उक्तः । द्वयोर्वक्ष्यमाणयोः वशवर्तिनी वशं वर्तितुं शीलमस्या इति तथा बभूव भवति स्म । कस्य कस्य चेत्याकाङ्क्षायामाह — शूलिनः मदस्य च इति । शूलिनः परमेश्वरस्य मदस्य मधुपानजनितस्य विकारस्य । च[2]शब्दः समुच्चयार्थः । अत्र मदवशवर्तित्वं लज्जामपहाय शूलिवशवर्तित्वप्राप्तौ हेतुरित्यवसेयम् । शूलिनि मदे च श्लिष्टं विशेष(ण)[3]त्रयम् । तत्राद्य[4]माह—विपरिवर्तितह्रियोरिति । विपरिवर्तिता अपनीता ह्रीर्याभ्यां तयोः । मदो हि लज्जामपनयति । शूली च तदानीं चाटुशतवचनेन लज्जामपनतिवानित्यनेनोक्तम् । वक्ष्यमाणासु सर्वास्वपि लीलासु लज्जापगमनस्यैव हेतुत्वादिदं विशेषणं पूर्वमुपात्तम् । पुनश्च लज्जापगमनस्य कार्यं द्वितीयेन विशेषणेनाह — शयनं नेष्यतोरिति । शयनं शय्यां नेष्यतोः प्रापयिष्यतोः । मदो हि लज्जामपनीय स्वयमेव शय्यां प्रापयिष्यति, शूली तु करग्रहणादिभिः । लज्जापनये शय्याप्रापणे च रागवृद्धिरेव हेतुरिति तृतीयेन विशेषणेनाह — इद्धरागयोरिति । इद्धः प्रवृद्धः रागो ये[5]न यस्य च तयोः ॥ ७९ ॥

**घूर्णमाननयनं स्खलत्कथं**
**स्वेदबिन्दुमदकारणस्मितम् ।**
**आननेन न तु तावदीश्वर-**
**श्चक्षुषा चिरमुमामुखं पपौ ॥ ८० ॥**

---

१. 'ए' क. पाठः. २. 'कारः स' छ. पाठः. ३. 'द्वयमाह । त', ४. 'द्य वि' क. पाठः. ५. 'ययोः त' छ. पाठः.

(प्रकाशिका)

अत्र मदवशवर्तित्वं वर्णयति —

घूर्णमानेति । चक्षुषेति मदविकारदर्शनसुखमेवान्वभूदित्यर्थः ॥

(विवरणम्)

अत्र मदवशवर्तित्वस्यैव शूलिवशवर्तित्वे हेतुत्वादादौ मदवशवर्तित्वं वर्णयति —

घूर्णमानेति । ईश्वरः तावद् उमामुखं चक्षुषा चिरं पपौ । ईश्वरः त्रयाणां लोकानां नियन्ता । तस्य तावदीदृशी समवस्था । अन्येषां का कथेत्यनेन द्योत्यते । तावत् तस्यामवस्थायाम् । अनेन तादृशावस्थायाः पूर्वावस्थातो व्यतिरेक उक्तः । उमाया मुखम् । अनेन प्रथमसर्गप्रतिपादितं स्वाभाविकमनोहारित्वं ध्वनितम् । चक्षुषा करणभूतेन । चिरं, न तु कञ्चित् कालम् । पपाविति दर्शने पानोपचारः । तेन च यथा तृषितस्य पानं ग्लानिप्रशमप्रमोदादीन् जनयति, तथात्रापीति ध्वन्यते । चक्षुषः करणत्वमात्रमेवात्र विशेष इति द्योतयितुं चक्षुषेत्युक्तम् । अत एव मुखस्य करणत्वं निषेधति — आननेन न त्विति । आननेन वदनेन । तुशब्दोऽत्र विशेषं द्योतयति । अधरपानादिसुखमपहाय देवीवदने मदविकारजनितानतिमनोहरान् विशेषानेवावलोकयन्नतिचिरकालं रेम इति भावः । तदवलोकनस्यैव परमसुखत्वमाह — घूर्णमानेत्यादिभिश्चतुर्भिर्विशेषणैः । घूर्णमाननयनं घूर्णमाने सञ्जायमानकालुष्ये नयने नेत्रे यस्य तत् तथा । स्खलत्कथं स्खलन्ती मदपारवश्यान्मध्ये मध्ये विच्छेदं गच्छन्ती कथा वाक्प्रवृत्तिर्यस्य तत् । असमग्रवर्णपदवाक्यमित्यर्थः । तथैव स्वेदबिन्दुमत् । स्वेदानां स्वेदजलानां बिन्दवः सन्त्यस्मिन्निति तथा । मदविकारजनितस्वेदकणिकालङ्कृतम् । तथा अकारणस्मितम् । अकारणं हेतुशून्यं स्मितं मन्दस्मितं यस्य तत् । एतादृशमुखदर्शनादन्यत् किं सुखसाधनमिति भावः । अत्र मुखविशेषणानां पिपासाविधानाभिप्रायत्वात् परिकरः ॥ ८० ॥

तां विलम्बितपनीयमेखला-
मुद्वहञ्जघनभारदुर्वहाम् ।
ध्यानसंभृतविभूतिभास्वरं
प्राविशन्मणिशिलागृहं हरः ॥ ८१ ॥

(प्रकाशिका)

इत्थं सख्यादिसन्निधौ सम्भोगमुपवर्ण्य विविक्ते तं वर्णयितुं देव्याः शूलिवश-वर्तित्वमाह —

**तामिति । विलम्बितपनीयमेखलां रागवेगविगलितहेमकाञ्चीम् । ध्यानेति ध्यानप्रभावसंपादितरतोपकरणम् ॥ ८१ ॥**

(विवरणम्)

एवं तावत् सख्यादिसन्निधौ सम्भोग उक्तः । अथ विविक्तरतं वर्णयितुं देव्याः शूलिवशवर्तित्वमाह —

**तामिति** । हरः ताम् उद्वहन् मणिशिलागृहं प्राविशत् । हरः परमेश्वरः तां पार्वतीम् । उद्वहन् स्वहस्ताभ्यामादरातिशयादुद्धृत्येत्यर्थः । मणिमयीभिः शिलाभिर्निर्मितं गृहं सुरतगृहं प्राविशत् प्रविष्टवान् । अत्र मणिशब्देन नित्योज्ज्वलत्वं ध्वनितं, तेन च प्रदीपनिराकाङ्क्षत्वम् । "रत्नाङ्कुरा यत्र रतिप्रदीपाः" इत्यादिवत् । देव्या रागातिशयमाह — विलम्बितपनीयमेखलामिति । विलम्बिनी रागवेगवशात् पदे पदे विगलनशीला तपनीयमेखला हेमकाञ्ची यस्याः ताम् । रागो हि स्त्रीणां जघनगतं काञ्चीदुकूलादिकं विगालयतीति कामशास्त्रप्रसिद्धम् । उद्धृत्य गमने देव्या जघनगौरवाद् देवेनापि दुर्वहत्वमाह — जघनभारदुर्वहामिति । जघनभारेण दुर्वहां देवेनापि दुःखेन वोढुं शक्यामित्यर्थः । ननु वनान्तरे कथं

---

१. 'रीश्वरः प्रा', 'रहः ॥' मुद्रितकोशपाठः.

सुरतोपकरणसम्भवोपपत्तिरिति किं मणिशिलागृहप्रवेशेनेत्याशङ्क्य मणिशिला-गृहं विशिनष्टि—ध्यानसम्भृतविभूतिभास्वरमिति । ध्यानेन ध्यानमात्रेण सम्भृताभिः सम्पादिताभिः विभूतिभिः सुरतोपकरणैः भास्वरं शोभनशीलम् । प्रभावमात्रनिर्मितरतोपकरणशोभमानमित्यर्थः ॥ ८१ ॥

**तत्र हंसधवलोत्तरच्छदं**
**जाह्नवीपुलिनचारुदर्शनम् ।**
**अध्यशेत शयनं प्रियासखः**
**शारदाभ्रमिव रोहिणीपतिः ॥ ८२ ॥**

(प्रकाशिका)

तत्रेति । अत्र शयनरचनायाः प्रधानाङ्गत्वात् तद्वैशिष्ट्यं वर्णितम् । तदुक्तं मुनिना—"सुकृतमुभयोपधानं मध्ये विनतं शुक्लोत्तरच्छदं बद्धवितानं शयनीयं स्याद्" इति ॥ ८२ ॥

(विवरणम्)

इत्थं सुरतगृहं प्रविष्टस्य देवस्य शयनीयप्राप्तिमाह—

तत्रेति । सः तत्र प्रियासखः हंसधवलोत्तरच्छदं शयनम् अध्यशेत । तत्र मणिशिलागृहे । प्रियायाः सखा । दयितया सहेत्यर्थः । हंसाः श्वेतगरुतः । 'हंसास्तु श्वेतगरुत' इत्यमरः । हंसवद् धवलम् उत्तरच्छदम् आच्छादन-वसनं यस्य तत् शयनं शय्याम् अध्यशेत अधिरुह्याशेत । 'अधिशीङ्स्थासां कर्म' (१.४.४६) इति अधिशब्दयोगाच्छयनस्य कर्मत्वम् । परमेश्वरो दयितया सह मणिशिलागृहे सिततमायां शय्यायामशेतेत्यर्थः । अत्रोपमामाह—रोहिणीपतिः शारदाभ्रम् इव इति । रोहिणीपतिश्चन्द्रः । अत्र रोहि-

१ 'न्ध' क. पाठः.

णीपतिशब्देन रोहिण्या सहेत्ययमर्थो ध्वन्यते। शारदं शरत्कालभवम्। अभ्रं मेघः। यथा चन्द्रः प्रियतमया रोहिण्या सह शारदाभ्रमधिशेते, तथेत्यर्थः। शारदाभ्रं हि श्वेततरं भवति। शयनशरदभ्रयोः साधारणं धर्ममाह—जाह्नवीपुलिनचारुदर्शनमिति। जाह्नव्या गङ्गायाः पुलिनं सैकतम्। 'तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमि'त्यमरः। तद्वच्चारु मनोहरं दर्शनं यस्य तत्। पुलिनं हि सर्वासामपि नदीनां श्वेतं भवति। किं पुनरतिश्वेतसलिलाया जाह्नव्या इति द्योतयितुं जाह्नवीपदोपादानम्। अत्र बहुषु रतोपकरणेषु सत्स्वपि तेषु शय्याया एव प्रधानोपकरणत्वस्य कामशास्त्रप्रसिद्धिस्तन्मात्रवर्णने हेतुरित्यवसेयम्। यदाह वात्स्यायनः—"सुक्लसमुभयोपधानं मध्ये विनतं शुक्लोत्तरच्छदं बद्धवितानं शयनीयं स्याद्" इति॥ ८२॥

क्लिष्टचन्द्रमदयैः[1] कचग्रहै-
रुत्पथार्पितनखं समत्सरम्।
तस्य तच्छिदुरमेखलागुणं
पार्वतीरतमभूदतृप्तये[2]॥ ८३॥

(प्रकाशिका)

क्लिष्टेति। उत्पथार्पितनखं शास्त्रीयनियमोल्लङ्घिनखकर्म। तदुक्तं—"रतिचक्रे प्रवृत्ते तु नास्ति शास्त्रं न च क्रमः।" इति। समत्सरं कलहरूपत्वात् सुरतस्य। तदुक्तं—"कलहरूपं सुरतमाचक्षत" इति। मत्सरेण च कृतप्रतिकृतादि[3] द्योत्यते, यद् वधूरते दुर्लभत्वेन प्रागुक्तम्। तदुक्तं—

"कृते प्रतिकृतं कुर्याच्चुम्बिते प्रतिचुम्बितम्।
करणेन च तेनैव ताडिते प्रतिताडितम्॥"

---

१. 'केशमवल्लमचन्दनं व्यत्ययार्पि', २. 'भ तृ' मुद्रितकोशपाठः. ३. 'ते प्र' क. पाठः

इति। अयं च प्रागुक्तवधूरतविपर्ययः, प्रौढमन्मथरसत्वेन नायिकाया गाढरागत्वात्। अतृप्तये औत्सुक्याय ॥ ८३ ॥

(विवरणम्)

अथ रतमेव वर्णयति —

क्लिष्टेति। तस्य तत् पार्वतीरतम् अतृप्तये अभूत्। तस्य परमेश्वरस्य तत् लोकोत्तरगुणविशिष्टत्वादवाङ्मानसगोचरं पार्वत्या रतं सुरतम् अतृप्तये। अत्रत्योऽयमतृप्तिशब्दो न तृप्त्यभावमात्रवाची, किन्तु अधर्मादिवद् विपरीतवाची। औत्सुक्यायाभवदित्यर्थः। औत्सुक्यकरत्वमेव प्रतिपादयति चतुर्भिर्विशेषणैः। तत्रादौ[2] रतस्य पूर्वावस्थामाह—अदयैः कचग्रहैः क्लिष्टचन्द्रम् इति। अदयैः निर्दयैः। रागपारवश्यादनधिगतशारीरमार्दवैरित्यर्थः। कचग्रहैः[3] केशग्रहणैः। चुम्बनादिषु सम्भवद्भिरित्यर्थः। क्लिष्टः परिमृदितः चन्द्रः परमेश्वरकोटीरघटितो बालचन्द्रः येन तत् तथा। अथ द्वितीयामवस्थामाह — उत्पथार्पितनखमिति। उत्पथमित्यर्पणक्रियाविशेषणम्। उत्पथमुल्लङ्घितकामशास्त्रक्रमं यथा भवति तथार्पितानि नखानि येन तत् तथा। शास्त्रीयक्रमोल्लङ्घिनखव्यापारमित्यर्थः। इयं च रतस्य परिपूर्णावस्था। तादृश्यां शास्त्रक्रमानादरोऽपि कामशास्त्रप्रसिद्धः। यथोक्तं—"रतिचक्रे प्रवृत्ते तु नास्ति शास्त्रं न च क्रमः" इति। पुनश्च ततोऽप्यधिकोत्कर्षे सति तृतीयं विशेषणं—समत्सरमिति। सुरतस्य कलहरूपत्वान्मत्सरसहितमित्यर्थः। कलहरूपत्वमपि सुरतस्य कामशास्त्रप्रसिद्धम्। "कलहरूपं हि सुरतमाचक्षत" इत्युक्तत्वात्। मत्सरशब्देनात्र कृतप्रतिकृतादिकं द्योत्यते। तदुक्तं —

"कृते प्रतिकृतं कुर्याच्चुम्बिते प्रतिचुम्बितम्।
करणेन च तेनैव ताडिते प्रतिताडितम्॥"

---

१. 'त्॥' ङ. पाठः. २. 'दौ त', ३. 'कचग्र' क. पाठः.

इति। अनेन वचनेन "दुर्लभप्रतिकृतं वधूरतम्" (श्लो० ८) इत्यत्र वधूरते यद् दुर्लभत्वेन पूर्वमुक्तं, तत् सर्वमिदानीं प्रौढतया गाढरागायां नायिकायां सुलभमासीदिति द्योत्यते । रतेरन्त्यावस्थामाह — छिदुरमेखलागुणमिति । छिदुरः स्वयमेवच्छेदनशीलः मेखलागुणः काञ्चीकलापो यत्र तत् तथा । बहुविधकरणभेदभाविनामायासानामसहनतया सञ्छिन्नमेखलाकलापमित्यर्थः ॥ ८३ ॥

केवलं प्रियतमादयालुना
ज्योतिषामवनतासु पङ्क्तिषु ।
तेन तत्परिगृहीतवक्षसा
नेत्रमीलनकुतूहलं कृतम् ॥ ८४ ॥

(प्रकाशिका)

तत्र विशेषमाह —

केवलमिति । अतृप्तेनापि देवेन केवलं रतक्लान्तामुरसि शयितां प्रियां दयमानेन गलितमायायां (रजन्यां) शयनादरः कृत इत्यर्थः । अत्र केवलशब्देनास्य वाक्यस्य पूर्ववाक्येनैकवाक्यता द्योत्यते। अस्ति चास्यैवैतच्छाया कवेरुक्तिः "अद्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः" (शाकु० अङ्क० २. श्लो० १४) इति ॥ ८४ ॥

(विवरणम्)

यद्यपि तथाविधं पार्वतीरतं देवस्य तृप्तये न बभूव, तथापि विशेषोऽस्तीत्याह —

केवलमिति । ज्योतिषां पङ्क्तिषु अवनतासु तेन केवलं प्रियतमादयालुना नेत्रमीलनकुतूहलं कृतम् । ज्योतिषां नक्षत्राणां पङ्क्तिषु समूहेषु अवनतासु अत्युज्ज्वलत्वाभावादत्युन्नतां स्थितिमपहाय किञ्चिदानतस्वरूपत्वेन लक्ष्यमाणासु । अनेन प्रभातकालप्रत्यासत्तिरुक्ता । तेन परमेश्वरेण

१. 'त्प्रतिगृ' मुद्रितकोशपाठः.

केवलं प्रियतमायां देव्यां दयालुना दयाशीलेन नेत्रयोर्निमीलने कुतूहलं कौतुकं कृतम् । गलितप्रायायां रजन्यां यदत्र देवेन नेत्रनिमीलनादरः कृतः, तत्र सुरतक्लान्तायां देव्यां दयालुत्वमेव केवलं हेतुः, न तु देव्यास्तत्तादृशमारवीरमहोत्सवानुभवे तृप्तिरिति भावः । यद्यपि देवस्य तत्तादृशं पार्वतीरतं न तृप्तये बभूव, तथापि केवलं प्रियतमायां दयालुतया देवेन शयनादरः कृत इति पूर्वश्लोकेन सहैकवाक्यत्वमस्य श्लोकस्यात्रत्यः केवलशब्दः प्रतिपादयति । देवस्य नेत्रनिमीलनप्रस्तावे देव्याः समवस्थां देवविशेषण(प्र ?)मुखेन दर्शयति — तत्परिगृहीतवक्षसेति । तया देव्या परिगृहीतं स्वीकृतं वक्षः उरःप्रदेशो यस्य तेन । अनेन सुरतक्लान्ताया देव्या देवस्योपरि शयनमुक्तम् ॥ ८४ ॥

**स व्यबुध्यत बुधस्तवोचितः**
**शातकुम्भकमलाकरैः समम् ।**
**मूर्छनापरिगृहीतकैशिकैः**
**किन्नरैरुषसि गीतमङ्गलः ॥ ८५ ॥**

(प्रकाशिका)

स इति । बुधानामध्यात्मशास्त्रविदां स्तवस्योचितः । यतस्त एव सकलतत्त्वातीतमेनं जानन्ति । अन्ये तु लोकसामान्यं जानीयुः । तान् प्रति वास्तवोऽयं परमेश्वरे रागिव्यवहारः । शातकुम्भेति विशेषणं मानसस्य सरसः प्रत्यासन्नत्वात् । वक्ष्यति च "रचितमानसोर्मयः"(श्लो०८६) इति । सममिति सहोक्तिः । मूर्छनया परिगृहीतः कैशिको रागविशेषो यैः । मूर्छनालक्षणे भरतः—"क्रमयुक्ताः स्वराः सप्त मूर्छना परिकीर्तिता" इति । गीतानि मङ्गलान्यात्मचरितानि यस्य । परमेश्वरचरितमेव हि परमं मङ्गलम् ॥ ८५ ॥

---

१. 'या' ङ. पाठः.

(विवरणम्)

इत्थमनुभूतवल्लभासुरतस्य निद्रासुखमभिनयतो देवस्य प्रबोधावस्थां वर्णयति—

स इति । सः उषसि शातकुम्भकमलाकरैः समं व्यबुध्यत । शातकुम्भं सुवर्णम् । "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भमि"-त्यमरः । शातकुम्भमयानि[1] कमलानि शातकुम्भकमलानि तेषामाकराः शातकु-म्भकमलाकराः मानसादयः । मानसस्य सरसो गन्धमादनप्रत्यासन्नत्वादेवमु-क्तम् । अत एव 'रचितमानसोर्मयः' इति वक्ष्यति । सममिति सहार्थ-मव्ययम् । 'साकं सार्धं[2] समं सहे'त्यमरः । व्यबुध्यत प्रबुद्धोऽभूत् । य एवं सुरतमनुभूय प्रसुप्तः, सः[3] आत्मपर्यन्तवर्तिभिर्मानसादिपद्माकरैः सार्धं प्रबु-द्धोऽभूदित्यर्थः । समं व्यबुध्यतेति सहोक्तिरलङ्कारः । यत् पुनरनेन प्रकरणेन परमेश्वरे रागित्वोपवर्णनं कृतं, तन्न परमार्थतया मन्तव्यमित्याह — बुधस्तवो-चित इति । बुधानामध्यात्म[4]शास्त्रविदां स्तवस्य स्तुतेरुचितः योग्यः । स्वरूप-ज्ञानाधीना हि स्तुतिः । परमेश्वरस्य स्वरूपज्ञानं तु सकलोपनिषदर्थतत्त्वाव-धारणेन मृदितकषायाणामेव सम्भवति, नान्येषामिति तेषामेव स्तुतेरयमु-चितः । तस्मात् परमेश्वरस्य न सकलजनसाधारणं रागित्वं, भक्तानुग्रहा-र्थमारोपितमेवेति भावः । अथ लौकिकलोकोत्तरनायकानुगुणां प्रभात-समयोचितां स्तुतिं वर्णयति — मूर्छनेत्यादिना । किन्नरैः गीतमङ्गलः । किन्नरैः किम्पुरुषैः । किन्नराणामेव स्वरमाधुर्यप्रसिद्धेः किन्नरपदोपादानम् । गीतानि मङ्गलान्यात्मचरितानि यस्य स तथा । परमेश्वरचरितमेव हि परमं मङ्गलं, 'मङ्गलानां च मङ्गलमि'त्युक्तत्वात् । प्रभातसमयोचितं रागविशेषं च दर्शयति — मूर्छनापरिगृहीतकैशिकैरिति । अत्र मूर्छनालक्षणं भरते-नोक्तं— "क्रमयुक्ताः स्वराः सप्त मूर्छना परिकीर्तिते"ति । कैशिकः प्रभातका-लोचितो रागविशेषः । मूर्छनया परिगृहीतः स्वीकृतः कैशिको यैस्तैः ॥ ८५ ॥

---

१. 'नि येषां ते' क पाठः. २. 'सत्रा स', ३. 'स वर आ' ङ. पाठः. ४. 'त्मवि' क. पाठः.

तौ क्षणं शिथिलितोपगूहनौ
दम्पती रचितमानसोर्मयः।
पद्मभेदपिशुनाः सिषेविरे
गन्धमादनवनान्तमारुताः ॥ ८६ ॥

(प्रकाशिका)

तावििति । शिथिलितोपगूहनौ, स्वेदापनयनार्थम् । भेदो विकासः । विशेषणाभ्यां शीतत्वं पद्मसुरभित्वं चोक्तम् । गन्धमादनसम्बन्धेन नानाकुसुमसौरभयोग उक्तः । तौ दम्पती सिषेविर इत्यनेन कस्तन्मिथुनं सर्वात्मना न सेवेतेति ध्वन्यते । अर्थान्तरन्यासध्वनिश्चायम् ॥ ८६ ॥

(विवरणम्)

अथ प्रभातवातानामपि तादृशमिथुनसेवां वर्णयति —

तावििति । गन्धमादनवनान्तमारुताः तौ दम्पती क्षणं सिषेविरे । अत्रत्योऽयमन्तशब्दः स्वरूपवाची । गन्धमादनपर्वते ये वनान्ताः वनप्रदेशाः तत्रत्या मारुताः तौ दम्पती तत्तादृशौ जायापती । अनेन सर्वजनसेव्यत्वं ध्वनितम् । क्षणं क्षणकालम् । अनेन सेवायास्तादृशावसरप्राप्तिरुक्ता । सिषेविरे सेवितवन्तः । गन्धमादनवायवो देवयोः सुरतश्रममपनीतवन्त इत्यर्थः । अत्र गन्धमादनशब्देन बहुविधमहाकुसुमसौरभ्यशालित्वमुक्तम् । तादृशमारुतसेवासमये देवयोस्तदनुरूपां प्रवृत्तिमाह — शिथिलितोपगूहनाविति । शिथिलितं मन्दीकृतम् उपगूहनमालिङ्गनं याभ्यां तौ तथा । शरीरगतस्वेदजलापनयनार्थं परित्यक्तगाढालिङ्गनावित्यर्थः । आलिङ्गनस्य सर्वात्मना परित्यागाभावस्तु रागवशादित्यवगन्तव्यम् । शैत्यमान्द्यसौरभ्यशालिनामेव मारुतानां सुखकरत्वादेतेषां तद्योगित्वमाह — रचितेत्यादिना विशेषणद्वयेन । तत्र शैत्यं

१. 'चलित' मुद्रितकोशपाठः. २. 'तलत्वं', ३. 'नि', ४. 'सश्रा' ङ. पाठः.

मान्द्यं चाह — रचितमानसोर्मय इति । रचितो निर्मितो मानसस्य मानस-सरसः ऊर्मयः कल्लोला यैस्ते तथा । अत्र मानसोर्मिरचनया परिश्रान्तत्वा-न्मान्द्यम् ऊर्मिसम्बन्धेन शैत्यं च द्योत्यते । सौरभ्यमाह — पद्मभेदपिशुना इति । पद्मानां कमलानां भेदस्य विकासस्य पिशुनाः सूचकाः । 'पिशुनौ खल-सूचकावि'त्यमरः । पद्मसौरभ्यशालित्वात् प्रभातसमयभाविनां पद्मविकासानां सूचका इत्यर्थः । अत्र तौ दम्पती सिषेविर इत्यनेन तादृशं मिथुनं के न सेवेरन्निति ध्वन्यते । अर्थान्तरन्यासध्वनिश्चायम् ॥ ८६ ॥

**ऊरुमूलनखमार्गराजिभि-**
**स्तत्क्षणं हृतविलोचनो हरः ।**
**वाससः प्रशिथिलस्य संयमं**
**कुर्वतीं प्रियतमामवारयत् ॥ ८७ ॥**

(प्रकाशिका)

पुनरप्यनुपशान्तरागस्य यूनो वृत्तं वर्णयति —

**ऊरुमूलेति । नखमार्गराजिभिर्नखपदरेखाभिः । संयमं बन्धम् । तद्वारणं नखपददिदृक्षया रिरंसया च ॥ ८७ ॥**

(विवरणम्)

इत्थं बहुविधेषु सुरतेषु विहितेष्वप्यशान्तरागस्य कामिनो वृत्तं वर्णयति ऊरुमूलेत्या-दिभिस्त्रिभिः श्लोकैः —

ऊरुमूलेति । हरः तत्क्षणं प्रशिथिलस्य वाससः संयमं कुर्वतीं प्रियतमाम् अवारयत् । हरः परमेश्वरः तत्क्षणं तस्मिन् क्षणे प्रशिथिलस्य पूर्वं सुरतावसानसमये वेष्टितस्यापि प्रियतमाङ्गसङ्गवशात् पुनरपि प्रकर्षेण शिथिलस्य गलितस्य वाससः वसनस्य संयमं वेष्टनं कुर्वतीं विदधतीं

१. 'तौ दम्पती के' छ. पाठः.

प्रियतमां दयिताम् अवारयत् निवारितवान् । प्रभातसमये दयिताया वसनपरिधानमवारयदित्यर्थः । वारणे हेतुमाह — ऊरुमूलनखमार्गराजिभिः हृतविलोचन इति । ऊर्वोर्मूले ये नखमार्गाः नखपदानि तेषां राजिभिः रेखाभिः । 'रेखास्तु राजय' इत्यमरः । हृतविलोचनः हृतानि विलोचनानि यस्य स तथा । ऊरुमूलगतनखपदप्रेक्षणकुतूहलादित्यर्थः । अनेन रिरंसाया अनुपरमो ध्वन्यते ॥ ८७ ॥

स प्रजागरकषायलोचनं
गाढदन्तपद[1]दारिताधरम् ।
आकुलालकमरंस्त रागवान्
प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥ ८८ ॥

(प्रकाशिका)

स इति । अत्र विशेषणानां चतुर्णामप्येकैकं परमपुद्दीपनम् । अत एव रागवान् अतिशयितरागोऽरंस्त ॥ ८८ ॥

(विवरणम्)

उदीर्णरागस्य कामिनः सुरतपरिश्रमपिशुनं प्रियतमावदनमपि सुतरां मन्मथोद्दीपनमासीदित्याह —

स इति । सः प्रियामुखं प्रेक्ष्य अरंस्त । प्रियाया दयिताया मुखं प्रेक्ष्य विलोक्य अरंस्त रेमे । परमेश्वरः प्रभातप्रायायामपि रजन्यां दयितामुखकमलावलोकनेनैव रेम इत्यर्थः । प्रियतमामुखस्य तदानीं मन्मथोद्दीपनत्वातिशयमाह — प्रजागरेत्यादिभिश्चतुर्भिर्विशेषणैः । प्रजागरकषायलोचनम् । प्रजागरेण प्रकृष्टेन जागरेण कषाये कलुषिते लोचने नयने यस्य तत् । निद्राभावकलुषितकान्तविलोचनमित्यर्थः । पुनश्च गाढदन्तपददारिताधरं गाढेन मग्नेन दन्तपदेन दन्तव्रणेन दारितं क्षतम् अधरं(?) यस्य तत् । दशनव्रण-

---

१. 'रिताडिता' मुद्रितकोशपाठः.

रमणीयाधरमित्यर्थः । तथा आकुलालकम् । आकुलाः कचग्रहणादिभिर्व्या-कुलसन्निवेशाः अलका यस्य तत् । तथा च भिन्नतिलकम् । भिन्नः स्वेदादि-भिरर्धे विशीर्णः तिलको यस्य तत् । अत्र चतुर्णामपि विशेषणानामेकै-कमप्युद्दीपनं, किं पुनरेकत्र मेलनमिति भावः । अत एवाह — रागवानिति । अतिशायने मतुप् । अतिशयितराग इत्यर्थः । प्रतिक्षणविजृम्भमाणाभिलाष इति भावः ॥ ८८ ॥

**तेन भङ्गविषमोत्तरच्छदं**
**मध्यपिण्डितविसूत्रमेखलम् ।**
**निर्मलेऽपि शयनं निशात्यये**
**नोज्झितं चरणरागलाञ्छितम् ॥ ८९ ॥**

(प्रकाशिका)

तेनेति । भङ्गस्तरङ्गः । निम्नत्वान्मध्ये पिण्डिता समूहीकृता वि-सूत्रा मेखला यत्र । निर्मले तमोरहिते । अत्र शयनविशेषणैश्चित्ररतानि सूच्यन्ते । तानि च रघुवंशप्रकाशिकायां दर्शितानि ॥ ८९ ॥

(विवरणम्)

किञ्च, पूर्वातीतचित्ररतपिशुनं शयनीयमपि कामिनो (मनो) जहारेत्याह —

तेनेति । निशात्यये निर्मले अपि तेन शयनं नोज्झितम् । निशात्यये प्रभातसमये निर्मले । तमोविरहित इत्यर्थः । अपिशब्देन शयनमोचनस्य का-लातिपातः सूचितः । तेन परमेश्वरेण शयनं नोज्झितं न परित्यक्तम् । प्रभा-तवेलायां तमोविरहितायामपि तेन कामिना शयनतलमेवावलोक्य कञ्चित् काल-मास्थितमित्यर्थः । शयनीयस्य पूर्ववृत्तचित्ररतसूचकत्वादिति भावः । चित्ररत-सूचकत्वमेवाह — भङ्गविषमोत्तरच्छदमित्यादिना विशेषणत्रयेण । भङ्गस्त-

१. 'भिन्न वि' मुद्रितकोशपाठः.

रङ्गः, तेन पादाघातादिवशाज्ञातेन तरङ्गाकारेण संस्थानविशेषेण विषमः निम्नोन्नतः उत्तरच्छदः आच्छादनवसनं यस्य तत् तथा। अत्रोत्तरच्छदस्य निम्नोन्नतत्वप्रतिपादनेन बहवो रतविशेषाः सूचिताः। संविष्टरतमुपविष्टरतमुत्थितरतं चेति त्रिविधा हि करणविशेषाः सङ्क्षेपतः कामशास्त्रप्रसिद्धाः। तत्रैकैकस्यापि करणस्य बहवो भेदाः। ते तु विस्तरभयान्न लिख्यन्ते। तथा मध्यपिण्डितविसूत्रमेखलम्[1]। मध्ये मध्यप्रदेशे पिण्डिता समूहीकृता विसूत्रा सूत्ररहिता मेखला रशना यत्र तत् तथा। शयनीयस्य मध्यभागो हि निम्नो भवतीति प्रागेवोक्तम्। सूत्रप्रोतानां मेखलानां सूत्रे सुरतभेदेन भग्ने सति शयनीयस्य मध्यभागे समूहीभूयावस्थानमनेन दर्शितम्। तेन च विष्णुविक्रमाख्यं रतं सूचितम्। तत्तु गजरतादिषद्भेदभिन्नम्। एवं हि रतिरहस्ये गजरतस्य लक्षणमुक्तं—

"गूहितस्तनभुजास्यमस्तकामुन्नतस्फिचमधोमुखीं स्त्रियम्।
क्रामति स्वकरघृष्टमेहने वल्लभे करिवदैभमुच्यते॥"

इति। विष्णुविक्रमाख्यं तु तस्मादीषद्भेदाभिन्नम्। यथात्रैव[2] "योषिदेकचरणे समुद्धृते जायते च हरिविक्रमाह्वयम्" इति। एवंविधे सुरते मेखलाभङ्गः कथं न जायेतेति भावः। तथा (च?) चरणरागलाञ्छितम्। चरणे पादे यो रागः अलक्तकरसः, तेन लाञ्छितम् अङ्कितम्। अनेन धेनुकं रतं विवक्षितम्। यथोक्तं रतिरहस्य एव—

"न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढवल्लभा।
अग्रतो यदि शनैरधोमुखी धैनुकं वृषवदुन्नते प्रिये॥"

इति। एते च करणभेदा अनुक्तानामपि करणविशेषाणामुपलक्षणत्वेन प्रतिपादिताः। एतादृशसुरतभेदपिशुनं शयनतलं कथं कामिना परित्यज्यत इति भावः॥ ८९॥

---

१. 'लमिति। म' क. पाठः. २. 'था तत्रै' छ. पाठः.

**स प्रियामुखरसं दिवानिशं**
**तर्ष[1]वृद्धिजनकं[2] सिषेविषुः ।**
**दर्शनप्रणयिनामदृश्यता-**
**माजगाम विजयानिवेदितः[3] ॥ ९० ॥**

(प्रकाशिका)

रागस्य धारावाहित्वमाह —

**स** इति । तर्षस्तृष्णा । दर्शनप्रणयिनां देवेन लोकतन्त्रेऽधिकृतानां ब्रह्मादीनां विजयानिवेदितोऽप्यदृश्यतां यदाजगाम, तदपि ब्रह्मादिमनीषितानुसारेण कुमारमुत्पादयिष्यतो देवस्य लीलाविजृम्भितं लोकतन्त्रनिर्वाहार्थमेव, यतोऽसौ रागादिभिरपरामृष्टः । तदुक्तं कैश्चित् — "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" (पातञ्जल० योग० पा० १. सू० २४) इति । एतदेवोक्तं 'विदितं वो यथा' (स० ६. श्लो. २६) इत्यादिप्रकरणे देवेनैव । अयं चाभिसन्धिर्देवस्य सर्वत्रात्र प्रकरणे न विस्मर्तव्यः, अन्यथा तूत्तमदेवतासम्भोगवर्णने ध्वनिकारोक्त[4]मनौचित्यं जागृयात् । 'अनौचित्यादृते नान्यद् रसभङ्गस्य कारणमि'ति च तेनैवोक्तम् । देवाभिसन्धौ तु स्मर्यमाणे दूरीभवत्येवानौचित्यविलसितम् । परमार्थबुद्धावेव ह्यनौचित्यान्वेषः संभवति । नहीन्द्रजालविलसितं जानानस्य गन्धर्वनगरं विस्मयाय । ननु रागित्वस्यापरमार्थबुद्धौ कथं शृङ्गारः प्राणिति । मा प्राणितु । चमत्कारश्च प्राक्प्रतिपादितेन जगद्रक्षणोद्यमात्मना वीरेणैवाङ्गिना रसेन सिद्धः । चमत्कारे च सिद्धे किं शृङ्गारनिबन्धेन । यथा श्रीमद्भागवतादौ गोपीभिः सह भगवतः सम्भोगवर्णने विदितपरमार्थानामनुसन्धातॄणां न कश्चिच्छृङ्गारावेशः, किन्तु

१. 'ह', मुद्रितकोशपाठः. २. 'नं', ३. 'दनात् ॥' मुद्रितकोशपाठः. ४. 'रेणोक्त' क. ग. पाठः.

जगद्रक्षणोद्यमात्मकवीरावेधो यस्तद्विषयायास्तेषां भक्तिपर्यायाया(या) रतेरुद्दीपकः, तथात्रापि द्रष्टव्यम्। किञ्च एवंविधे विषये यदनौचित्यं, तत् कविशक्त्या तिरोहितत्वाद् ग्राम्यत्वेन न प्रतिभासत इति ध्वनिकार उक्तवान्। तत्राभिनवगुप्तपादैर्व्याख्यातं—"शक्तितिरस्कृतत्वादि'ति। सम्भोगशृङ्गारोऽप्यसौ वर्णितस्तथा प्रतिभानवता कविना, यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति। यथा निर्व्याजपराक्रमस्य पुरुषस्याविषयेऽपि युध्यमानस्य तावत् तस्मिन्नवसरे साधुवादो वितीर्यते, न तु पौर्वापर्यपरामर्शे, तथात्रापीति भावः" इति। तत्र यः पौर्वापर्यपरामर्शोऽनौचित्यप्रतिभासहेतुः, स एवास्माकमपि परमेश्वरे रागराहित्यप्रतिभासहेतुः सन्ननौचित्यं व्यावर्तयति। तर्हि ध्वनिकारोक्तस्य संभोगवर्णनानौचित्यस्य कोऽवकाश इति चेद्, अस्त्येवावकाशः इन्द्रादावुत्तमदेवतान्तरे। तत्र च रागस्य वस्तुतः संभवेऽपि लोकमहनीयत्वात् तत्सम्भोगवर्णनं पित्रोः सम्भोगवर्णनमिव लज्जातङ्कादिना चमत्कारभङ्गहेतुः सम्पद्यत इति सर्वं सुस्थम्॥ ९०॥

(विवरणम्)

इत्थं प्रवृद्धो रागः कदाचिदपि न विच्छिन्नः, किन्तु धारारूपेणैव सर्वदापि प्रवृत्तोऽभूदित्याह—

स इति। सः दर्शनप्रणयिनाम् अदृश्यताम् आजगाम। दर्शने प्रणयः प्रार्थना[2] अस्त्येषामिति तथा। भगवता लोकतन्त्रे नियुक्तानां ब्रह्मादीनामिति अर्थात् सिध्यति। अदृश्यो द्रष्टुमशक्यः तस्य भावस्तत्ता ताम् आजगाम प्राप्तोऽभूत्। दिवानिशमन्तरेव विहरन्नयमात्मदर्शनार्थिनां ब्रह्मादीनामपि दर्शनं न वितताराेत्यर्थः। ननु किं दर्शनदानाभावे तदर्थिनां ब्रह्मादीनामागमस्यौ[3]विज्ञानमेव हेतुः, नेत्याह—विजयानिवेदित इति। अपिशब्दोऽत्राध्याहार्यः।

१. 'या र' क. ग. पाठः. २. 'ना येषां तेषा' क. पाठः. ३. 'स्याज्ञा' छ. पाठः.

विजयया देवीप्रियवयस्यया विज्ञापितोऽपीत्यर्थः । अनेन देवीसखीनामेवान्तः-प्रवेशयोग्यतापि ध्वन्यते । दर्शनदानाभावे हेतुमाह — दिवानिशं प्रियामुख-रसं सिषेविषुः इति । दिवानिशं सततमित्यर्थः । प्रियामुखे यो रसः अधरामृतं, तं सिषेविषुः सेवितुमिच्छुः । प्रियामुखरससेवाभिलाषस्य सन्ततप्रवृत्तत्वादि-त्यर्थः । सन्ततप्रवृत्तौ हेतुमाह — तर्षवृद्धिजनकमिति । तर्षस्तृष्णा, तस्य वृद्धिर्वर्धनं, तस्य जनकमुत्पादकम् ॥ ९० ॥

**समदिवसनिशीथं सङ्गिनस्तत्र शम्भोः**
**शतमगमदृतूनां[1] सार्धमेका निशेव ।**
**न[2] च[3] सुरतसुखेषुच्छिन्नतृष्णो[4] बभूव**
**ज्वलन इव समुद्रान्तर्गतस्तज्जलेषु[5] ॥ ९१ ॥**

(प्रकाशिका)

इत्थं रागिजनाचार्यकमाचरतो योगेश्वरस्य तत्रातिप्रसङ्गत्वमाह —

समेति । दिवसस्य निशीथतुल्यत्वं कार्यान्तरविमुखत्वात् । तत्र तस्य ऋतूनां सार्धं शतमित्यनेन वत्सराणां पञ्चविंशतिर्गतेत्युक्तम् । इदं च मानुषमानेनेति दक्षिणावर्तः । स नाम कियान् कालो देवानाम् । अनेन चतुर्णां पुरुषायुषभागानामेको भागोऽनीयतेति प्रतीयते । समुद्रा-न्तर्गतो ज्वलनो बाडवः । तस्य यथा जलतृष्णा वर्धते, तथा देवस्याप्या-रोपिता विषयतृष्णा ववृध इत्यर्थः । उपमानेन तु यथा बाडवोऽग्निः कालान्तरे समुद्रं शोषयति, तथा देवोऽपि विषयतृष्णोपलक्षितानां मा-याकार्याणामत्यन्तोच्छेदहेतुरिति कविर्व्युत्पाद्यं जनं प्रत्याययति । अयं च शिवयोः संभोग उत्तरसर्गार्थस्य कुमारसम्भवस्य प्रस्तावकतयात्रोक्तः ।

---

१. 'म्र', २. 'स च सुरतसुखेषूद्भिन्न' कोशान्तरपाठः. ३. 'तु', ४. 'भ्य श्छिन्न', ५. 'लौघैः ॥' मुद्रितकोशपाठः. ६. 'यत्कालो' छ. पाठः.

स एव ह्यत्र प्रबन्धे कार्यभूतः। ननु देवानां मन्त्रिते तारकवध उद्देश्यतया दृश्यते। ततस्तस्यैव प्रबन्धकार्यत्वमङ्गीकार्यम्। उच्यते। परमोद्देश्यत्वेऽपि तारकवधोऽत्र प्रबन्धे न कार्यम्। तथाहि—कार्यं नाम वाक्यार्थविशेषः, येनावच्छिन्नं पदजातं प्रबन्ध इति व्यपदिश्यते। तच्चात्र कुमारसम्भवः। ततश्च तेन व्यपदेशः काव्यस्य शिशुपालवध इतिवत्। तारकवधस्तु तत्प्रस्तावकतयात्र निमित्तभूत उपक्षिप्तः, यथा किरातार्जुनीये दुर्योधनजयः। निमित्तस्यैव वाक्यार्थत्वे 'चर्मणि द्वीपिनं हन्ती'त्यत्रापि चर्मलाभस्य वाक्यार्थत्वं स्याद्, न तु द्वीपिहननस्य। ननु कार्येण सता नायकलाभेन भवितव्यम्। कुमारसम्भवश्च लोकरक्षार्थो लोकतन्त्राधिकृतानां ब्रह्मादीनामेव लाभः। परमपरिपूर्णयोः परमेश्वरयोः स कीदृशो लाभः। नैवम्। तयोरपि लीलया दयया वा ब्रह्मादिभिरधिकृतैर्लोकं तन्त्रयतोः स्वयं च लोकवृत्तमनुकुर्वतोरुपदिशतोश्च स लाभ एव। तर्ह्यारम्भादिभिः कार्यावस्थाभेदैर्नायकगतैर्भवितव्यम्। तदुक्तम्—'अवस्थाः पञ्च कार्यस्ये'त्यादिना। ते चात्र नायकगता न लक्ष्यन्ते, किन्तु ब्रह्मादिगताः। नैवम्। कुमारस्य सम्भूतये खलु योगविसृष्टदेहा सतीदेवी हिमवद्भवनेऽवतीर्णा। तत्प्रत्यासत्तये देवोऽपि गौरीशिखरे तप आतिष्ठत्। देवानामारम्भस्तु तत्संघटनार्थः। सर्वत्र ह्याधिकारिकवृत्तोपकारिणा प्रासङ्गिकवृत्तेन भूयते। तच्च दर्शितं 'सोऽहं तृष्णातुरैर्वृष्टिम्'(स०६.श्लो.२७)इत्यादिना। ननु यदि देवैरभ्यर्थ्य परिणयने देवः प्रवर्तितः, तत् किमर्थोऽयं कामवृत्तान्तः कविनोपन्यस्तः। देवीतपश्चर्यामूलत्वेन तस्योपयोगः। तथा च दर्शितं—'तथा समक्षं दहता मनोभवम्'(स०५.श्लो०१)इत्यादिप्रकरणे। ननु यदि लोकार्थं परिणयने प्रवृत्तो देवः, तत् किमर्थमनुमतोऽस्य देव्यास्तपश्चर्याक्लेशः। तत्रायमभिप्रायो देवस्य—नाहं कथञ्चिदपि केनापि तपसा विना लभ्य इति लोकस्य

---

१. 'काय वि' क. ग. पाठः.

विदितमस्त्वाति । किञ्च विशिष्टपरिभवो न पथ्य इति प्रथयितुं कामदाहः कृतो देवेन । 'तपः परमं श्रेय' इति ख्यापयितुं तप आस्थितम् । सर्वोपकारक्षमं गार्हस्थ्यं श्रेय इत्युपदेष्टुं[1] परिणयनमङ्गीकृतम् । एवं नानाविधात्र प्रबन्धे पुरुषार्थव्युत्पत्तिर्भवतीत्यत्रसेयम् ॥ ९१ ॥

ये वाक्यार्थविचारकर्कशधियो ये वा रसस्रोतसि
स्वेच्छामज्जनकेलिषु व्यसनिनो ये वा शिवौ[2] संश्रिताः ।
ते निर्मत्सरमावधानमनसो मत्कां मनोहारिणीं
संगृह्णन्तु कुमारसम्भवसमुद्बोधाय टीकामिमाम् ॥

इत्यरुणगिरिनाथविरचितायां कुमारसम्भवप्रकाशिकायाम्

अष्टमः सर्गः ।

---

(विवरणम्)

इत्थं रागिजनपदवीमवतीर्णस्य परमेश्वरस्य तत्रैवातिप्रसक्तिमाह —

समेति । तत्र सङ्गिनः शम्भोः ऋतूनां सार्धं शतम् एका निशा इव अगमत् । तत्र तस्यां पार्वत्यां सङ्गः सक्तिरस्यास्तीति सङ्गी तस्य शम्भोः । ऋतूनां वसन्तादीनामृतूनां सार्धम् अर्धसहितं शतं पञ्चाशदुत्तरं शतम् एका निशेव एका रात्रिरिव अगमद् अत्येति स्म । इत्थं देवीगुणगणाक्षिप्तचित्तस्य देवस्य वसन्तादीनाम् ऋतूनां पञ्चाशदुत्तरं शतम् एका रात्रिरिव सद्य एवातीतमभूदिति भावः । ऋतुशतस्यैकनिशोपमानेन सद्यःप्रयातत्वप्रतीतिरुक्ता । तत्र हेतुः तत्र सङ्गिन इत्यनेनोक्तः । ऋतूनां सार्धं शतमिति । अयमर्थः — एकस्मिन् वत्सरे हि षड् ऋतवः । तथा च सति वत्सराणां पञ्चविंशतिर्गतेत्युक्तं

---

१. 'वमेव ना' ङ. पाठः.  २. 'वे' ङ. पाठः.

भवति। ते च देवसंवत्सरा इत्यर्थादायाति। कार्यान्तरमपहाय कामुकसरणिमेव देव एतावन्तं कालमुररीचकारेति दर्शयितुम् ऋतुशतं विशिनष्टि — समदिवसनिशीथमिति। दिवसश्च निशीथश्च दिवसनिशीथौ। निशीथोऽर्धरात्रः। 'अर्धरात्रनिशीथौ द्वावि'ति सिंहः। तेन च त्रियामाया मध्यमो भागो लक्ष्यते। स हि शास्त्रेषु सुरतविहितः कालः। दिवसो वासरः। समास्तुल्या दिवसा निशीथाश्च यत्र। अत्र दिवसस्य निशीथतुल्यत्वप्रतिपादनेन कार्यान्तरेष्वनादर उक्तः। अत एव 'दर्शनप्रणयिनामदृश्यतामाजगाम' (श्लो० ९०) इत्युक्तम्। तथैव तादृशे काले गतेऽपि सुरततृष्णा न शशामेत्याह — सुरतसुखेषु छिन्नतृष्णः न बभूव च इति। सुरते यानि सुखानि तेषु छिन्ना विच्छिन्ना तृष्णा औत्सुक्य यस्य तथाभूतो न बभूव। छिन्नतृष्णत्वप्राप्तिसम्भावनायां सत्यामपि नच्छिन्नतृष्णो बभूवेति चशब्देनोच्यते। ननु चिरकालनिषेवणे कथं न तृष्णोपशमः इतीमामाशङ्कामुपमया परिहरति — समुद्रान्तर्गतः ज्वलनः तज्जलेषु इव इति। समुद्रस्यान्तर्भागं गतः ज्वलनः अग्निः। बाडवाग्निरित्यर्थः। तज्जलेषु तस्य समुद्रस्य जलेष्विव। यथा सन्ततपीतसमुद्रजलस्य बडवानलस्य जलतृष्णा वर्धते, तथा देवस्यापीति भावः। अत्र देवस्य बाडवोपमया यथा बाडवाग्नेः समुद्रजलतृष्णा न स्वतोऽस्ति, किन्तु द्रष्टृजनप्रतीतिमात्रसिद्धा, तथा देवस्य विषयतृष्णापीति ध्वन्यते। इदं च शिवयोः सम्भोगवर्णनं कुमारसम्भवस्योपक्षेपार्थं कृतम्। कुमारसम्भव एव हि प्रबन्धसाध्य इति पूर्वमेवोक्तम्। ननु प्रबन्धे यत् साध्यं, तेन नायकलाभभूतेन भवितव्यम्। यथा युधिष्ठिरविजयादौ दुर्योधनजयादयः। अत्र तु कुमारोत्पत्तिरिन्द्रादीनामेव कार्यं पुष्णाति, तस्यास्तारकासुरनिग्रहफलत्वात्। परिपूर्णस्य परमेश्वरस्य कुमारोत्पत्त्या तारकनिग्रहणेन वा न कमपि लाभं पश्यामः। मैवम्। लीलया जगत्सर्गस्थितिसंहारव्यापृतस्य परमेश्वरस्यापि जगद्रक्षणजागरूकत्वोपपत्तेः। एवमेव मायापरपर्यायायास्तच्छक्तिभूताया देव्या अपि तदनुविधानोपपत्तिः समर्थनीया। ननु,

"अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥"

(दशरू० प्र० १. श्लो० १९)

इत्युक्ताः कार्यावस्थाभेदा नात्र नायकगता लक्ष्यन्ते । आरम्भो ह्यत्र देवानामेव । 'तस्मिन् विप्रकृताः काले तारकेण दिवौकसः' (स० २. श्लो० १) इत्युक्तत्वात् । मैवम्

"अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥"

(स० १. श्लो० २१)

इत्यत्र जगद्रक्षणार्थं कुमारोत्पत्तिकामाया देव्या हिमवद्भवनावतारस्योक्तत्वात् । देवोऽपि तत्प्रत्यासत्त्यर्थमेव हिमवत्प्रस्थे तपश्चक्रे । इन्द्रादीनामारम्भस्तु तयोः सङ्घटनार्थमेव, यथा शाकुन्तलादौ सखीप्रभृतीनाम् । अस्मिन् काव्ये महाकविना देवयोस्तपश्चरणप्रतिपादनेन तपसः सकलपुरुषार्थसाधनत्वं प्रतिपादितम् । महाजनपरिभवः समूलनाशाय भवतीति व्युत्पादयितुं कामदहनवृत्तान्त उपवर्णितः । सर्वोपकारक्षमं गार्हस्थ्यमेव परमं श्रेय इति दर्शयितुं विवाहवर्णनं कृतम् । देवस्य भक्तवश्यतां प्रतिपादयितुमष्टमसर्गे देव्या अनुवृत्तिः प्रतिपादिता । इत्थमस्मिन् काव्ये बहवः पुरुषार्था महाकविना प्रतिपादिता इत्यूहनीयमिति सर्वं सुमङ्गलम् ॥ ९१ ॥

सर्गोऽयं चरमो गुणैरचरमः सम्भोगलीलायितं
शम्भोरत्र हि वर्ण्यते कवयिता श्रीकालिदासः स्वयम् ।
व्याख्या तद्विषयेयमद्य जगतां हासाय सञ्जायते
सन्तस्त्वत्र तथाप्यणूनपि गुणानास्वादयेयुर्ध्रुवम् ॥

वैदेहीनवसङ्गचम्पुरचनादक्षस्य नारायण-
क्ष्मादेवस्य कृतौ गिरीशगिरिजाभक्तिप्रवृद्धोदये ।
व्याख्यानेऽत्र कुमारसम्भवपदार्थालोचनप्रक्रिया-
निष्णाते मधुरोऽष्टमोऽयमगमत् सर्गो निसर्गोज्ज्वलः¶ ॥

काली च नीलकण्ठश्च तत्परौ दत्प्रिये सदा ।
तेनेयं रचिता व्याख्येत्यत्र को नाम विस्मयः ॥

माता काली पिता वा पदनतविबुधो नीलकण्ठश्च यस्य
भ्राता तु श्रीकुमारः स खलु निखिलमप्युत्थितं विघ्नजातम् ।
निघ्नन् विघ्नेशकल्पः कृतविवृतितरिर्दुस्तरं कालिदासा-
दुद्भूतं काव्यरत्नाकरमिममकरोद् बाललीलानुकूलम् ॥

बहुप्रलापप्रमुखेषु भूरिषु
स्फुटेषु दोषेष्विह सम्भृतेष्वपि ।
गुणाः क्वचित् केचन सन्ति चेदिमान्
पिबन्तु भूयिष्ठगुणा महाजनाः ॥

समस्तलोकोपकृतौ कृतोद्यमो
य एवमालक्षितसर्वलक्षणः ।
स्फुटं समाचष्ट कुमारसंभवं
नमामि तं देशिकवर्यमादरात् ॥

---

१. 'बत चाष्ट' क. पाठः

---

¶ इत उत्तरं क. पुस्तके —

"वन्दे महास्तिन्दुककाननान्तवेशन्तवेश्म स्फटिकावदातम् ।
आलोकतो यस्य जलाशयोऽपि हन्तोष्णतां विन्दति बिन्दुतां च ॥"

इत्ययमेक एव श्लोको दृश्यते ॥

श्वेतग्रामवनाह्वये मुररिपोरारामभूते वरे
ग्रामे यः पुरुषोत्तमः समुदभूत् ख्यातः कवीनां पदे ।
पुत्र्यास्तस्य सुतः स्वमातुलमुखादापीतकौमारत-
न्त्राम्भोधिप्रभवामृतो रचितवानेतत् स नारायणः ॥

इति श्रीकृष्णशिष्यस्य नारायणस्य कृतौ
कुमारसम्भवविवरणे
अष्टमः सर्गः ।

---

शुभं भूयात् ॥

# श्लोकानुक्रमणी ।